इत्याचार्य श्री हेमचन्द्रविरचितेत्रिषष्ठि शलाकापुरुषचरिते महाकाव्ये सप्तमेपर्वणि
अन्वयात्मकगद्यरचनायांजयचक्रवर्तिचरितवर्णनो नाम त्रयोदशः सर्गः समाप्तः ।

रामलक्ष्मणदशानना नमिस्तीर्थकृच्च हरिषेणचक्रभृत् ॥
चक्रभृच्चजय इत्यमुत्र षट् वर्णिताः श्रुतिसुखाय संतु वः ॥ १ ॥

समाप्तं चेदं पर्व

सुरमसाधयत् भुवि देवोऽपि चक्रवर्तिने नालम् । सः पश्चिमांभोधौ गत्वा क्षिप्तेनैकेन बाणेन लीलया प्रभासाधीश्वरं सुरं वशीचक्रे ततोऽपरः सिन्धुराज इव सुरवरोपमः सः सिन्धुं वैताढयाद्रिकुमारं सुरं चासाधयत् । अथ सः स्वयं कृतमालाभिधं सुरं वशीचक्रे सेनान्या तु महानद्याः सिन्धोः पश्चिमनिष्कुटं वशीचक्रे । यथाविधि तमिस्रां प्रविश्य निरीय च महाभुजः सः आपातनाम्नः किरातान्निर्जिगाय । सः सेनान्या सिन्धोःपश्चिमं निष्कुटं विजित्य च देवविक्रमः सः हिमवत्कुमारं वशीचक्रे । सः ऋषभकूटे काकिण्याऽऽत्मनोऽभिधां लिखित्वा चलितः सः सेनान्या प्राचीनं गांगं निष्कुटमजयत् । स्वयं गंगां साधयित्वा विद्याधरेश्वरान् जित्वा खंडप्रपाताद्वारस्थं नाटयमालमसाधयत् । सः खंडप्रपातागुहया वैताढयान्निर्जगाम सेनान्या चाशु गांगं प्राचीननिष्कुटमसाधयत् । गंगायामावासितस्य तेऽथ गंगामुखस्थिता नैसर्पाद्या नवापि निधयो वशेऽभवन् अथ संपूर्णचक्रिश्रीः सः निजंपुरमाजगाम देवैर्नृपैश्चास्य चक्रित्वाभिषेकश्चक्रे । अखंडितपराक्रमः सः षट्खंडां पृथ्वीं बुभुजे क्रमेण भवोद्विग्नः सः परिव्रज्यामाददे एवं जयस्य कौमारे वत्सराणां शतत्रयं मंडलित्वे तदेव ककुभां जये त्वब्दशतम् चक्रिसंपदि वर्षाणामेकोनविंशतिशती व्रतकाले तु चत्वारि संवत्सरशतान्ययुः ।

समासहस्रत्रयमायुरात्मनः स पूरयित्वा परिपाल्य च व्रतम् ॥
घातिक्षयाविष्कृतकेवलो ययौ कैवल्यमक्षीणसुखास्पदं जयः ॥ २९ ॥

## अथ त्रयोदशः सर्गः

### ( जयचक्रिचरित्रम् )

नमे र्भगवतस्तीर्थे समुत्पन्नस्य जयिनो जयस्य चक्रिणः पुण्यं चरित्रमिदमुच्यते । अस्यैव जंबुद्वीपस्यैरावते श्रीपुरे पुरे नाम्ना वसुंधर इति ख्यातो वसुंधराधिपतिरभूत् । सः पद्मवत्या प्रेयस्योद्विग्नमानसो विनयंधरं तनयं राज्ये निवेशयामास । मनोहरवने वरधर्ममहामुनेः पार्श्वे तत्वं श्रुत्वा प्रतिबुद्धः सः परिव्रज्यामुपाददे । सः चिरकालं यथावद् परिव्रज्यामपालयत् विपद्य सप्तमे कल्पे देवभूयमियाय च । इतश्च मगधपुरमंडनं श्रियामेकं कुलगृहं स्वःपुर्यां सोदरमिव राजगृहं पुरमस्ति । तत्रेक्ष्वाकुवंशप्रभवो न्यायवर्त्मनः प्रभवो विजयी विजयो नाम पृथिवीपतिरभूत् । तस्य शीलशालिनी रूपलावण्यसंपदा भूगता कापि देवीव वप्राभिधाना महिष्यभूत् । काले गच्छति सति तस्याःकुक्षौ शुक्रात्परिच्युतो वसुन्धरमहीपालजीवः सोऽवततार । तस्यां धनुर्द्वादशकोन्नतिश्चतुर्दशस्वप्नसूचितः कांचनछविर्जयो नाम सूनुर्जज्ञे । पित्रा राज्येऽभिषिक्तश्चान्यदा तस्यायुधगृहे प्रथमं चक्रिलक्षणं चक्ररत्नं समुत्पेदे । तथा छत्रं मणिर्दण्डो निस्त्रिंश श्चर्मकाकिणी एवं सप्त तस्यैकेन्द्रियाणि तु जज्ञिरे । पुरोधोगृहिहस्त्यश्वसेनानीवर्धकिस्त्रियः पंचेन्द्रियाण्येवं तस्य सप्त रत्नानि जज्ञिरे । सः दिग्यात्रार्थमनुचक्रं पूर्वं पूर्वाब्धिमभ्यगात् तत्र च मागधतीर्थकुमारं वशंवदं चक्रे । ततो निवृत्य याम्याब्धौ सः वरदामपतिं

पुण्यानुभावतो नवापि निधयः स्वयं सिध्यन्ति स्म । अथ श्रीपुरंदरः सः संपूर्णचक्रवर्तिश्रीर्जितषट्खंडभारतः कांपील्यपुरमाजगाम । तस्य दैवै र्नरैरपि चक्रित्वाभिषेकश्चक्रे द्वादश वत्सरान् यावत् पुरे महोत्सव आसीत् । सकलेऽपि हि भरते भूपालैः पाल्यमानाज्ञः सः महाभुजो धर्माविबाधया भोगान् बुभुजे । अन्येद्युः शिव-त्रज्योत्सवोत्सुको भवाद्विरक्तः सः लीलया राज्यमुत्सृज्य परिव्रज्यामुपादत्त । हरिषेणस्य कौमारे सपादाब्दश-तत्रयी मंडलित्वेऽपि सैवाथ जये सार्धमब्दशतम् । चक्रभृत्वे पुनरष्टौ सहस्राणि शताष्टकम् पंचाशच्च व्रतकाले पुनः सार्धं शतत्रयमगात् ।

वर्षायुतायुः परिपाल्य सम्यक् तीव्रं व्रतं घातितघातिकर्मा ।
उत्केवलज्ञान इयाय नित्यसुखं पदं तद्धरिषेणचक्री ॥ ३२ ॥

इत्याचार्य श्रीहेमचन्द्रविरचिते त्रिषष्टि शलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि अन्वयात्मक गद्यरचनायां हरिषेणचक्रवर्तिचरित वर्णनो नाम द्वादशः सर्गः समाप्तः ॥ १२ ॥

जीवोऽपि तस्याः कुक्षाववातरत् । काले सा हेमाभं हरिषेणाभिधं सुतमसूत पञ्चदशधनूच्छ्रायः सः युवराज्ये-
ऽभ्यषेचि । पैतृकं राज्यं शासतः भाज्यभुजौजसस्तस्यान्येद्युरस्त्रशालायां चक्ररत्नमजायत । तस्य पुरोधो वर्धकि-
गृहिसेनानीप्रभृतीन्यत्यानि. त्रयोदशरत्नानि क्रमाज्जज्ञिरे । चक्रमार्गानुगः सः प्राच्यां मागधे तीर्थे गत्वा
दिग्जयादौ मागधतीर्थकुमारमसाधयत् । अथ दक्षिणस्यामुपेत्य महाभुजः सः दक्षिणांभोधिवर्तिनं वरदामपतिं
देवं वशीचक्रे । भूस्थितो बिडौजा इवाखंडौजाः सः वारुण्यां दिश्युपेत्य प्रभासाधिपतिं सुरमसाधयत् । अथ
दिक् सिंधुरपराक्रमो दशमश्चक्रभृत्सः सिन्धुं महानदीमेत्य क्रमाद्वशंवदी चक्रे । दिक्साधनपंडितः सः ततो
वैताढ्यमभिसृत्य विधिना वैताढ्याद्रिकुमारकं साधयामास । अथ कृती सः स्वयं कृतमालामरमसाधयत् पश्चाच्च
सेनापतिना पश्चिमं सिन्धुनिष्कुटमसाधयत् । ततः सः वामान्यकुंभविन्यस्तमणिरत्नेन कुंभिना सेनान्युद्घाटित-
द्वारां तमिस्रां प्रविवेश.। पद्यया चोन्मग्नानिमग्ने उत्तीर्य काकिणीरत्नलिखितमंडलो द्योतितांतराम् तामलंघयत् ।
स्वयमुद्घाटितद्वारा. तस्या विनिर्ययौ तानापातसंज्ञान् स्वच्छंदान् म्लेच्छांश्चाजयच्च । सेनान्या आज्ञापयच्च
सिंधोः पश्चिमनिष्कुटं गत्वा स्वयं क्षुद्रहिमवत्कुमारमजयत् । ऋषभकूटे काकिण्या स्वनामालिख्य संचलन्
सेनान्या गांगं साधयत्पूर्वनिष्कुटं जगाम । उभयश्रेणिवर्तिभि र्विद्याधरै र्दत्तदंडोऽथस्वयमपरं नाट्यमालं च
साधयामास । सेनान्योद्घाटितां खंडप्रपातां गुहां प्राविशत् चक्रानुगश्चक्रवर्ती सः पूर्ववन्निर्जगाम च । सेनान्या
प्राचीननिष्कुटं गांगं साधयामास ततः सः वसुधाधीपः स्वयमावासयामास । गंगामुखमागधवासिनस्तस्योत्कृष्ट

लक्षेषु व्यतिक्रान्तेष्वजायत ।

निर्वाणकल्याणमुपेत्य तत्र गीर्वाणनाथास्त्रिदशैः समेताः
शरीरसंस्कारपुरःसरं श्रीनमेरकार्पुः सपरिच्छदस्य ॥ ११२ ॥

इत्याचार्य श्री हेमचन्द्रविरचिते त्रिषष्टिशलाका पुरुषचरिते महाकाव्ये सप्तमे पर्वणि
अन्वयात्मकगद्यरचनायां नमिनाथ चरितवर्णनो नामैकादशः सर्गः

## अथ द्वादशः सर्गः

### ॥ श्री हरिषेण चक्रि चरितम् ॥

इतश्च नमिनाम्नि जिनेश्वरे विहरत्येव हरिषेणश्चक्र्यभवत् तस्य चरितं कीर्त्यते । इहैव भरतेऽनन्ततीर्थे नरपुरे पुरे नरेष्वभिरामो नराभिरामो नृपोऽभूत् । क्रमेण च भवोद्विग्नः सः परिव्रज्यां प्रपद्य सनत्कुमारकल्पे परमर्धिकोऽमरोऽभूत् । इतश्च पंचालदेशाकल्पः ऋद्धिभिः स्वःकल्पं परैरकम्प्यं कांपील्यमिति प्रवरं पुरमस्ति । तस्मिन्नोजसा हरिरिवेक्ष्वाकुवंशतिलको भुवि विश्रुतो महाहरि र्नाम राजा बभूव । तस्य रूपेणालंकृतमहीतला शीलालंकरणा स्मेराम्बुजानना नाम्ना मेरा महिष्यभूत् । चतुर्दशमहास्वप्नाख्यातश्चक्रधरर्द्धिको नराभिराम-

अप्रमत्त मुक्तिवेश्मनो निःश्रेणीं गुणश्रेणीमधिरोढुं परानंदलताकंदानिति मनोरथान् कुर्यात् । अप्रमत्त
मुक्तिवेश्मनो निःश्रेणीं गुणश्रेणीमधिरोढुं परानंदलताकंदानिति मनोरथान् कुर्यात् । भर्तुरिमां देशनां श्रुत्वा
इत्यहोरात्रिकीं चर्यां समाचरन् यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुध्यति । भर्तुरिमां देशनां श्रुत्वा
इत्यहोरात्रिकीं चर्यां समाचरन् यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुध्यति । जगद्भर्तुर्देशनान्ते कुंभो देशनां व्यधित
बहवो जनाः प्राव्रजन् तत्र कुंभादयः सप्तदश गणधरा अभवन् । जगद्भर्तुर्देशनान्ते कुंभो देशनां व्यधित
तद्देशनान्ते शक्राद्या ईशं नत्वा स्वं पदं ययुः । तत्तीर्थजन्मा भृकुटिर्यक्षस्त्र्यक्षश्चतुर्मुखः स्वर्णवर्णो वृषरथश्चतुभिर्द-
क्षिणे भुजै धृतमातुलिंगशक्तिमुद्गराभयदैर्युतो वामैःपुनर्नकुलकपर्शुवज्राक्षसूत्रिभिर्युतः । तथैव देवी गांधारी
श्वेतांगी हंसवाहना वरदखड्गिभ्यां दक्षिणाभ्यां दोर्भ्यां विराजिता । बीजपुरिभ्यां वामाभ्यां बाहुभ्यामुपशो-
भिता नमे र्भर्तुरित्युभे शासनदेवते अभूताम् । ताभ्यामप्रमुक्तसान्निध्यो विभु र्नवमासोनिते सार्धे द्वे सहस्रे
वसुंधरां विजहार । अथप्रभोः साधूनां विंशतिः सहस्राण्यभूवन् व्रतीनां पुनरेकचत्वारिंशत् सहस्रमप्यभूत् ।
चतुर्दशपूर्वभृतां सार्धशतचतुष्टयमवधिज्ञानभाजां तु षट्शताधिकं सहस्रमभूत् । मनःपर्ययशालिनां षष्ट्यग्रा-
द्वादशशती केवलधारिणां पुनः षोडशशतानि । जातवैक्रियलब्धीनां पंच संख्यया सहस्रा तथा वादलब्ध्युप-
शोभिनामेकं सहस्रम् । श्रावकाणां सप्ततिः सहस्राण्येकं लक्षं च श्राविकाणामष्टचत्वारिंशत्सहस्रयुक् त्रिलक्ष्यभूत् ।
अथ प्रभु र्मोक्षकालं ज्ञात्वा संमेताद्रिमगान्मुनिसहस्रेण सममनशनञ्च प्रत्यपादि । मासान्ते वैशाखकृष्णदश-
म्यामश्विनीयुजि तैर्मुनिभिः समंस्वाम्यव्ययं पदं प्रपेदे । नमिप्रभुः कौमारेऽब्दानां सार्धौ सहस्रौ राज्ये तु ते
पञ्च सहस्रा व्रतेच सार्धौ सहस्रौ चेत्ययुतायुरभूत् । मुनिसुव्रतनिर्वाणात् श्रीनमिप्रभो र्निर्वाणं वर्षाणां षट्सु

ततश्च संध्यासमये पुनर्देवार्चनं कृत्वा कृतावश्यककर्मोत्तमं स्वाध्यायं कुर्यात् । ततो देवगुरुस्मृतिपवित्रितः प्रायेणाब्रह्मवर्जको न्याय्ये कालेऽल्पां निद्रामुपासीत । निद्राच्छेदे योपिदंगसतत्वं महात्मनां पुनानां हि तन्निवृत्ति परामृशन् परिचिन्तयेत् । यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताश्चर्मभसेविकाः स्नायुस्यूताः स्त्रियो वहिरेव रम्याः सन्ति । स्त्रीशरीरस्य वहिरन्तर्विपर्यासश्चेद्भवेत्तस्यैव कामुको गृध्रगोमायुगोपनंकुर्यात् । कामः स्त्रीशस्त्रेणापि चेज्जगदिदं जिगीपति तर्हि मूढधीः सः तुच्छपिच्छमयं शस्त्रं किं वादत्ते । संकल्पयोनि-नाऽनेन हहा विश्वं विडंवितं चेत्तदस्यमूलं संकल्पं [1]दुःखनामीति चिन्तयेत् । यो यो दोषो वाधकः स्यात् तस्य तस्य दोपस्य दोपमुक्तेपु यतिपु प्रमोदं व्रजन् प्रतिक्रियां चिन्तयेत् । सर्वजीवेपु स्थेम्ना दुःस्थां भवस्थितिं चिन्तयन् तेपु निसर्गमपवर्गं विमार्गयेत् । यत्र जिनो देवः कृपा धर्मः साधवो गुरवः को विमूढधी स्तस्मै न श्लाघेत । चक्रवर्त्यपि जिनधर्मविनिर्मुक्तो माभूवं चेटोऽपि दरिद्रोऽपि जिनधर्माधिवासितः स्याम् । त्यक्तसंगो जीर्णवासा मलक्लिन्नकलेवरो माधुकरीं वृत्तिं भजन् मुनिचर्यां कदा श्रये । दुःशीलसंसर्गं त्यजन् गुरुपादरजः स्पृशन् योगमभ्यस्यन् कदाहं भवच्छिदे प्रभवेयम् । पुराद् वहि र्महानिशायां प्रकृतकायोत्सर्गं मयि वृषास्तंभवत्स्कंधकषणं कदा कुर्युः । वने पद्मासनासीनं क्रोडस्थितमृगार्भकं मां जरन्तो मृगयूथपाः कदा वक्त्रे घ्रास्यंति । शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि मोक्षे भवे च निर्विशेषमतिः कदा भविष्यामि ।

[1] दलन करोमि

प्रणश्यंति । देहभाजस्त्वद्दर्शनाच्छनैः निंश्रेणिमिव मोक्षस्य गुणस्थानमालिकामधिरोहंति । हे स्वाऽमिन् ! येन प्रकारेण स्मृतः श्रुतः स्तुतो दृष्टो ध्यातो नमस्कृतस्तेन प्रकारेण शर्मणे भवसि । हे स्वामिन् ! नः पूर्वपुण्यानि पुण्यानुबंधीनि खलु यदसाधारणगतिप्रदो यस्त्वं दृग्गोचरं नीतः मम स्वर्गराज्यादि सर्वतो यथा तथाऽस्तु नाम परंतु हे नाथ ! त्वद्देशनागिरो मे हृदयाज्जातु मा यान्तु। इति स्वामिगुणस्तोत्रं विधाय हरौ विरते सति जगत्त्रयगुरुरिमां धर्मदेशना प्रकरोत् । संसारः खल्वसारः धनं चलदूर्मिचलं शरीरमपि विद्युद्विलाससदृशं नश्वरमस्ति । तस्माद्विचक्षणः सर्वथा तेष्वनास्थां विधाय मुमुक्षु र्मोक्षवर्त्मने यतिधर्माय यतेत । तद्विधानेऽशक्तश्चेत्तथापि हि तदाकांक्षी द्वादशात्मने सम्यक् श्रावकधर्मायोत्तिष्ठेत । अप्रमद्वरः श्रावकस्तु नित्यं मनोवाक्कायजन्मभिर्धर्म्याभिरितिचेष्टाभिरहोरात्रं नयेत् । ब्राह्मे मुहूर्ते उत्तीष्ठेत् परमेष्ठिस्तुतिं पठन् किंधर्मो किंकुलश्चास्मि किंव्रतोऽस्मीति स्मरन् शुचिः पुष्पामिषस्तोत्रै र्वेश्मनि देवमभ्यर्च्य यथाशक्ति प्रत्याख्यानं कृत्वा देवगृहं व्रजेत् । तत्र विधिना प्रविश्य जिनं त्रिःप्रदक्षिणयेत् पुष्पादिभिस्तमभ्यर्च्योत्तमै स्तवनैः स्तुयात् । ततो विशुद्धात्मा सः गुरूणामभ्यर्णे प्रतिपत्तिपुरःसरं प्रत्याख्यानप्रकाशनं विदधीत । तदालोकेऽभ्युत्थानं तदागमे चाभियानं शिरस्यंजलिसंश्लेषः स्वयमासनढौकनमासनाभिग्रहो भक्त्या वंदना पर्युपासनं तद्यानेऽनुगमश्चेति गुरोरियं प्रतिपत्तिः । सुधी स्ततः प्रतिनिवृत्तः सन् यथोचितं स्थानं गत्वा धर्माविरोधेनार्थ-चिन्तनं कुर्यात् । ततोऽभोजनं कृत्वा मध्यान्हिकीं पूजां कुर्यात् तद्विद्भिः सह शास्त्रार्थरहस्यानि च विचारयेत् ।

राज्यमाददे। राज्यात् पंचस्वद्धसहस्रेषु यातेषु अथ लोकान्तिकामरा एत्य प्रभुं तीर्थं प्रवर्तयेत्यूचुः। नमिप्रभुः सुप्रभं नाम पुत्रं राज्ये निवेश्य जृंभकाहृतै द्रविणै वार्षिकं दानं प्रददौ। सुप्रभाद्यै नृपैः शक्रादिभि देवैश्च वृतः प्रभु देवकुर्वा शिविकया सहस्राम्रवणं ययौ। कदंबचुंबनासक्तमधुव्रतकदंबकं मल्लिकाकुसुमोच्चायव्याकुलोद्यानपालकं विगलत्पाटलापुष्पपाटलीभूतभूतलं कामुकस्रस्तरीभूतशिरीषकुसुमोत्करं वहमानारघट्टोत्थैः प्रोच्छलच्छीकरोत्करै ग्रीष्मेऽपि दर्शिताब्दर्तु तद्वनं प्रभुः प्राविशत्। आषाढकृष्णनवम्यां चरमेऽहनि राज्ञां षष्ठेन सहस्रेण समं प्रभुः प्राव्रजत्। तदोत्पन्नमनोज्ञानः सः द्वितीयेऽहनि वीरपुरे दत्तनृपौकसि क्षैरेय्या पारणं चक्रे। तत्र विबुधै र्दत्तराट् पीठं वसुधारादि च चक्रे ततः प्रभुर्नवमासानन्यत्र व्यहृत। ततश्च दीक्षास्थानं सहस्राम्रवणं ययौ तदाच बकुलस्याधस्तदा षष्ठेन प्रतिमाधरस्तस्थौ च। मार्गस्य शुक्लैकादश्या भश्विने भे नमिप्रभो घातिकर्मक्षयादुज्वलं केवलमाविरभूत्। ततो देवाः सद्योऽप्यशीत्यग्रशतधनुस्तुंगाशोकद्रुभूषितं समवसरणं विदधुः प्रभुः तत्राशोकं प्रदक्षिणीकृत्य तीर्थाय चानमत् पूर्वरत्नसिंहासने प्राङ्मुखो न्यषदच्च। व्यन्तरसुरा स्तत्क्षणमन्यास्वपि दिक्षु प्रभो रत्नसिंहासनस्थानि प्रतिविंबानि विचक्रुः। श्रीमांश्चतुर्विधः संघो यथास्थानमवतस्थे। सौधर्मेन्द्रो भगवन्तं नमस्कृत्येत्यस्तवीत्। केवलज्ञानसंज्ञेन चक्षुषाऽखिलमेतज्जगद्वीक्षते एवं त्रिनेत्राय ते नमः। पञ्चत्रिंशदतिशयवचसे परमेष्ठिने चतुस्त्रिंशदतिशयान्विताय भवते नमः। हे नाथ! मालवकैशिकीमुख्यग्रामरागमनोरमां सर्वभाषानुगां तव वाचमुपास्महे। तार्क्ष्यावलोकनात् दृढा अपि नागपाशा इव त्वद्दर्शनाच्छरीरिणां कर्मपाशाः

एत्य तदैव देवीकुमारयो विंधिवत् सूतिकर्माणि चक्रुः । शक्रो मेरुमूर्धनि निन्ये अच्युताद्याश्चतुःषष्ठिरपि वासवा स्तीर्थाम्भोभिः प्रभुमस्नपयन् । स्नापनान्ते कुसुमादिभि र्जगन्नाथमभ्यर्च्य रचितारात्रिकः शक्र इति स्तोतुं प्रचक्रमे । हे परमेश्वर ! मोक्षमार्गस्य व्याहर्ता सर्वकर्मणां संहर्ता कषायाणाञ्च प्रहर्ता त्वं जय । हे जगद्गुरो ! कुमतस्यापनेतारं जगतामपि नेतारं सद्बोधस्य प्रणेतारं त्वां नमामि । विश्वैश्वर्यस्याधिकर्त्रा विश्वपाप्मनां न्यक्कर्त्रा अविकर्त्रोपकर्त्रा च भवता जगदिदं सनाथमस्ति । कुमार्गाणांमत्यादेष्टु र्मुक्तिवर्त्मन आदेष्टु रुपदेष्टु स्त्वत्तोऽतःपरं धर्मः प्रभविता । धर्मबीजसमुद्भर्त्रेऽतिशयसंपदां धर्त्रे श्रुतस्कंधस्य विधात्रे हे भगवन् ! भवते नमः । हे प्रभो ! नव्यतीर्थप्रतिष्ठातुस्तपःश्रियामनुष्ठातु र्जगदधिष्ठातु र्भवतो वयं किंकराः स्मः । अपवर्गस्यादातरि विश्वस्याभयदातरि त्रैलोक्यशरणे त्वयि अहं प्रपन्नशरणोऽस्मि । हे जगत्प्रभो ! यथा त्वमस्मिन्भवे मम प्रभुरभूस्तथा भवान्तरेष्वपि भूया मेऽन्यो मनोरथो नास्ति । वासव इति स्तुत्वा जगन्नाथं पुनरादाय वप्रास्वामिन्याः पार्श्वे नीत्वा यथास्थिति मुमोच । विजयो राजापि प्रातः परया मुदा कारामोक्षादिपूर्वकं सूनो र्जन्ममहोत्सवं चकार । प्रभौ गर्भस्थिते सत्यरिभि र्मिथिलापुरी रुद्धाऽऽसीत् तदा च वप्रादेवी तत्क्षणमधिप्रासादमारोहत् । वप्रां प्रेक्ष्य द्विपस्तद्गर्भानुभावाद्विजयं नृपं यन्नेमुरित्यस्य नमिरित्यभिधा ददे । अथान्वहं शक्रादिष्टाभिर्धात्रीभिः पाल्यमानो नमिनाथोऽपरो निशानाथ इव प्रववृधे । विमुक्तशैशवः स्वामी दशपञ्च च धनूंष्युच्छ्रितांगः पितृनिदेशतः कन्यां पर्यणैपीत् । कर्मभोगफलं विदन् सः जन्मतः सार्धवर्षसहस्रे द्वे व्यतिक्रम्य त्रिपा दत्त

नित्यमंबुजे राजहंस इव निवासं कारयामास। भवाद्विरक्तः सोऽन्येद्युः श्रियं तृणवदुत्सृज्य सुदर्शनमुनेः पादमूले दीक्षामुपाददे। सः कैश्चित्स्थानकैस्तीर्थकृन्नामकर्मचार्जयत् सम्यग्व्रतं पालयित्वा मृत्वाऽपराजितेऽगात्। इतश्चास्मिं जंबुद्वीपेऽत्रैव भारते क्षेत्रे धर्माशिथिलनागरा मिथिलेतिनगर्यस्ति। तस्यामवनेः सर्वस्वसमुद्गक इव रत्नहर्म्याट्ट गर्भितः प्राकारवलय आभाति। तस्यां परितो रत्नखचिता उद्यानदीर्घिकास्तटद्रुमपरागेण पंकिलतां यान्ति। तस्यां परया श्रिया भूवासवतां दधानः सर्वारिविजयो विजयो नाम पार्थिवो बभूव। सः परान् स्मरो यून इव भ्रूभंगमप्यकृत्वैव वरूथिनीमसन्नाह्यापि लीलया पराजिग्ये। सः सागर इवागाध श्चन्द्रमा इवाभिरामः समीरण इवोजस्वी भानुमानिव तेजस्वी बभूव। तस्यांगवती भूरिव सर्वान्तःपुरमंडनं मंडनीभूतशीला नामतो वप्रेति प्रियाऽभूत्। सा गंगेव स्वच्छगंभीरा जगतोऽपि हि पावनी ज्योत्स्नेव नयनानंददायिनी व्यराजत। सूनृतशीलाद्या ये ये गुणाः किल निरीक्ष्यन्तेऽवदातैस्तै स्तैः सैकैव स्त्रीणां निदर्शनमभूत्। इतश्च सः सिद्धार्थजीवोऽपराजिते विमाने त्रयस्त्रिंशार्णवोपमं स्वमायुः पूरयामास। अश्वयुग्पूर्णिमायां च्युत्वा सः जगत्त्रये कृतोद्योतोऽश्व[1]किन्यां वप्रादेव्या उदरेऽवातरत्। तदा च वप्रादेवी यामिनीशेषे तीर्थकृज्जन्मसूचकान् चतुर्दश स्वप्नानुदैक्षत। पितु र्मनोरथ इवातिलावण्यजननो जनन्याः सुखकृच्च सः गर्भः प्रववृधे। पूर्णे काले नभःकृष्णाष्टम्या [1]मश्वदेवते भे च सा देवी नीलोत्पलाभं स्वर्णाभञ्च सुतमसूत। अथासनकंपेन दिक्कुमारिका

---

१ अश्विनी नक्षत्रे

आयुश्च व्यतिलंघ्य पंचदश चाब्दानां सहस्रान् कृती ।
शैलेषीं प्रतिपद्य शाश्वतसुखानंदं प्रपेदे पदम् ॥ २६२ ॥

इत्याचार्य श्रीहेमचन्द्रविरचितेत्रिषष्ठिशलाका पुरुषचरितेसप्तमे पर्वणि ऽन्वयात्मकगद्यरचनायां रामनिर्वाणगमनो नाम दशम. सर्गः समाप्तः ॥

इति श्री रामलक्ष्मणरावण चरित्र संवलितं जैनरामायणं समाप्तिमगात्

## अथैकादशः सर्गः

### श्री नमिनाथ चरित्रम्

सुरेन्द्रमहितांघ्रये कर्मद्रुमगजेन्द्राय धरित्रीकल्पशाखिने श्रीनमिजिनेन्द्राय नमः । विश्वस्यापि परलोके-हलोकयोरुपकारायातिपावनं तस्यैव चरित्रम् कीर्तयिष्यामः । अत्रैव जंबुद्वीपे प्रत्यग्विदेहे भरताभिधे विजये संपदां कोशो नामतः कौशाम्बी पूरस्ति । तत्राखंडलइवाखंडशासनः सिद्धार्थीकृतसर्वार्थी सिद्धार्थो नाम पार्थिवोऽभवत् । गाम्भीर्यं, धैर्यं, मौदार्य बुद्धिरथापरेऽद्भुताः सर्वे गुणास्तस्यान्योन्यस्पर्धयेवासन् । अत्युन्न-तिशालिनस्तस्य विस्तारमापन्ना संपन्मार्गतरोश्छायेव विश्वोपकारायाभूत् । अत्यन्तनिर्मले तस्य मनस्येको धर्मो

शब्देन स्फुटन्तः पुनर्दुद्रुवुः। इत्यादि तेषां दुःखं प्रेक्ष्य सः सीतेन्द्रस्तानसुरानित्युवाच. रे किं नवेत्थ यदमी पुरुषपुंगवा आसन्निति। भो असुराः! अपयात, एतान्महात्मनो मुंचत, इत्यसुरान्निषिध्य सोऽथ शंबुकरावणावूचे। पूर्वं तत्कृतमस्ति येनेमं नरकं गतौ स्तः तद्दृष्टोदर्कं पूर्ववैरमद्यापि किं न मुंचतम्। इन्द्रस्तावप्येवं निषिध्य सौमित्रे रावणस्यच बोधहेतवे रामकेवलिनाऽऽख्यातमाचख्यौ। अथतावपि बभाषाते हे कृपानिधे! त्वं साध्वकार्षीः। भवच्छुभोपदेशेन नो दुःखविस्मृतिर्जाता। प्राग्जन्मोपार्जितै स्तैस्तैः क्रूरैः कर्मभिरर्पितो दीर्घो नौ नरकावासस्तद्दुःखं कोऽपनेष्यति। इत्युक्त्वा करुणापूर्णः सीतेन्द्रः प्रत्यवोचत, वस्त्रीनपीतोनरकात्सुरलोके नेष्यामि। इत्युक्त्वा स तांस्त्रीनपि पाणिनोद्दध्रे, ते पुनः कणशो विशीर्य क्षणात्पारदवत् पाणेः पेतुः। सः भूयोऽपि मिलितांगांस्तान् यथातथानुद्दध्रे तेऽपि तथा तथा पुनरेव पूर्ववद् पतंति स्म। ततस्ते सीतेन्द्रमूचुर्यथोध्रियमाणानां नोऽधिकमेव दुःखं भवति तदस्मान्मुञ्च दिवं व्रज। सीतेन्द्रोऽपि तान्मुक्त्वेयाय ततो रामं नत्वा शाश्वताहत्तीर्थयात्राकृते नंदीश्वरादिष्वगमत्।

गच्छन्नथो देवकुरुप्रदेशे निरीक्ष्य भामंडलराजजीवम्
प्राक्स्नेहयोगात्प्रतिबोध्य सम्यक् निजं स सीतेन्द्र इयाय कल्पम् ॥ २६१ ॥
उत्पन्ने सति केवले स शरदां पंचाधिकां विंशतिं,
मेदिन्यां भविकान्प्रबोध्य भगवांश्रीराम भट्टारकः ॥

गतयः कर्माधीनाः सन्ति। तौ दशाननलक्ष्मणौ नरकायुश्चानुभूय प्राग्विदेहविभूषणे विजयावत्यां नगर्यां सुनंदरोहिणीपुत्रौ जिनदाससुदर्शनौ भविष्यतः सततमर्हद्धर्मश्च पालयिष्यतः। ततो विपद्य तौ सौधर्मे त्रिदशौ भविष्यतश्च्युत्वाच पुनर्विजयापुर्यां श्रावकौ भाविनौ। ततोऽपि मृत्वा हरिवर्षे पुरुषौ भविष्यतः तौ चावसानमासाद्य देवलोकं गमिष्यतः। च्युत्वा च विजयापुर्यां जयकान्तजयप्रभौ कुमारवार्तराड्लक्ष्म्योस्तौ कुमारौ भविष्यतः। तत्र जिनोक्तं संयमं पालयित्वा विपद्यच लान्तके कल्पे उभावपि गीर्वाणौ भविष्यतः। तदा त्वमच्युताच्च्युत्वाऽत्रैव भारते क्षेत्रे सर्वरत्नमतिर्नाम चक्रवर्ती भविष्यति। तौ च च्युत्वा इन्द्रायुधमेघरथाभिधौ ते सुतौ भाविनौ त्वंच परिव्रज्य वैजयन्ते व्रजिष्यसि। रावणस्य जीवः स इन्द्रायुधस्तु भवत्रयं भ्रान्त्वा शुभं तीर्थंकरगोत्रकर्मार्जयिष्यति। ततः सः रावणजीवस्तीर्थनाथो भविष्यति वैजयन्ताच्च्युतो भवांस्तु तस्य गणधरो भावी। ततस्तौ मोक्षं यास्यतो लक्ष्मणस्य जीवस्तु भवत्सूनुर्मेघरथः। शुभा गती व्रंजिष्यति। ततश्च प्राग्विदेहविभूषणे पुष्करद्वीपे रत्नचित्रायां नगर्यां चिक्रवर्तिश्रियं भुक्त्वा परिव्रज्य च क्रमेण सः तीर्थनाथो भविता निर्वाणञ्च प्रपत्स्यते। सीतेन्द्र एवमाकर्ण्य रामभद्रञ्च प्रणम्य प्राक्स्नेहवशतो यत्र लक्ष्मणोदुःखभाग् तत्र ययौ। तत्र सः शंब्रूकरावणौ क्रुद्धौ विकृतैः सिंहादिरूपै र्लक्ष्मणेन समं युध्यमानौ ददर्श। नैवं, युध्यमानानां वो दुःखं भावीति वादिनः क्रुध्धाः परमाधार्मिकास्तानग्निकुंडेषु न्यधुः। दह्यमानास्त्रयोऽप्युच्चैरटन्तो गलितांगकास्ततः कृष्ट्वा बलात्तप्ततैलकुंभ्यां निदधिरे। तत्रापि विलीनदेहाश्चिरं भ्राष्ट्रे चिक्षिपिरे तडत्तटिति-

वधिना ज्ञात्वा पर्यचिन्तयद् अयंरामःपुनर्भवो[1] भवति चेदमुना युज्ये। क्षपणश्रेणिवर्तिनोऽस्यानुकूलैरुपसर्गै रुपद्रवं करोमि यथा मत्सुहृद्सुरः स्यात्। इति संचिन्त्य सीतेन्द्र उपरामं समाययौ वसन्तर्तुविभूषितं महोद्यानं च विचक्रे। तदा कोकिलकुलं चुकूज मलयानिलो ववौ कुसुमामोदमेदिनो भ्रमरा रणन्तो भ्रेमुः। चूतचंपककंकोल्लिपाटलाबकुलादयो मनोभुवो नव्यास्त्राणि पुष्पाणि सद्योऽपि दधुः। सीतेन्द्रः सीतारूपं स्त्रीजनानपि विकृत्योचे हे प्रिय! ते प्रिया सीताहमुपस्थितास्मि। तदानीं त्वां रक्तं त्यक्त्वा पंडितमानिन्यहं प्राव्रजं हेनाथ! पश्चाच्च मम पश्चात्तापोऽभूत्। अद्याभिर्विद्याधरकुमारीभिरहमर्थिता यथाहे नाथे! प्रसीद, नः नाथं रामं स्वं नाथीकुरुष्व। त्वं च परिव्रज्यां मुंच रामस्य महिषी भव वयमधुना तवादेशात्तस्य पत्न्यो भविष्यामः। हे रघूद्वह! तदमूर्विद्याधरवधूरुद्वह, प्राग्वत्वया सह रंस्ये तामवमाननां सहस्व। सीतेन्द्र इति ब्रुवाणे सति वैक्रिय्यः खेचरस्त्रियः स्मरोज्जीवनभेषजं विविधं संगीतं चक्रुः। रामभद्रमहामुनिस्तैः सीतेन्द्रवचनैस्तेनसंगीतकेन च वसन्तेन च नाक्षुभ्यत्। तदा माघस्य शुक्लद्वादश्यां निश्यन्तिमे यामे रामपैं रुज्वलं केवलज्ञानमुदपद्यत। तदा सभक्तिकः सीतेन्द्रोऽन्येचनाकिनोविधिपूर्वकं रामस्य केवलज्ञानमहिमानं विदधुः। दिव्यस्वर्णाम्बुजासीनो दिव्यचामरराजितो दिव्यातपत्रवान्रामो धर्मदेशनां विदधे। देशनान्ते सीतेन्द्रेण क्षमयित्वा प्रणम्यच सौमित्रिरावणगतिं पृष्टो रामर्पिरभ्यधात्। अधुना सशंबूको दशाननो लक्ष्मणश्च तुर्येनरकेऽस्ति हि देहिनां

[1] संसारी

स्तु विधिवद् बुभुजे । तत्रामरै र्वसुधारादिपंचकं विदधे भगवान् रामभद्रोऽपि पुनस्तदरण्यं ययौ । भूयः पुरक्षोभोमाभूत् मे च संघट्टोमासमभूदितिबुध्ध्या शुद्धबुद्धिः सः राम इममभिग्रहं व्यधात् । अत्रैवारण्ये भिक्षा-काले भिक्षोपलप्स्यते चेत् तदानीमस्माभिः पारणं कार्यम् । इत्यभिग्रहमृद्धपुण्यपि निरपेक्षः परंसमाधिमापन्नो-रामः प्रतिमाधरोऽवतस्थे । अन्येद्युस्तत्र प्रतिनंदीनरेश्वरो वेगिना विपर्यस्तशिक्षेणाश्वेनाकृष्यमाण आयासीत् । सः अश्वो नंदनपुण्याख्ये पंके ममज्ज ततोऽनुपदं प्रतिनंदिनश्च सैन्यं समापपात । पंकात्तमश्वमुत्तार्य तत्रच शि-विरं न्यस्य स्नात्वा सपरिच्छदः सोनृपो भोजनं चक्रे । तदा च पारितध्यानो भगवान् रामर्षिः पारणेच्छया तत्राजगाम नृपश्च तमभ्युत्तस्थौ । स चावशिष्टै भैक्तपानै रामं प्रत्यलंभयत् कृतपारणके सति दिवो रत्नवृष्टि-रभूत् । अथ रामर्षि र्देशनां चक्रे, ते प्रतिनंद्यादयश्च सम्यग्द्वादशव्रतधारिणः श्रावकाबभूवुः । ततः प्रभृति वनवासाभिर्देवीभिः पूज्यमानो महातपा रामस्तत्रैव वने चिरं तस्थौ । रामर्षि र्भवपारयियासया एकेन मासेन मासाभ्यां त्रिचतुरैरपि मासैः पारयामास । कदापि पर्यंकस्थोऽस्थात् अन्यदा प्रलंबितभुजोऽस्थात् कदाप्युत्क-टिकासीनः कदाचनोर्ध्वबाहुरस्थात् । अन्यदांगुष्ठरथस्तस्थौ कदापि हि पार्ष्णिस्थश्चेति नानासनो ध्यानी सः दुस्तपं तपस्तेपे । अन्यदा विहरान्रामः कोटिशिलां शिलां ययौ या पुरा विद्याधरसमक्षं लक्ष्मणेनोदध्रे । क्षपणश्रे-णिमाश्रितो रामस्तांशिलामध्यासीत् ततो निशायां प्रतिमाधरः सः शुक्लध्यानान्तरं भेजे । तदा च सीतेन्द्रोऽ

सत्यथ भववैराग्ययोगतो महीभुजां षोडश सहस्राणि निष्क्रान्तानि । सप्तत्रिंशतसहस्राणि वरयोषितः प्राव्रजन् ताश्च श्रीमत्याः श्रमणायाः परिच्छदे बभूवुः । पूर्वांगश्रुतभावितो रामर्षिं गुरुपादान्ते विविधाभिग्रहोद्यतः सन् षडब्दीं तपांसि तेपे । रामभद्रस्य महामुने स्तत्र ध्यानजुषः सतस्तस्यामेव विभावर्यामवधिज्ञानमुद्भूत् । विश्वं करस्थवच्चतुर्दशरज्जुमभं पश्यन्ननुजं देवाभ्यां हतं नरके च गतमज्ञासीत् । तदारामभट्टारक इदं च चिन्तयामास, पूर्वत्र जन्मन्यहं धनदत्ताभिधोऽभवमिति । ममानुजो लक्ष्मणोऽभिधानेन वसुदत्तोऽभूत् तत्राप्यकृत कृत्योऽसावेवमेव व्यपद्यत । अस्मिन्भवे सः वसुदत्तजीवो मेऽनुजो लक्ष्मणोऽभूत् तत्राप्यमुष्य कौमारे सुधा-शरदां शतमगात् । शतत्रयं मंडलित्वे, चत्वारिंशत्तु दिग्जये, सार्धा वर्षैकादशशतसहस्रा अब्दषष्टि च राज्ये, एवं सर्वमायुः क्रमाद् द्वादशाब्दसहस्राण्यविरतस्यैव तस्य केवलं नरकावहं ययौ । मायावधकयो स्तयो र्देवयोर्न कोऽपि दोषोऽस्ति हि शरीरिणः कर्मणामीदृगेव विपाको भवति । एवं चिन्तयन्रामः कर्मच्छिदेऽधिकोद्यतो निर्ममः सन् तपःसमाधिनिष्ठोऽभूत् । अथ सः षष्ठोपवासान्ते युगमात्रदत्तदृष्टिः स्यन्दनस्थले नगरे पारणाय प्राविशत् । अवन्यामायान्तं निशाकरमिवनयनोत्सवं तं वीक्ष्य प्रचुरसंमदाः पौराः संमुखीनाः समापेतुः । पौर्यः स्वस्वगृहद्वारि तस्य भीक्षादानाय विचित्रभोज्यपूर्णानि भाजनानि पुरो दधुः । पौराणां हर्षतस्तत्र तथा तुमुलोऽभूत् यथा करिणस्तंभान् बभंजुर्हयाश्चोत्कर्णतां ययुश्च । रामोऽप्युज्झितधर्माभिरतत्वात् पौरढौकितमाहारं तेभ्यो नाग्रहीत् नृपवेश्मनि त्वभ्यागात् । तत्र सः प्रतिनंदिनृपश्चोज्झितधर्मेणाहारेण रामं प्रत्यलंभयत् सः राम-

बीजान्युवाप ॥ वालुकाश्च यंत्रे क्षिप्त्वा तैलार्थं पर्यपीलयत् इत्याद्यसाधकमन्यदपि रामस्योदभावयत् । रामस्त-मूचे भो ! मुधा शुष्कं तरुं किं सिंचसि, फलं दूरेऽस्तु क्वापि मुसलं पुष्यति किं नाम ? । हे मुग्ध ? शिलायां पद्मिनीखंडं किमारोपयसि, निर्जलेऽपि मृते वृषैः किं वा वपसि । वालुकाभ्यस्तैलं न स्यादेव तद् भो मूर्ख ! किं पीलयसि ? अनुपायविदस्तेऽसौ प्रयासः सर्वथा वृथैव । स्मित्वा जटायुरप्यूचे, भोः यदीयदपि वेत्सि, तर्ह्यज्ञान-चिन्हं मृतकं स्कन्धे किं वहसि । रामः सौमित्रिवपुरालिङ्ग्य तं प्रत्यभाषत, अमंगलं किं भाषसे मम दृष्टिपथं त्यज रामे जटायुपं प्रत्येवं भाषमाणे सति कृतान्तवदनो देवोऽवधे विंदन् तद्बोधार्थं समाययौ । सः स्त्रीमृतकं स्कन्धे न्यस्योपरामं विचचार रामोऽप्यूचे स्त्रीमृतकमेवं वहन्नुन्मत्तोऽसि किम् ? । कृतान्तोऽपि प्रत्युवाच किममंगलं भाषसे एषा मम प्रेयसी वर्तते त्वं तु स्वयं किं शवं वहसि । यदि मयोह्यमानां मे भार्यां मृतां जानासि तर्हि हे बुद्धिमन् ! निजस्कंधस्थितं मृतकं किं न वेत्सि । तेनैवं दर्शिते स्तै स्तैर्हेतुभि र्जातचेतनो रामो दध्यौ ममानुजः किन्तु न जीवतीति सत्यम् । ततस्तौ जटायुकृतान्तौ देवौ लब्धबोधाय रामाय स्वमशंसताम् निजस्थानञ्च जग्मतुः । ततो रामो निजानुजन्मनो मृतकार्यं चकार दीक्षां प्रपित्सुः शत्रुघ्नं च राज्यदानायादिशत् । भवपराङ्-मुखः शत्रुघ्नस्त्वहमपि भवत्पादाननुयास्यामीति ब्रुवन्राज्यं प्रत्यादिदेश । ततस्तुर्यपुरुषार्थाय सत्वरो राघवः स्वयं लवणपुत्रायानंगदेवाय राज्यं ददौ । अर्हद्दासश्रावकेणोपदिष्टस्य मुनिसुव्रतवंशस्य सुव्रतस्य महामुने रन्तिकं ययौ च । रामस्तत्र शत्रुघ्नसुग्रीवविभीषणविराधितै रन्यैश्च राजभिः सार्धं व्रतमुपाददे । रामभद्रे तु निष्क्राते

इत्युक्त्वा कुपितो विधुताधरो रामस्तानूचे, एप मे भ्राता हि जीवत्येव हे खलाः वो वचः किमिदम् । सबन्धूनां सर्वेषां वो दाहपूर्वकं ज्वलने मृतकार्यं विधातव्यं तेन ममानुजो दीर्घायुः स्यात् हे भ्रातर्भातर्लक्ष्मण ! वत्स ! ब्रूहि नन्वयं दुर्जनानां प्रवेशोऽस्ति मां चिरं किं खेदयसि । यद्वा हे वत्स ! खलसमक्षं तव कोपो नोचित इत्युक्त्वा राघवस्तमंश आरोप्यान्यत्र ययौ । रामस्तं स्नानगृहे नीत्वा कदापि स्वयमस्नपयत् ततश्च स्वहस्तेन विलेपनै र्विलिलेप । कदाचिद्दिव्यभोजनान्यानाय्य भाजनं पूरयित्वा स्वयमेव तस्य पुरतो मुमोच । कदापि स्वयमाभाष्य स्वयमेव प्रतिभाषते स्म कदाचन स्वयं संवाहकीभूय ममर्द च । इत्यादि विकलाश्चेष्टाः कुर्वतो विस्मृताशेषकर्मणः स्नेहोन्मत्तस्य रामस्य षण्मासी ययौ । तं च तथोन्मत्तं श्रुत्वा इन्द्रजित्सुंदसूनवोऽन्येऽपि विद्विपः खेचरा अपि रामस्य जिघांसव इयुः । छलौजसस्ते, व्याधाः सुप्तसिंहां गिरिगुहामिवोन्मत्तरघुपुंगवामयोध्यां सैन्यै रुरुधुः । रामोऽपि लक्ष्मणं स्वांके निधायाकालेऽपि संवर्तस्य प्रवर्तकं वज्रावर्तं धनुरास्फालयत् । तदा चासनकंपेन रामं प्रति द्राक्प्राग्जन्मसौहृदान्नाकिभिः समं माहेन्द्राज्जटायुरायया । अद्यापि नाकिनो रामगृह्या इति विभापिणस्ते इन्द्रजित्पुत्रमुख्याः खेचरा द्रुतं दुद्रुवुः ॥ अत्र रामो देवसखा नो हन्ता विभीपणश्चाग्रे इति भीता लज्जिताश्च ते सर्वे परं संवेगं दधुः । संवेगधारिणस्ते अतिवेगस्य मुनेः पार्श्वे उपेत्य गृहवासपराङ्मुखाः सन्तो दीक्षां जगृहुः ॥ ततः सः जटायुस्मरो रामस्य बोधार्थं [1]पुरःस्थाय शुष्कं तरुं मुहुर्मुहु रंभसा सिषेच । दृषदि [2]करीषं क्षिप्त्वा पद्मिनीं रोपयामास, अकालेऽपि मृतोक्ष्णा लांगलेन च

विलुलत्कुंतलालका श्चक्रन्दुः। तच्चाक्रन्दितमाकर्ण्य तत्र रामः समाययौ उवाच चामंगलमविज्ञाप्यापि किमारब्धम् एषोऽहंजीवन्नेव तिष्ठामि एषो मेऽनुजश्च जीवति परंत्वमुं कोऽपि व्याधिर्बाधते तत्प्रतिक्रिया भेषजं कर्तव्यम् । इत्युक्त्वा रामो वैद्यान्ज्योतिषिकांश्चाजुहवत् मंत्रतंत्राणां प्रयोगश्चासकृत् कारयामास । मंत्रतंत्राणांवैफल्ये रघूद्वहो मूर्छां प्राप कथंचिल्लब्धसंज्ञः सन्नुच्चवैःस्वरं विललाप। ते विभीषणसुग्रीवशत्रुघ्नाद्या उदश्रवो हताः स्मेति भाषिणो विमुक्तकंठं रुरुदुः। कौशल्याद्या मातरश्च स्नुषाभिः सह साश्रवो भूयोभूयोऽपि मूर्छन्त्यः करुणस्वरं चक्रन्दुः। प्रतिमार्गं प्रतिगृहं प्रत्यट्टं क्रन्दनात्तदा सर्वं रसान्तरं प्रलिम्लुचं शोकाद्वैतमभूत् । अथ लवणांकुशौ कुमारौ राममूचाते कनीयस्तातमृत्युनाऽद्य भवाद् भीतौ स्वः। एषो मृत्युरकस्मात्सर्वस्यापतति तन्नरै मूलतोऽपि परलोकाय तत्परैः स्थातव्यं हि। कनीयस्तातमुक्तानां नोऽतः परं गृहे स्थातुं न युक्तं तद्दीक्षायै अनुमन्यस्व। इत्युक्त्वा राममानम्यामृतघोषमुनेः पुरस्तादुभौ दीक्षां जगृहतुः क्रमाच्च शिवमीयतुः। हे बान्धव मयाऽद्य क्वचित् काचिदपमाननाचक्रे किम् ! भवताऽकस्मादीदृशं मौन कस्मादालंबि । रामो भ्रातृविपत्त्या पुत्रयोश्च वियोगेन भूयोभूयोऽपि मुमूर्छ मोहाच्चैवं जगाद च। हे भ्रातः। त्वयि ह्येवंस्थिते सति पुत्राभ्यामप्यहमुज्झितोऽस्मि,हि नृणां छिद्रशते भूतशतानि प्रविशन्ति। एवमुन्मत्तभाषिण राममेत्य कथंचन विभीषणाद्याः संभूय गद्गदस्वरं जगदुः। हे प्रभो ! त्वं धीरेष्वपिधीरोऽसि वीरेष्वपि वीरोऽसि तस्मात्संप्रति लज्जाकरमिदमधैर्यं मुञ्च। अधुना समयोचितं लोकप्रसिद्धं सौमित्रेरंगसंस्कारपूर्वमौर्ध्वदेहिकं कर्तव्यम् ।

स्तथाखल्वस्तं चेति सूर्य एवायं निदर्शनमस्ति तदशाश्वतं सर्वं धिग्धिगिति । एवं विचिन्त्य स्वपुरे गत्वा राज्यं सुते न्यधात् स्वयं धर्मरत्नाचार्यपार्श्वे प्रव्रज्यामाददे । तमनु राज्ञां सार्धसप्तशतानिच प्राव्रजन् तत्पत्न्यश्च दीक्षिताः सत्य आर्यालक्ष्मीवतीपार्श्वेऽस्थुः । श्रीशैलो ध्यानानलेन क्रमात् कर्माणि मूलतो निर्दह्य शैलेशीं प्राप्याव्ययं पदं जगाम रघूद्वहो हनुमन्तं प्रव्रजितं ज्ञात्वा दध्यौ भोगसुखं हित्वाऽयं हनुमान् कष्टां दीक्षां किमाददे । सौधर्मवासवस्तां रामचिन्तामवधे ज्ञात्वा मध्येसभमूचे अहो! कर्मणां गति र्विषमास्ति। चरमदेहोऽपि रामो यत्स्वयं धर्म हसति प्रत्युतैपो विषयसंभूतं सौख्यं प्रशंसति । अथवा ज्ञातमनयो रामलक्ष्मणयो गाढतरः कोऽपि मिथः स्नेहो भवानिर्वेदकारणमस्ति । द्वौ देवौ तयोः स्नेहं परीक्षितुं तत्रायोध्यायां कौतुकाल्लक्ष्मणस्य निकतन उपेयतुः । तौ च सद्यो मायया सर्वमंतःपुरस्त्रैणं करुणस्वरमाक्रन्दल्लक्ष्मणस्य दर्शयामासतुः । हापद्म! पद्मनयन! वंधुपद्मदिवाकर! विश्वस्यापि भयंकर कोऽयंतेऽकांडमृत्युः । एवं च रुदती र्वक्षांस्याघ्नाना मुक्तकुंतला अन्तःपुरवधूर्वीक्ष्य विपण्णो लक्ष्मणोऽवदत् । जीवितस्यापि जीवितं ममासौ भ्राता मृतः किम्! छलघातिना पिशुनेन कृतान्तेन किं कृतम् । एवञ्च भाषमाणस्य सौमित्रे र्वचसा सह जीवितं निर्ययौ हि कर्मविपाको दुरतिक्रमः सिंहासनेऽपि हि स्वर्णस्तंभमवष्टभ्य स्थितः प्रसारिताक्षः सः लेप्यमूर्तिरिवाक्रियोऽस्थात् । लक्ष्मणं परासुं दृष्ट्वा तौ सुरावपि विपण्णौ मिथो जजल्पतु रहो आवाभ्यामिदं किं कृतम् । विश्वाधार एषः पुमानावाभ्यां हहा हतः इति स्वं बहु निन्दंतौ पुनः स्वकल्पं जग्मतुः । लक्ष्मणं परासुं प्रेक्ष्य तत्र चान्तः पुरस्त्रियः सपरीवारा

कथं नामोद्धक्ष्यति । यद्वा यस्याः सतीव्रतं भंक्तुं रावणोऽपि नालम्, सा संयमेऽपि ध्रुवं निर्व्यूढप्रतिज्ञैव भाविनी एवं विमृश्य लक्ष्मणाग्रजो ववन्दे लक्ष्मणोऽन्ये राजानश्च श्रद्धानिर्धौतचेतसो ववन्दिरे । इतश्च रामः सपरीवारोऽयोध्यां ययौ सीताकृतान्तवदनौ पुनः परं तपस्तेपाते । कृतान्तवदनस्तपस्तप्त्वा ब्रह्मलोके ययौ सीताऽपि षष्टिं वर्षाणि विविधं तपो विदधे । अन्ते त्रयस्त्रिंशदहोरात्रीमनशनं कृत्वा मृता द्वाविंशत्यर्णवायुः सोऽच्युतेन्द्रःसमजायत । इतश्च तदा वैताढ्ये शैले कांचनपुरे पुरे नामतः कनकरथो विद्याधरपतिरभूत् । सः मंदाकिनी चन्द्रमुख्योः कन्ययोः स्वयंवरे सपुत्रा न्रामलक्ष्मणादीन् भूपतीनाह्वयत् । भूपेपुतत्रासीनेपु सत्सु मंदाकिन्या निजेच्छयाऽनंगलवणो वव्रे । तत्र सार्धे द्वे शते अपि ते श्रीधरादयो लक्ष्मणस्य सुता युधि क्रोधादुत्तस्थिरे । तांश्च संन्नह्यतः श्रुत्वा लवणांकुशौ भोचाते, यदमीभिः कोनाम योत्स्यते भ्रातरः खल्ववध्या एव । यथा ज्येष्ठकनिष्ठयोस्तातयोः कोऽपि भेदो न तथैव तत्पुत्राणाममीषामस्माकमपि सः भेदो मास्तु । एवं लक्ष्मणात्मजा भ्रेरेभ्यो ज्ञात्वा वीक्षापन्नाः स्वं दुष्कर्मारंभ-संमुखं निनिन्दुः । सद्यः संवेगमापन्नास्ते पितरावनुमान्य महाबलमुनेः पादपद्मान्ते व्रतं जगृहुः । तदानीं जातोद्वाहौ तावनंगलवणांकुशौ सीरिशार्ङ्गिभ्यां सहैवायोध्यां पुरीमीयतुः । इतश्च स्वपुरे हर्म्यमूर्ध्नि स्थितो भामंडलः शुद्धधीः कदाचिदिदं मनसा चिन्तयामास । सर्वत्रास्खलन् लीलया श्रेणिद्वयं वशीकृत्य विहृत्यान्ते न्चात्तदीक्षःपूर्णवांछितो भवेयम् । एवं चिन्तयतस्तस्य मूर्ध्नि खात् विद्युत्पपात । स मृत्वा युगलधर्मीषु देवकुरुषु जज्ञे । इतश्च हनुमान् चैत्रे चैत्यवंदनहेतवे मेरुं गतस्ततश्च निवृत्तोऽस्तमयंतं सूर्यं प्रैक्षत । एवं च दध्यौ यथोदय

विभीषणोऽभूः । राज्ञा हतःश्रीभूतिस्तु द्यां जगाम ततश्च्युतः सुमतिष्ठपुरे पुनर्वसु विद्याधरोऽजनि । स्मरातुरः सः पुंडरीकविजये त्रिभुवनचक्रिणः कन्यामनंगसुंदरीमपजहार । चक्रिणा प्रेषितैर्विद्याधरै र्युध्याकुलस्य तस्य विमानादनंगसुंदरी निकुंजेऽपप्तत् । पुनर्वसुस्तत्प्राप्त्यै निदानं कृत्वा प्रव्रज्य च स्वर्गं ययौ ततश्च्युत्वाऽयं लक्ष्मणोऽजायत । वनस्थिता साऽनंगसुदर्यप्युग्रं तपोऽकरोत् विहितानशना सा चान्तेऽजगरेण जग्रसे । सा समाधिना मृत्वा द्वितीयके कल्पे देव्यभूत् ततश्च्युत्वाऽसौ लक्ष्मणस्य महिषी विशल्याऽभूत् । यो नाम्ना गुणधरो गुणवतीभ्राताऽभूत् स तु भवं भ्रान्त्वा कुंडलमंडितो राजपुत्रोऽभवत् । सः चिराय श्रावकत्वं पालयित्वा विपद्य च सीतासहोदर एषो भामंडलनरेश्वरोऽभूत् । इतश्च काकन्द्यां वामदेवद्विजन्मनः श्यामलाकुक्षिजौ वसुनंदन-सुनंदनौ पुत्रावभूताम् । एकदा च तयो गेंहे तिष्ठतोः सतो र्मासोपवासी मुनिराययौ ताभ्यां च भक्तितः प्रतिलंभितः । मृत्वा तद्दानधर्मेणोत्तरेषु कुरुष्वथ युग्मिनौ ततोऽपि मृत्वा तौ सौधर्मे सुरावभूताम् । ततश्च्युत्वा काकन्द्यां रतिवर्धनभूपतेः सुदर्शनाभवौ प्रियंकरशुभंकरौ पुत्रावभूताम् । चिरं राज्यं पालयित्वा प्रव्रज्य विपद्य च ग्रैवयके सुरावभूतां ततश्च्युत्वा लवणांकुशावभूताम् । तयोः पूर्वभवमाता सुदर्शना चिरं भवं भ्रान्त्वा रामपुत्र-योरध्यापक एषः सिद्धार्थोऽभूत् । एवं मुनिवचः श्रुत्वा बहवः संवेगं ययुः, रामसेनानी कृतान्तः पुनस्तदैव प्राव्र-जत् । अथ काकुत्स्थ उत्थाय जयभूषणं नमश्चक्रे उपसीतं च गत्वा चेतस्येवं चिन्तयामास । असौ शिरीषमृद्वंगी राजपुत्री मम प्रिया सीता शीतातपक्लेशं कथं नाम सहिष्यते । हृदयेनापि दुर्वहमिमं सर्वभारातिशायिनं संयमभारं च

कलंकः सर्वथा नोत्तरिष्यति तावन्नहि पारयिष्यामीत्यभिजग्राह । ततश्च वेगवतीमुखं देवतारोषाच्छ्[1]नमभूत्, साधुव्यतिकरं ज्ञात्वा सा पित्रा भृशं भर्त्सिता । सा रोगात् पितुश्च भीता सुदर्शनमुनेः पुरः सर्वलोकानां प्रत्यक्षमित्युच्चैःस्वरमब्रवीत् । हे स्वामिन् ! त्वं सर्वथा निर्दोषोऽसि, अयं ते दोषो मयाऽलीक एवारोपितः हे क्षमानिधे ! तितिक्षस्व । लोक इति तद्वचः श्रुत्वा भूयोऽपि तं मुनिमानर्च [2]वेगवत्यप्युल्लाघाऽभूत् तदादि च सा श्राविका चाभूत् । तांच रूपवतीं दृष्ट्वा शंभुभूपति र्ययाचे, श्रीभूतिरपि मिथ्यादृशे न दास्य इति तं प्रत्युवाच । शंभुः श्रीभूतिं निहत्य बलादपि तां बुभुजे भवान्तरे ते वधाय भूयासमिति साऽशपत् । अथ शंभुनाऽपि विमुक्ता सा हरिकान्तार्यिकान्तिके प्रवव्राज पूर्णायुश्च ब्रह्मलोकमुपाययौ । ततश्च्युत्वा शंभुजीवरक्षो-नाथस्य मृत्यवे निदानवशतो जनकात्मजेयं सीता जज्ञे । तस्य सुदर्शनमुनेरलीकदोषाधिरोपणादिहास्या अलीकोऽयं कलंको लोकेनारोपितः । शंभुजीवोऽपि भवं भ्रान्त्वा कुशध्वजस्य द्विजन्मनः सावित्र्यां भार्यायां प्रभासो नाम नंदन उदपादि । अन्यदा सः विजयसेनर्षेरन्तिके प्रवव्राज परीषहान् सहमानः परमं तप स्तेपे । सम्मेतयात्राचलितमिन्द्रवत्परमर्द्धिकं कनकप्रभ विद्याधरनरेश्वरमद्राक्षीत् । अनेन तपसेदृग् ऋद्धिर्भूयासमिति निदानं व्यधादथ विपद्य तृतीये कल्प उत्पेदे । यस्तदा कनकप्रभऋद्धैर्निदानमकरोत् स एव ततश्च्युत्वा खेचरेन्द्रस्तवाग्रजो रावणोऽभूत् । यस्तु याज्ञवल्क्यद्विजो धनदत्तवसुदत्तमित्रमभवत् सः भवं भ्रान्त्वा त्वं

---

१ श्यामम् २ निर्मला

वेत्सीति तं नरमपृच्छच्च। सः उवाच पुराहं म्रियमाणायास्मै गवे नमस्कारानदाम् तत्केनापीहाभिज्ञानेन लिखितोऽस्मि। वृषभध्वजो नत्वा तमुवाच योऽयं जरद्गवः सोऽहं नमस्कारप्रभावतो राजपुत्रोऽभवम् कृपालुस्त्वं चेन्मह्यं नमस्कारान् तदानादास्यथा स्तर्हि तिर्यग्योनिरहं कां योनिं मयास्यम्। सर्वथा मम त्वमेवगुरुः, स्वामी, दैवतं वासि, खलु भाज्यमिदं राज्यं भुंक्ष्व, यच्चमम, तत्सर्वं त्वया यत्तमस्ति। वृषभध्वज इत्युक्त्वा पद्मरुचिना सहैवाकृतद्वैधः श्रावकव्रतं पालयन्विजहार। चिरं श्रावकत्वं पालयित्वा विपद्य चेशानकल्पे तौ परमर्द्धिकौ देवौ जज्ञाते। पद्मरुचिस्ततश्च्युत्वामेरोरपरतो वैताढ्ये गिरौ नंदावर्ते नगरे नंदीश्वरात्मजः कनकाभाकुक्षिजन्मा नयनानंद इत्यभूत्, राज्यं भुक्त्वा परिव्रज्य माहेन्द्रे त्रिदशोऽभवत्। सः ततश्च्युत्वा प्राग्विदेहेषु क्षेमायां पुरि विपुलवाहनस्य भूपतेः पद्मावत्यां श्रीचन्द्रोनाम नंदनोऽभवत् राज्यं च भुक्त्वा समाधिगुप्तस्य मुनेरन्तिके प्रव्रज्य ब्रह्मलोकेन्द्रतां ययौ। ततश्च्युत्वाऽयं महाबलो बलभद्रः पद्मोऽभवत् वृषभध्वजजीव एषः सुग्रीवः क्रमादभूत्। श्रीकान्तजीवो भ्रान्त्वा मृणालकन्दपत्तने शंभुहेमवतीभवो राजसूनु र्वज्रकंठोऽभवत्। वसुदत्तश्च भ्रान्त्वा शंभुराजपुरोधसो विजयस्यात्मजो रत्नचूडाभवः श्रीभूतिरभूत्। तस्य श्रीभुतेर्नंदना सा गुणवत्यपि भ्रान्त्वा सरस्वतीकुक्षिभवा नाम्ना वेगवतीत्यभूत्। उद्यौवना साऽन्यदा प्रतिमास्थं सुदर्शनं साधुं जनै र्वन्द्यमानं दृष्ट्वा सोपहासमदोऽवदत्। अहो! अयं साधुः पुरा महेलया क्रीडन् दृष्टः साचानेनान्यत्रप्रेपिता तेन भो जनाः! तं कथं वन्दध्वम्। तच्छ्रुत्वा सर्वोऽपि लोक आशु विपरिणम्य तं मुनिं कलंकोद्घोषपूर्वकं विप्लावयितु मारेभे। सः ऋपिरपि यावन्मेऽयं-

त्तात्मजन्मनोः समाचख्यौ। ततो वसुदत्तो निशि गत्वाश्रीकान्तमवधीत् श्रीकान्तेनापि खड्गेन वसुदत्तो निपातितः। तावुभावपि विन्ध्याटव्यां कुरंगकावभूतां गुणवत्यप्यनूढैव मृत्वा तत्रमृग्यभवत् । तत्रापि च तस्याः कृते युध्ध्वा पंचत्वमीयतुरेवं तौ मिथो वैरेण भूयांसं भवं भ्रेमतुः। स्वभ्रातृवधपीडितो धनदत्तोऽपि तदानीं निर्धर्मो निश्यटन् अन्यदा क्षुधितः साधून् ददर्श। तेभ्यश्च भोजनं ययाचे तेष्वेको मुनि रब्रवीत् साधूनां दिवाऽपि भक्तपानादिसंग्रहोनह्यस्ति । हे भद्रक ! तवापि रात्रौ भोक्तुं पातुंच नोचितं यत ईदृशे तमस्यन्नादौ जीवसंसक्तिं को वेत्ति । सुधयाह्युक्षित इव तेनेत्यादिबोधितः श्रावकीभूय मृत्वा च सौधर्मे त्रिदशोऽभवत् । च्युत्वा महापुरपुरे धारणीमेरुनंदनो नाम्ना पद्मरुचिः श्रेष्ठी परमश्रावकोऽभवत् । अन्यदाऽश्वारूढो गोकुलं गच्छन्सः यदृच्छया पथि पतितं मुमूर्षुं जरद्वृषभमद्राक्षीत् । कृपालुः सोऽश्वादवरुह्य तस्य निकटीभूय कर्णमूले पंचपरमेष्ठिनमस्कृती ददौ । मृत्वा च तत्प्रभावेण तत्रैव वृषभध्वजश्छत्रच्छायनरेंद्रश्रीदत्तयोः सुतोऽभवत् । अन्यदा सः स्वैरं भ्रमन् तां जरद्वृषभभुवं ययौ प्राग्जन्मस्थानदर्शनाज्जातिस्मरणं च लेभे। तत्र च चैत्यमकारयत् तस्य चैत्यस्य चैकतो भित्तौ मुमूर्षुं तं जरद्गव मालेखयामास । तत्कर्णान्ते नमस्कारदायिनं च तं पुरुषं तदभ्यर्णे च सपर्याणं तुरंगममालेखयामास। आरक्षास्तत्रादिक्षत् यथा यश्चित्रमिदं परमार्थतोविदन्नुदीक्ष्येत सः मम त्वरितं ज्ञाप्यः। इत्युक्त्वा सः वेश्म ययौ अन्यदा पुनस्तत्र चैत्ये वंदनाय श्रेष्ठिपुंगवः सः पद्मरुचिराययौ। सः तत्रार्हन्तं वंदित्वा भित्तिचित्रमुदैक्षत, सविस्मयश्चैतत्सर्वं मे संवदतीत्यूचे। अथ तदारक्षै र्विज्ञप्तो वृषभध्वजस्तत्रागात् किमिदं चित्रवृत्तान्तं त्वं

यथासीतामत्याक्षीस्तथैव भवभीता सा स्वार्थनिष्ठा सर्वमत्यजत् । सीतेह वः मत्यक्षं स्वयं कुंतलानुत्पाटय जय-
भूपणसंनिधौ विधिवद्दीक्षामाददे । इदानीमेव तस्यर्षेः केवलमुदपद्यत तवापि हि तज्ज्ञानमहिमावश्यकृत्यमस्ति।
हे स्वामिन् ! आत्तमहाव्रताऽनघा स्वामिनी सा सीता सतीमार्गमिव मुक्तिमार्गं दर्शयन्ती तत्रास्ते। रामःमकृति-
मालम्ब्योवाच, मम मिया तस्य केवलिनोऽन्तिके यत्परिव्रज्यामुपाददे तत्साधु कृतम् । इत्युक्त्वा सपरीवारो
रघुपुंगवो जगाम जयभूपणं च नत्वा तस्माद्देशनां शुश्राव। देशनान्ते च पमच्छ, हे मभो ! अहमात्मानं न वेद्मि
भव्योऽहं किमुताऽभव्योऽहं तदाचक्ष्व, मे मसीद । अथ सोऽपि केवल्याख्यत् त्वं कंवलं भव्योऽसीति न, किन्त्व-
नेनैव जन्मनोत्पन्नकेवलः सिद्धिं यास्यसि । भूयोऽपि रामःपमच्छ मोक्षस्तु मव्रज्यया भवेत् सा तु सर्वत्यागेन भवति
किंतु मम लक्ष्मणो दुस्त्यजोऽस्ति । मुनिराख्यदवश्यं ते बलसंपदो भोक्तव्याः सन्ति तदन्ते च त्यक्तसंगः सन्
मव्रज्य शिवमाप्स्यसि । विभीपणो नत्वाऽपृच्छत् केन माग्जन्मकर्मणा रावणः सीतां जहार लक्ष्मणश्च युधि तं-
न्यहन् । सुग्रीवो भामंडलश्च तथेमौ लवणाकुशौ अहंच रघूद्वहे केन कर्मणात्यन्तरक्ताः स्मः । अथ भगवानाच-
चक्षेऽत्र दक्षिणे भरतार्धे क्षेमपुरे पुरे नयदत्तो वणिगभवत् । तस्य सुनंदाकुक्षिजौ धनदत्तवसुदत्तौ सुतावभूतां
तयोर्मित्रं याज्ञवल्क्यो द्विजोऽभवत् । तस्मिन्पुरे नाम्ना सागरदत्तश्च वणिक् गुणधरः सूनुः कन्याच पुन र्गुण-
वत्यभूत् । गुणवती सा सागरदत्तेनानुरूपगुणाय नयदत्तात्मजन्मने धनदत्ताय दत्ता । रत्नप्रभा माता पुनरर्थलो-
भतस्तत्रत्याय चाढ्याय श्रीकान्तनाम्ने छन्नं ददौ । मित्रवंचने ह्यसहो याज्ञवल्क्यस्तु तज्ज्ञात्वा स्वमित्रयो र्नयद-

किन्तु मत्पूर्वकर्मणामेव दोषोऽस्ति । ईदृग्दुःखावर्तप्रदायिनां कर्मणां निर्विण्णाऽहं तेषामुच्छेदकारिणीं परिव्रज्यां ग्रहीष्यामि । इत्युक्त्वा मैथिली स्वमुष्टिना केशानुच्चखान जिनेश्वरः शक्रस्येव रामस्य चार्पयामास । काकुत्स्थः सद्यो मुमूर्छ यावच्चैषो नोत्तस्थौ तावत्सीता साधुजयभूषणसंनिधौ ययौ ।

केवली स जयभूषणो मुनि र्मैथिलीं विधिवदप्यदीक्षयत् ॥
सुप्रभाख्यगणिनीपरिच्छदे तां चकार च तपः परायणाम् ॥ २३२ ॥

इत्याचार्य श्रीहेमचन्द्रविरचिते त्रिषष्टि शलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि अन्वयात्मक गद्यरचनायां सीताशुद्धिव्रतग्रहणो नाम नवमः सर्गः समाप्तः ॥ ९ ॥

---

## अथ दशमः सर्गः

अथ चन्दनेन सिक्तो लब्धसंज्ञो रघूद्वहो ननु मनस्विनी सा सीतादेवी क्वास्तीति व्याजहार । भो भूचरा खेचराश्च यूयं मुमूर्षवश्चेन्नस्युस्तल्लुंचितकेशामपि मे प्रियामाशु दर्शयत । हे वत्स ! वत्स ! सौमित्रे ! एहि तूणौ तूणौ धनुर्धनु र्मदमी मयि दुःस्थिते सत्यपि सुस्थिता अप्युदासीनाः सन्ति । इत्युक्त्वा धन्वगृण्हंतं तं नत्वा लक्ष्मणोऽब्रवीत् हे आर्य ! आर्य किमिदमस्ति, एष लोकःखलु तव किंकरोऽस्ति । न्यायनैष्ठिकस्त्वंदोपभीतो

भावतुष्टदेवप्रभावतः पद्मोपरि सिंहासनस्थिता पद्मेवास्थात् । क्वापि हुंकारं कुर्वाणं क्वचित् गुलु गुला-
रवं क्वापि भंभायितध्वानं क्वचित्पटपटाध्वनि क्वचिद्दिलिदिलिस्वानं क्वचित् खलखलास्वनम् तत्रांभः
समुद्रांभ इव सावर्तमैक्ष्यत । उद्वेलस्य वारिधेरिव वाप्यास्तदुच्छलज्जलं गरीयसोऽपि मंचानाप्लावयितुमारेभे ।
भयोद्भ्रान्ता विद्याधराः समुत्पत्याम्बर इयु., हे महासति सीते पाहि पाह्येवं भूचराश्च चुक्रुशुः । सीताऽप्युत्तीर्णं
तदंभः स्वपाणिभ्यामवालयत् तत्तस्याः प्रभावतः पुनर्वापीप्रमाणमभूत् । उत्पलैः कुमुदैः पद्मैः पुंडरीकै
र्निरंतरा सौरभोद्भ्रान्तभृंगालीसंगीता हंसशालिनी आस्फलद्वीचिनिचयमणिसोपानवन्धुरा रत्नोपलै र्वद्धोभयतटा
सा वापी वभूव । सीताशीलप्रशंसिनो नारदाद्याः खे ननृतुः सुराश्चतुष्टाः सन्तः सीतोपरिष्टाद् पुष्पवृष्टिं व्यधुः ।
अहो शीलमहोशीलं रामपत्न्या यशस्करमिति क्षणाद् रोदःकुक्षिंभरिर्लोकप्रघोषोऽभूत् । तं मातुः प्रभावं
दृष्ट्वा मुदितौ लवणांकुशौ हंसाविव तरन्तौ तत्समीपमुपेयतुः । तौ मूर्ध्न्याघ्राय वैदेह्या पार्श्वयो रुपवेशितौ नदीतीर-
द्वयस्थितौ कलभाविव रेजाते । सभक्तयः सौमित्रिशत्रुघ्नभामंडलविभीषणाः सुग्रीवाद्याश्च गत्वा वैदेहीं नमश्चक्रुः ।
रामोऽप्यभिरामतरद्युतिः सीतामुपाययौ पश्चात्तापत्रपापूर्णो रचितांजलिरित्यूचे । हे देवि ! स्वभावादप्यसद्दोष-
ग्रहिणां पुरवासिनां छन्दानुवृत्त्या त्यक्ताऽसि तत्सहस्व । उग्रश्वापदेऽरण्ये त्यक्ता त्वं स्वप्रभावतोऽजीवस्तदप्येकं
दिव्यमासीदहंपुनस्तदपि नाज्ञासिषम् । इदानीमिदं मम सर्वं क्षान्त्वा पुष्पकमध्यास्व वेश्मनि चलस्व मयासहिता
प्राग्वद्रमस्व । सीताऽप्यूचे ते दोषो नास्ति लोकस्यापिकश्चनदोषो नास्ति अन्यस्यापि कस्यापि दोषो नास्ति

सीदधुना कथं शीलवत्यस्ति । भूयोऽपि दोषं गृण्हतां वः काप्यर्गला नास्ति ततः प्रत्ययाय सीता ज्वलितेऽनले विशतु । इत्युक्त्वा रामो हस्तशतत्रयं पुरुषद्वयदघ्नं गर्तमखानयत् चन्दनेन्धनैश्चापूरयत् । अत्रान्तरे वैताढ्यस्योत्तरश्रेणिवास्तव्यो हरिविक्रमराजस्य कुमारो जयभूषण ऊढाष्टशतनारीकः किरणमंडलां पत्नीं हेमशिखाख्येन मातुलसूनुना सुप्तां दृष्ट्वा निर्वासयामास स्वयंच तदैव प्राव्रजत् सा पि मृत्वा विद्युद्दंष्ट्रेति राक्षसी समजनि । सः जयभूषण स्तदाऽयोध्याबहिरभ्येत्य प्रतिमया तस्थौ विद्युद्दंष्ट्रा च तमुपाद्रवत् । तस्य च केवलमुत्पेदे तदानीं च तदुत्सवविवित्सया सुनासीरादयः सुराः समाजग्मुः । देवाः सीतायास्तद्दिव्यं प्रेक्ष्य शक्रमेवं व्यजिज्ञपन्, लोकालीकापवादेन सीता वन्हौ प्रवेक्ष्यतीति । हरिः सीतासान्निध्याय पत्त्यनीकपतिमादिशत् स्वयं तु तस्यर्षेः केवलज्ञानोत्सवं विदधे । अथ रामाज्ञया भृतका श्चंदनाचितं चक्षुषामपि दुःप्रेक्ष्यं तं गर्तं परितो ज्वालयामासुः । तं ज्वालाकरालं प्रेक्ष्य रामो हृदीदं दध्यौ अहो ! अत्यन्तविषमं मम किमिदमुपस्थितम् । इयं महासती निःशंका नूनमग्नौ प्रवेक्ष्यति हि प्रायेण दैवस्येव दिव्यस्य गति र्विषमाऽस्ति मया सहास्या निर्वासो रावणेन च हरणं मया वने त्याग एवमेतदपि भूयो भूयो मत्कृतमस्ति । एवं सः रामो यावदचिन्तयत् तावत्सीतोपपावकं स्थित्वा सर्वज्ञं च स्मृत्वेति सत्यापनां चक्रे । हे लोकपालाः सर्वे लोकाश्च शृणुत यद्यहं रामादन्यमभ्यलषं तदायमग्निर्मां दहतु । अन्यथा तु वारीव सुखस्पर्शोऽस्त्वित्युदीर्य स्मृतनमस्कारा सा तस्मिन् हुताशने झम्पां ददौ । याव त्सा प्राविशत् तावदाश्वपि वह्नि विध्यातः सः गर्तस्तु स्वच्छोदकापूर्णो वापीत्वमापयौ । सीतात्वधिजलं सती-

चन्माकुपस्तव शुद्धये सर्वैः पौरै नृपैश्च समं राघवो मंचारूढोऽस्ति। तेनेत्युक्ते सति पूर्वमपि शुद्धिकांक्षिणी-जानकी तद्विमानमारुरोहायोध्यायां च जगाम। सा माहेन्द्रोदयमुद्यानं समुपेत्योत्ततार लक्ष्मणेन नृपैरपि दत्तार्घा चैत्य नमश्चक्रे। सौमित्रिरग्रे निषद्य नृपैः सममदोऽवदत्, हे देवि! निजां पुरीं निजं वेश्म प्रवेशात्पावयेति सीताऽप्यूचे हे वत्स! प्राप्तशुद्धिः सतीमां पुरीं गृहंच प्रवेक्ष्यामि नान्यथाऽयमपवादो जातु शाम्यति। ते भूभुज इति सीताप्रतिज्ञां रामायाशंसन्, रामोऽपि वैदेहीमुपेत्य न्यायनिष्ठुरमित्यूचे। तद्गृहे तस्थुष्या अपि ते दशास्येन समं भोगा न स्युश्चेत्तर्हि शुद्धये सर्वलोकानां समक्षं दिव्यं कुरु। सीताऽपि स्मित्वैवमुवाच त्वत्तोऽपरो विज्ञो नह्यस्ति, योहि दोपमज्ञात्वा महावने मे त्यागं कुर्याः। हेकाकुत्स्थ! त्वंविचक्षणोऽसि तदादौ दडं विधाय मत्परीक्षणं कुरुषे तत्रापि नन्वहं सज्जाऽस्मि। विलक्षणो रामोऽप्यूचे तव दोषो नास्तीति जाने परंतु जनोत्पादित-दोषस्योत्तारणायेदमुच्यते। जानकी जगाद मया दिव्यपंचकं, स्वीकृतं ज्वलिते वह्नौ विशाम्यथ तंडुलान् भक्षयामि तप्तं [1]कोशं पिबामि जिह्वयाऽहं [2]फालं गृण्हामि तुभ्यं किं रोचते तद्वद। अत्रान्तरेऽन्तरीक्षस्थः सिद्धार्थो नारदोऽप्यथ सर्वश्च लोकस्तुमुलमिदं निपिध्याभापत। भो! भो राघव! इयं सीतासती निश्चयेन सती महासतीति जातुचिदिह विकल्पं मा कार्षीः। रामोऽप्युवाच हे लोका वः कापि मर्यादा नास्ति युष्माभिरेव दोपं संकल्प्य पुरापीयं दूषिता। यूयं पुनर्दूरे स्थिताः पुरतोऽन्यद्ब्रूथाधुनाऽप्यन्यद्ब्रूथ तदा कथं सदोपाऽऽ

---

१ सीसकम २ शस्त्रधारम

विमानेन पुंडरीकपुरं ययौ । रामलक्ष्मणौ सदक्षपुत्रलाभेन मुदिता स्वामिहर्षेण ते भूचराः खेचराश्चजहृषुश्च
भामंडलनृपाख्यातो वज्रजंघनृपोऽपि हि चिरपत्तिवद्विनीतो रामसौमित्री ननाम । रामस्तमेवमाललाप त्वं मे
भामंडलसमोऽसि यस्त्वं मे पुत्राववर्धयरिमां काष्ठामनैषीश्च। इत्युक्त्वा सलक्ष्मणः पद्मनाभः पुष्पकारूढोऽधोसनो-
पविष्टाभ्यां पुत्राभ्यां सह पुरीं प्राविशत् । विस्मितैरुद्ग्रीवपार्ष्णिभिः पौरै राजमार्गे प्रेक्ष्यमाणस्तूयमानस्तुतो रामो
गृहेऽगमत् । तत्र सलक्ष्मणो रामः पुत्राभ्यां सहोत्ततार चात्यन्तमुदामहान्तमुत्सवं कारयामास । अथ सुमित्राभूः
कपीश्वरविभीषणौ हनूमानंगदाद्याश्च संभूय राममेवं व्यजिज्ञपन् । त्वयाविरहिता परदेशे स्थिता देवी
ह्यधुनाऽमूभ्यां कुमाराभ्यां विनाऽतिकष्टेन तिष्ठति । हे स्वामिन् यद्यादिशसि तदद्य तामिहानयामोऽन्यथातु
पतिपुत्रोज्झिता सा सती विपत्स्यते । रामः किञ्चिद्विचिन्त्योचे जानकी कथमानीयते ह्यलीकोऽपि लोकापवादो
बलवानंतरायकृदस्ति । अहं जाने यत्सीता सत्यस्तीति, सापि स्वंनिर्मलंवेत्ति तद्दिव्यं दातुमथादातुं द्वयोरपि
भीर्नास्ति । ततः सा देवी सर्वलोकानां प्रत्यक्षं दिव्यं करोतु शुद्धया तया सार्धं मे पुनर्गृहवासोऽस्तु । एवमस्त्वि-
त्युदित्वा ते पुर्या बहि र्विशालान्मंडपानुच्चैस्तदन्तर्मचधोरणीश्चाकारयन् । तेषु भूपाः पौरामात्यादयोऽपि च
ते विभीषणप्रमुखाः खेचरा अपि चोपाविशन् । ततः कपीश्वरो रामाज्ञयोत्थाय स्वयं पुंडरीकपुरे गत्वा नत्वा च
वैदेहीमित्युवाच । हे देवि ! त्वत्कृते रामेण पुष्पकं विमानं प्रैषि तदिदानीमिदमध्यास्व रामोपान्तमुपेहिच ।
साप्यूचेऽद्यापि मेऽरण्यत्यागदुःखं न शाम्यति ततो भूयो दुःखान्तरप्रदं रामं कथं यामि । सः भूयोऽपि नत्वोवो-

भ्रमदर्कभ्रमकरं दिवि भ्रमयित्वाऽस्खलद्रयमंकुशाय मुमोच । अंकुशो लवणश्चाप्यापतच्चत् सर्वात्मनाऽनेकशोऽस्त्रै स्ताडयामास, तथापि तन्न प्रत्यहन्यत। तच्चक्रं वेगेनापत्यांकुशस्य प्रदक्षिणां कृत्वांऽडजः पुनर्नीडमिव लक्ष्मणहस्येऽगात्। भूयोऽपि लक्ष्मणस्तदमुंचत् तदापि तत् तद्वत्प्रदक्षिणां कृत्वा भग्नो द्विपश्छालामिव पुनस्तत्पाणिमेवागात्। तदा विषण्णौ रामलक्ष्मणौ किमिह भारत एतावेच सीरिशार्ङ्गिणौ चावां तु नैवमिति चिन्तयामासतुः। अत्रान्तरे नारदर्षिः सिद्धार्थेन सहैव हि तत्रोपेत्य सलक्ष्मणं खिन्नं राममेवमवोचत् । हे रघूद्वहौ ! युवयो र्हर्षस्थानेऽयं विषादः किम् ! हि पुत्रात्पराजयः कस्य वंशोद्योतनाय न भवति । इमौ तौ लवणांकुशौ सीताकुक्षिभवौ पुत्रौ युद्धव्याजेन त्वां द्रष्टुमत्रागतौ नत्वरी । अत्र ते ह्यभिज्ञानमिदमेव यच्चक्रं न प्रवभूव पुरा बाहुबलावपि भारतं चक्रं मुधाऽभूत् । ततो नारदः सीतायास्त्यागात् प्रभृति पुत्रयुद्धान्तं विश्वविस्मयदायकमखिलं वृत्तान्तमाचख्यौ । विस्मयव्रीडाखेदहर्षसमाकुलो रामोऽपि मुमूर्छ चंदनांभसा संसिक्तश्च संज्ञां लेभे । उदश्रुः पुत्रवात्सल्यपूरितो रामो लक्ष्मणेन सह लवणांकुशयोरन्तिके द्रुतं जगाम । विनीतौ लवणांकुशौ त्यक्तास्त्रौ सन्तौ सद्यो रथादवतीर्य क्रमात् पद्मसौमित्र्योः पादेषु पेततुः । रघूद्वहस्तावालिंग्य निजोत्संगमारोप्य मूर्ध्नि चुंबन् शोकस्नेहसमाकुल उच्चै रुरोद। अथ लक्ष्मणस्तौ रामोत्संगान्निजोत्संगमारोप्य शिरसि चुंबन्नश्रुपूर्णदृक् बाहुभ्यां परिरेभे । शत्रुघ्नोऽपि पितुरिव पादपद्मयो र्विलुठन्तौ विनीतौ तौ दूरात्प्रसारितभुजः सजालिलिंग । उभयोरपि सेनयोरपरेऽपि भूपाला विवाहमिलिता इव संभूय प्रमोदन्ते स्म । पुत्रयोर्विक्रमं पित्रा सहच संगमं दृष्ट्वा हृष्टा सीता

रामस्यंदनं वज्रराड् अनंगलवणरथं मिथोऽभ्यढौकयताम् । विराधः सौमित्रे रथ पृथुः पुनरंकुशस्यरथमेवं वरसारथी अन्योऽन्यमभ्यमित्रीणं चक्राते । अग्रसारथयस्ते चतुरं रथान् भ्रमयामासुस्ते द्वंद्वयोधिनश्चत्वारोऽपि विविधं प्रजहुः लवणांकुशौ विज्ञातज्ञातिसंबंधौ सापेक्षौ युयुधाते रामलक्ष्मणौ त्वज्ञानान्निरपेक्षौ युयुधाते । विविधै रायुधैर्युध्वा युद्धान्तेच्छुरघूद्वहः कृतान्तवदनमूचे रथं प्रत्यरि वाहयेति । कृतान्तोऽप्यदो बभाषे, । इमी हया अमुना ते । प्रतियोधेन विशिखैःसर्वांगं विद्धाः खेदं प्राप्ताः सन्ति । कशाभिस्ताडिता अप्यमी तुरंगा न त्वरन्ते वैर्यस्त्रताडितस्ते रथश्चासौ जर्जरोऽभूत् । हे प्रभो ! द्विट्कांडाघातजर्जरावेतौ च ममदोर्दण्डौ रश्मिं प्रतोदं वा चालयितुं नहि क्षमौ स्तः। पद्मनाभोऽप्यभापीद् ममापि वज्रावर्तं धनुः शिथिलायते चित्रस्थितमिव कार्यकृन्नास्ति । वैरिनिर्दलनाक्षममे-तन्मुशलरत्नमपि संप्रति कणकंडनमात्रार्हमेवाभूत् । यद्धलरत्नं दुष्टनृपदन्तिनामनेकशोंकुशीभूतं तदप्येतद्भूपाटनो-चितमेवाभूत् । सदा यक्षै रक्षितानां विपक्षक्षयकारिणां तेपामेव ममास्त्राणांकेयमवस्थाऽऽगता । यथाऽपराजि-तासूनोस्तदा मोघास्त्रताऽभूत् तथैव मदनांकुशयोधिनो लक्ष्मणस्यापि मोघास्त्रताऽभूत् । अत्रान्तरेऽकुशेन कुलिशेनेवेषुणा ताडितः सौमित्रि मूर्छितो रथे न्यपतत् । अथ सौमित्रिमूर्छाविधुरो विराधो रणात् स्यदनं प्रत्ययोध्यमचालय ल्लक्ष्मणश्च सञ्ज्ञां लेभे । लक्ष्मणश्च साक्षेपमूचे हे विराध । रामभ्रातुर्दशरथसूनो र्ममानुचि-तमदो नवं किमकृथाः । यत्र सो द्विपन्नस्ति तत्रैव शीघ्रं मे रथं नय एपोहममोघरंहसा चक्रेण तच्छीर्पं छिनद्मि । अथैवमुक्तोविराधः प्रत्यंकुश रथ प्रनैपीत् तिष्ठ, तिष्ठेति जल्पंश्च लक्ष्मणश्चक्रं जग्राह । अथ क्रुद्धः सौमित्रिस्तच्चक्रं

निर्मलाऽभूत् । ययो रणे रावणो मल्लोऽपि नासीत् दोःकंडुरभसावशाद्युवाभ्यां तयोर्युद्धं कथमारेभे । तावप्यूचतु हें मातुल ! अनया स्नेहभीरुतयाऽलम् त्वत्स्वसाप्यसमदंबेयंपुराऽदः कातरं वच ऊचे । आवामपि हि विद्वो यत्तातयोः कोऽपि मल्लो न, तयो र्युद्धं त्यक्त्वा ह्रियं कथमुत्पादयावः । तयो र्ब्रुवाणयोरेव सैन्यानां रामसैनिकैः समं संवर्तावर्तदर्शकं युद्धं प्रवहृते । अनयो र्महीचरं सैन्यं खेचरैः सुग्रीवाद्यै र्मा हन्यतामिति साशंको भामंडलो युधि ययौ । अतिशायिना रोमांचेनोच्छ्वास्यमानवर्माणौ महाबलौ कुमारावप्याहवायोत्तस्थाते । निःशंकं युद्धमानास्ते सुग्रीवाद्या नभश्चरा युधि भामंडलं दृष्ट्वा काविमाविति पप्रच्छुः । इमौ रामपुत्राविति भामंडलात् ज्ञात्वा गत्वा सीतां नमश्चक्रुः पुरो भुवि च न्यषदन् । इतश्च दोष्मन्तौ क्षयोद्भ्रान्ताब्धिदुर्धरौ तौ लवणांकुशौ क्षणेनापि रामसैन्यं दुधुवतुः । वने उद्धतौ सिंहाविव तौ रणे यत्र तत्र भ्रेमतुः सादी रथी निषादी वोदायुधस्तदा तत्र नास्थात् । तावेवं रामसैन्यं हतविद्रुतं विधाय केनाप्यस्खलितौ युधि रामं सौमित्रिं चेयतुः । रामसौमित्री तौ प्रेक्ष्यान्योन्यमेवमूचतु र्नौ विद्विषावेतौ कावपि कुमारावभिरामौ स्तः । मनो निसर्गात् स्निह्यति किंत्विदं बलाद्रुह्यति तेनैतावाश्लेष्टुमुद्यच्छावो वा योधयितुमुद्यच्छावः । इतिव्याहारिणं रथस्थं रामं रथस्थो लवणो लक्ष्मणश्चांकुशः सौष्ठवप्रश्रयान्वितमवोचत् । जगदजय्यस्य दोष्मतो रावणस्यापि जैत्रं त्वां वीरयुद्धश्रद्धालुरहं दिष्ट्या चिरादद्राक्षम् । ते रणश्रद्धा रावणेनापि ध्रुवं नापूर्यत तामेषोऽहं पूरयिष्यामि त्वं च मे पूरयिष्यति । इत्युक्ते सति रामसौमित्री तौ द्वौ लवणांकुशौ च ध्वानभीषणं स्वं स्वं धनुरास्फालयामासतुः । कृतान्तसारथी

द्रष्टुमुत्कंठास्तर्हि विनीतीभूय यातं हि पूज्ये विनयोऽर्हति । ततस्तौ त्वरयाजिनि द्विपत्पदप्राप्ते पितर्यपि तस्मिन् विनयः कथं क्रियत एवमूचाते । आवां तव पुत्रावायाताविति तस्य पुरो गत्वा स्वयं तस्यापि ह्रीकरं वचः कथं वदिष्यावः । दोष्मतस्तस्यजनकस्याप्यानंदजनकं कुलद्वयशस्करं युद्धाह्वानं तु युज्यते । इत्यभिधाय सीतायां रुदन्त्यामपि महोत्साहौ महासैन्यौ तौ रामनगरीं प्रति चेलतुः । तयोः पथि कुठारकुद्दालभृतांनृणां दशसहस्राणि वृक्षादिकमच्छिदन् क्ष्मां च समां व्यधुः । क्रमेण गत्वा सेनाभिः सर्वतो दिशो रुन्धानौ योध्धुकामौ महाभुजौ तावुपायोध्यमूपतुः । पुरो बहि विंरुद्धं भूरि तद्बलमायातं श्रुत्वा उभौ राघवौ विसिष्मियाते च । अथ सौमित्रि रित्थमूचे केऽमी मर्तुकामाः परे आर्यविक्रमपावकं पतंगवत् समापेतुः । इत्युक्त्वा सुग्रीवादिभिरावृतोऽमित्रध्वान्तभास्करः सौमित्री रामेण सह युद्धे चचाल । इतश्च भामंडलभूपति र्नारदात्तच्छ्रुत्वा ससंभ्रमः पुंडरीकपुरे सीतामुपेयाय । रुदती सीता तस्याख्यत् हे भ्रातः ! रामो मामत्यजत्, मत्त्यागमसहिष्णू च त्वद्यामेयौ युधे गतौ । भामडलोऽप्येवमुवाच, रामो रभसावशात् त्वत्त्यागं चक्रे द्वितीयं तु पुत्रयोर्वधं माकार्षीत् । राघवस्तावात्मजावजानानो यावन्नहन्ति, उत्तिष्ठ तावदावामविलंबितं तत्र गच्छावः । इत्युक्त्वा जानकीमात्मविमानमधिरोप्य भामंडलो लवणांकुशयोः स्कंधावारे ययौ । तौ लवणांकुशौ कुमारौ सीतां तथा मातुलोऽयमिति सीताख्यातं भामंडलं च नमश्चक्रतुः । हर्षरोमांचितवपुः सः भामंडलस्तौ शिरसि चुंबित्वा स्वोत्संगमधिरोप्य च गद्गदाक्षरमित्यूचे । पुरापि वीरपत्न्यासीद् संप्रति दिष्टया वीरसूर्मे जामि युवाभ्यां यामिनीजानि-

अयन् वज्रजंघ मुवाच तत्र गत्वावां रामलक्ष्मणौ प्रेक्षितु मिच्छाव इति । सः तद्वाचं प्रतिपद्यांकुशं पृथुराट्पुत्र्या कनकमालया महोत्सवेन पर्यणाययत् । वज्रजंघपृथुभ्यामन्वितौ तौ लवणांकुशौ बहून्देशान् साधयन्तौ लोकारण्यपुरमीयतुः । तत्र तद्भवं धैर्यशौण्डीर्यशालिनं मानिनं कुबेरकान्तनामानं युद्धभूमौ जिग्यतुः । तौ लंपाकेष्वेककर्णाख्यं नृपं विजिग्याते, ततश्च विजयस्थल्यां भ्रातृशताभिधं भूपं च विजिग्याते । गंगामुत्तीर्य कैलासस्योत्तरां दिशमीयतुस्तत्रच नंदनचारूणां देशानां जयं चक्रतुः । ततश्च तौ रुप, कुंतल, कालाम्बु, नंदि, नंदन, सिंहलान् शलभान्, अनलान्, शूलान्, भीमान्, भूतरवादिकान्, देशान्, तन्नृपांश्च जयन्तौ सिन्धोः परकूलमुपेयतुस्तत्रचार्याननार्यांश्च नृपान् साधयामासतुः । एवं बहुदेशेश्वरान् साधयित्वा तैः सहैव तौ निवृत्य तत्पुंडरीकपुरं पुरमुपेयतुः । अहो ! वज्रजंघो धन्योऽसि यदीयौ यामिनंदनावीदृशौ स्त इति जल्पद्भिः पुरीजनै वीक्ष्यमाणौ भूपवीरैः समावृतौ तौ वीरौ स्वगृहं जग्मतु विश्वपावनौ जानक्याश्चरणौ प्रणेमतुश्च । मुदश्रुभिः स्नपयन्ती सीता तौ मूर्ध्नि चुचुंब, रामलक्ष्मणयोस्तुल्यौ भूयास्तमिति चावदत् । तौ वज्रजंघमूचतु र्हे मातुल ! प्रागावयोस्त्वयाऽयोध्यायां यान मेने तदिदानीमनुतिष्ठ । लंपा, करुप, कालांबु, कुंतलाः, शलभानलशूलाद्याश्चापरेऽपि महीभुज आज्ञाप्यन्ताम्, प्रयाणभंभा वाद्यंतां दिशो बलैश्छाद्यन्तां येनावयो र्माता त्यक्ता तस्य विक्रमोऽद्य वीक्ष्योऽस्ति । सद्यो रुदती सीताऽपि सगद्गदमेवं जगाद, हे वत्सौ ! अमुना कर्मणा युवयोः केयमनर्थेच्छाऽस्ति । वीरौ वां पितृपितृव्यौ सुरसद्मामपि दुर्जयौ स्तः यकाभ्यां त्रैलोक्यकंटको रक्षःपति र्निहतः । हे बालकौ ! युवयोर्यदि पितरं

श्रोतसो रंह इवौजस्विनोस्तयो रंहो द्विपन्तो मनागपि न सेहिरे । ससैन्योऽपि पृथुर्नरेश्वरो यावद्भज्यत ताव-त्स्मेरास्यौ तौ रामनंदनावेवमूचतुः । इहाहवेऽपरिज्ञातवंशाभ्यां विज्ञातवंशजा यूयं त्वहो कथं पलायध्वे । इति तद्वचनं श्रुत्वा पृथुर्वलित्वाऽब्रवीत्, युष्माकं वंशोऽमुना विक्रमेण मया व्यज्ञायि । नूनं मम हितेनैव वज्रजंघेन भूभुजांऽकुशाय कन्याऽर्थिता हीदृग् वरः क्व लभ्यते । सः इति सानुनयं प्रोच्य तदैव ह्यंकुशाय पूर्वयाचितां कमलमालाख्यां कन्यां प्रददौ । पृथुनृपः पुत्र्या अंकुशं वरं स्पृहयन् सर्वभूभुजां समक्षं वज्रजंघेन सह संधानं चक्रे । वज्रजंघनरेश्वरः शिविरं न्यस्य तत्रास्थात् तदानीं नारदमुनिरागाच्च तेनचोच्चकैः सच्चक्रे । राजसु निषण्णेषु सत्सु वज्रजंघो नारदमुवाच हे मुने ! असौ पृथुर्नृपोऽङ्कुशाय निजां कन्यां दास्यति । तल्लवणांकुशयो रस्मत्संबंधिनोर्वंशमस्याख्याहि येन ज्ञातजामातृवंश एषस्तुष्यति । अथ नारदः स्मित्वोचे यस्योत्प-त्यादिकंदः स भगवानृषभध्वजस्तयोरनयोर्वंशं को न वेत्ति । अनयोर्वंशे कथाश्रुता भरताद्याश्चक्रिणो जाता ह्यनयोस्तातौ रामलक्ष्मणौ प्रत्यक्षौ तौ को न वेति । अनयोर्गर्भस्थयोरप्ययोध्यालोकजन्मनोऽपवादाच्च-कितेन रामेण जानकी त्यक्ता । अथांकुशो हसित्वोचे हे ब्रह्मन् ! वैदेहीं दारुणे वने त्यजता रामेण तत्र खलु साधु कृतम् । निराकृतौ ह्यपवादस्य भूयांसि कारणानि भवन्ति, तत्र विद्वानपि सः किन्त्वेवं चकार । अथ लवण एवं पप्रच्छ यस्यां सानुजः सपरिच्छदो मे तातो वसति सा पुरी कियति दूरे वर्तते । मुनिश्चोचे विश्वैकनिर्मलस्तव पिता यस्यामस्ति साऽयोध्या पूरित ः षष्ठियुग्योजनशतं वर्तते खलु । अथ लवणः प्रश्रयं

नोत्सवौ तौ महाभुजौ शिक्षार्हौ कलभाविव कलाग्रहणयोग्यावजायेताम् । तदा चाणुव्रती विद्यावलर्धिसंपन्नः कलाविचक्षणस्त्रिसंध्यमपिमेर्वद्रौ चैत्ययात्रासु चंक्रमैराकाशगामी सिद्धपुत्रको नाम्ना सिद्धार्थो भीक्षार्थं वैदेहीगृह-माययौ । वैदेह्या भक्तपानाद्यैः श्रद्धया भोजितस्तथा सुखविहारश्च तया पृष्टः सोऽवदत् । तेनाऽपि पृष्ठा वैदेही सुतजन्मावधि स्वकं वृत्तान्तं भ्रातुरिव तस्याग्रतो मूलादाचख्यौ । अष्टांगनिमित्तज्ञः करुणानिधिः सिद्धार्थ ऊचे यस्या लवणांकुशौ तनयौ स्तः सात्वं मुधा किं ताम्यसि ! । साक्षाद्रामलक्ष्मणाविव प्रशस्तलक्षणौ तौ सुतौ न चिरात्तव मनोरथं पूरयिष्यतः । तेनेत्याश्वासिता सीता कृताग्रहा तमभ्यर्थ्य पुत्राध्यापनहेतवे स्वगृहे धारयामास । सः तत्पुत्रौ भव्याविति सर्वाः कलास्तथाऽग्राहयत् तथा तौ द्युसदामपि दुर्जयावभूताम् । सहचारिणौ नूतनौ कंदर्पवसन्ताविवाधीताखिलकलौ तौ यौवनं मपेदाते । वज्रजंघो लक्ष्मीवतीभवां शशिचूलां पुत्रीमन्याद्वात्रिंशतं कन्याश्च लवणेनोदवाहयत् । सः पृथ्वीपुरपते ः पृथोरमृतवतीजातां कनकमालिकां कन्यका मंकुशाय ययाचे । पृथुपराक्रमः पृथुस्तदा यस्य वंशो न ज्ञायते तस्मै स्वदुहिता कथं दीयतामित्यभाषिष्ट । वज्रजंघस्तदाकर्ण्य तं क्रोधादभ्यषेणयत् पृथुगृह्यं व्याघ्ररथं नृपं युद्धे बद्धवाऽग्रहीत् । पृथुः स्वमित्रं पोतनपतिं साहाय्यायाह्वयत् हि विधुरेषु मंत्रवन्मित्राणि स्मरणीयानि भवन्ति। वज्रजंघोऽपि स्वान्पुत्रान् युधि नरैरानाययत् ते वार्यमाणवपि तौ लवणांकुशौ चेयतुः। अन्येद्यु र्मिलितयो र्द्वयोश्चम्वोर्युद्धं वव्रते तत्रातिवलैः परैर्वज्रजंघसैन्यं त्वभज्यत । मातुलचमूभंगेन संक्रुद्धौ लवणांकुशौ निरंकुशौ गजाविव प्रणिघ्नन्तावधावताम् । अंघ्रिपाः माद्दडुत्पूर

यदेकपक्षोक्तदोषेणान्यस्य पक्षस्य वाचिकमेवमादिशत् । कस्मिंदेशे नीतिशास्त्रे स्मृतौ चेदृश आचारोऽस्ति
निर्दोषोऽसि । शिक्षणम् । सदा विमृश्य कर्तुरपि तेऽविमृश्य विधायिता मद्भाग्यदोषेणैवेति मन्ये त्वंतु सदापि
हे प्रभो । यथा निर्दोषाप्यहं खलोक्त्या त्वया त्यक्ता तथा मिथ्यादृशां वाचाऽऽर्हतं धर्मं मात्याक्षीः । इत्युक्त्वा
मूर्छिता सीता पतित्वोत्थाय चाब्रवीत् रामो मया विना कथं जीविष्यति हा हतास्मि । राम इति वच आकर्ण्य
मूर्छया भुवि प्रतात संभ्रमाल्लक्ष्मणेनैत्य चंदनांभसा सिषेवे । सदा खलानां वचसोज्झिता महासती सा सीता
हा क्वास्तीत्येवमुत्थाय विललाप । अथ लक्ष्मण ऊचे हे स्वामिन्! सा महासती सीताऽद्यापि नूनं तस्मिन्वने
स्वप्रभावत्राता भविष्यति । हे प्रभो ! सीतादेवी त्वद्विरहाद्यावन्नविपद्यते तावद् गत्वा गवेषयित्वा च
स्वयमानीयताम् । राम एवं श्रुत्वा तेनैव सेनान्या सह तैः खेचरैश्चसह व्योमयानेनातिदारुणे तत्रारण्येऽगात् ।
रामः प्रतिस्थलं प्रतिजलं प्रतिद्रुमं जानकीं गवेषयामास नतु ददर्श । मन्ये व्याघ्रेण सिंहेन श्वापदेनापरेणवा
सीताजग्धेत्यतिदुःखितो रामःसुचिरं दध्यौ सीताप्राप्तौ विमुक्ताशो निवृत्य सीतागुणग्राहं पौरैर्मुहुर्मुहुर्निंद्यमानः
सन् स्वपुरीं ययौ । अथ पद्मः सीतामयमिव सर्वं शून्यं पश्यन्नुदश्रुदृक् सीतायाः प्रेतकार्यमकार्षीत् । रामस्य-
हृदि च सा सीता एकैव तस्थौ, क्वापि सीता तिष्ठति तथापि सः न विवेद । इतश्च वैदेही तत्र नामतोऽनंग-
लवणमथ मदनांकुशमपि युग्मिनौ सुतौ सुषुवे । महामना वज्रजंघः स्वपुत्रलाभादधिकं मोदमान स्तयोर्जन्मनाम-
महोत्सवौ चक्रे । तावुभौ भूचरावश्विनाविव लीलादुर्ललितौ धात्रीजनै र्लाल्यमानौ क्रमेण ववृधाते । नरेन्द्रनय-

ल्याशया सीता नमस्कारपरायणाऽ भीतैव तस्थौ । इयं दिव्यरूपा भूस्थिता कानामेत्यभिभाषिण स्ते सैनिकाः भत्युत तां दृष्ट्वा विभयांचक्रुः । सीताया रुदितं श्रुत्वा स्वरवित्तच्चमूनृप इयं गुर्विणी कापि महासत्यस्तीत्यवोचत। कृपालुः सो महीपाल उपसीतं जगाम सीताप्याशंकिता सती तस्य स्वं नेपथ्य मढौकयत् । राजाप्येवमभाषिष्ट त्वं मनागपि मा भैषीः हे स्वसे ! एतानि भूपणानि तवैवांगे तिष्ठन्तु । त्वं कासि, निर्घृणः कस्त्वामिहात्याक्षीत् तदाख्याहि मास्म शंकिष्ठा स्त्वत्कष्टेनाहं कष्टितोऽस्मि । सुमति र्नाम तन्मंत्री एत्य गजवाहनराजस्य वन्धुदेव्याश्च नंदनः पुंडरीकेश्वरो महासत्वः परनारीसहोदरो महार्हतो वज्रजंघोनाम नृपतिरस्ति । अत्र गजान् गृहीतुमेत्य कृतार्थीभूय च व्रजन् त्वद्दुःख दुःखितोऽ त्रागात् तन्निजं दुःखमाख्याहि । कृपालू तौ राजमंत्रिणौ रोदयन्ती सीता रुदती सती विश्वस्याशेषतः स्ववृत्तान्त माचख्यौ । निर्व्याजो राजा एवं व्याजहार त्वं मे धर्मस्वसाऽसि ह्येकं धर्मं मपन्नाः सर्वे मिथो बंधवः स्युः । तद्भामंडलस्येव ममभ्रातुरोकस्येहि स्त्रीणां पतिगृहादन्यत्स्थानं भ्रातृनिकेतनमस्ति । रामोऽपि लोकवादेन त्वमत्याक्षीत्स्वयंतु नात्याक्षीत् सोऽप्यद्य पश्चात्तापेन त्वमिव कष्टभागेव स्यादिति मन्ये। विरहातुरः सोऽपि दशरथात्मज एकाकी चक्रुवाक इवताभ्यन्नचिरात्वां गवेपयिष्यति । निर्विकारेण तेनेत्युक्ता आमेत्यभिधायिनी सीतातदुपनायितां शिविकां सद्यो रुरोह । अपरां मिथिलामिव पुंडरीकपुरमगात् तत्राहर्निशं धर्मशीला सा तद्दर्शिते गृहेऽस्थात् । इतश्च सो रामसेनानी गंत्वा सिंहनिनादाख्ये वने जानकीं त्यक्तवानस्मीति रामायाऽवदत् । 'सा मुहुर्मुहु र्मूर्छित्वा मुहुर्मुहु श्चेतित्वा कथं चिध्दैर्यमालम्ब्य

मद्वाचिकं सर्वथा शंसे। यदि त्वं निर्वादभीतस्तर्हि परीक्षां कथं नाकृथाः, हि शंकास्थाने सर्वोऽपि जनो दिव्यादि लभते। मंदभाग्याहं वनेऽपि स्वकर्माण्यनुभोक्ष्ये, परं त्वं तु विवेकस्य कुलस्य चानुरूपं नाकार्षीः। हे स्वामिन्! यथा खलगिरा मामेकपदेऽप्यत्याक्षी स्तथा मिथ्यादृशां वाचा जिनभाषितं धर्मं मात्याक्षीः। इत्युक्त्वा मूर्छिता सा भूमौ पतितोत्थाय चाभ्यधात्, हा, मया विना रामः कथं जीविष्यति! हतास्मि। हे वत्स! अथ रामाय स्वस्त्याशंसे लक्ष्मणस्य चाशिष माशंसे स्ते पंथानः शिवाः सन्तु, उपराघवं गच्छेति।

एवं विधेऽपि दयिते विपरीतवृत्तौ यैवंविधा तदियमेव सतीषु धुर्या।
संचिन्तयन्निति भृशं प्रणिपत्य मुक्त्वा सीतां कृतान्तवदनो ववले कथंचित्॥

इत्याचार्य श्रीहेमचन्द्र विरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि अन्वयात्मक गद्यरचनायां सीतापरित्यागो नामाष्टमः सर्गः समाप्तः॥

## अथः नवमः सर्गः

अथ भयोद्भ्रान्ताड सीता पूर्वदुष्कृतदूषितमात्मानं निन्दंतीतस्ततो वने बभ्राम। भूयोभूयश्च रुदती पदे पदे च स्खलंती गच्छन्ती च पुरतः समापतन्महत्सैन्यमपश्यत्। तद्बलं प्रेक्ष्यापि मृत्युजीवितयो स्तु-

पतित्वा महासत्याः सीतादेव्या अयं त्यागो न ह्युचित इति बभाषे । अतः परं त्वया न वाच्यमिति रामेण भाषिते सति सौमित्रिर्नीरंगीच्छन्नवक्त्रो रुदन् स्वगृहमगात् । रामः कृतान्तवदनमन्वशात् सीतां संमेतयात्राव्याजेन वने नयेति, तस्याः खल्वेष दोहदोऽस्ति । सेनानीरपि रामशासनमाख्याय स्यन्दने सीतामारोप्य संमेतयात्रायै द्रुतं प्राचलत् । दुर्निमित्तेष्वपशकुनेष्वपि रथस्थिता सीता, आर्जवादविशंकिता सती दूरमध्वानं जगाम । गंगासागरमुत्तीर्य सिंहनिनादकेऽरण्ये गत्वा कृतान्तवदनः किञ्चिद्विचिन्तयन् तस्थौ । तं साश्रुं म्लानमुखं प्रेक्ष्य त्वं कथमित्थं दुर्मनाः सशोक इव स्थितोऽसीति सीताब्रवीत् । कृतान्तः कथमप्यूचे अहं दुर्वचं कथं वच्मीति प्रेष्यभावेन दूषितोऽहं दुष्करं कृतवानस्मि । हे अनघे देवि ! लोकजन्मनो राक्षसावास संवासापवादाद् भीतेन रामेण वने त्याजिताऽसि । अपवादे चराख्याते सति लोकं प्रति क्रोधारुणेक्षणो लक्ष्मणस्त्वत्त्यजनोद्यतं रामं न्यषेधीत् । रामेण सिद्धाज्ञया निषिद्धः सः रुदन् ययौ, अहं चामुष्मिन्कार्ये प्रेषितस्तेन हा, देवि ! अहं पापोऽस्मि । श्वापदाकीर्णे मृत्योरेकनिकेतनेऽमुष्मिन्नरण्ये मया त्यक्ता केवलं स्वप्रभावेण जीविष्यसि । तच्छ्रुत्वा सीता मूर्छिता सती स्यन्दनाद्भुविन्यपतत् सः सेनानीरपि मृतेतिबुध्या पापंमन्यो रुरोद । सीताऽपि वनवातेन कथंचिच्चेतनां प्राप भूयो भूयोऽप्यमूर्च्छच्च चेतनामाससाद च । अथ महत्यां वेलायां सा सुस्थीभूयेत्युवाच, अयोध्येतः कियद्दूरेऽस्ति रामो वा कुत्र तिष्ठति । सेनानीरभ्यधादयोध्या दूरेऽस्ति किमनया पृच्छया हे देवि ! उग्राज्ञस्य रामस्य वार्तया पर्याप्तम् । इति श्रुत्वाऽपि रामभक्ता सा भूयोऽप्यभाषत, हे भद्र ! रामस्येदं

स्त्रीमात्रकृते जात्वयशो न सहिष्ये पद्म इति प्रतिज्ञाय महत्तरान्विससर्ज । अथ काकुत्स्थः प्रच्छन्नो निशायां सदनाद्बहि निरगादिति च पदे पदे जनवादमश्रौषीत् । इयं सीता रावणेनापनीता तद्गृहे च चिरं स्थिता रामेण चानीता स च सतीतिमन्यते । सीतारक्तेन तेनेयमुपभुक्ता कथं न भवेद्रामोऽप्यदो न व्यमृशद्रक्तो दोपं नेक्षते । राम इत्यादि सीतानिर्वादं शृण्वन् गृहे ययौ भूयोऽपि तच्छ्रवणार्थं वरान् चरानादिदेश । काकुत्स्थ एवञ्च दध्यौ मया यस्याः कृते रौद्रो रक्षःकुलक्षयः कृतस्तस्याः किमिदमागतम् । सीता महासतीति जाने स च रावणः स्त्रीलोलो मे कुलञ्च निष्कलंकं हा असौ रामः किं करोतु । ते चरा द्राग् बहिः सीतानिर्वादं श्रुत्वा सानुज-कपिरक्षोराजस्य रामस्य सुस्फुटमब्रुवन् । अथ क्रुद्धो लक्ष्मणोऽवोचत् यत् ये हेतुभिर्दोपान् संकल्प्य सतीं सीतां निंदन्ति तेषामेपोऽहमंतकोऽस्मीति । रामोऽप्यूचे मम पुरा महत्तरैरिदं व्यज्ञपि चरैः कृतोऽयं तस्य संवादः स्वयञ्च शुश्रुवे । अमी च श्रुत्वा समायाताः प्रत्यक्षमपि भापिता स्ततो जनः सीता स्त्रीकारवत् सीतात्यागेऽपि [1]मापवादीत् । लक्ष्मण ऊचे लोकगिरा सीतां मास्म त्यज, यथा तथापवदिता जनो यद्वद्धमुखो भवति । सौराज्यसुस्थोऽपि लोको राज्यदोपपरो भवेत् स च भूभुजां यदि शिक्षणीयो न चेत् तथाप्युपेक्षणीय एव । रामोऽप्यूचे एतत्सत्यम् लोकः सदापीदृगेव, तथापि सर्वलोकविरुद्धं यशःस्विनस्त्याज्यमेव । इत्युक्त्वा बलः कृतान्तवदन सेनान्यमुवाचेयं सीता गर्भवत्यपि काप्यरण्ये त्यज्यताम् । तदा रुदन् लक्ष्मणो रामपादेपु

१ यथा सीतास्वीकारे जनोऽपवदति तथा सीतात्यागे मापवदत्वत सीतात्याग कर्तव्य एव ।

सान्मेऽद्यापि विधिः संतुष्टो नास्ति। असौ विधिरद्यापि त्वद्वियोगभवादुःखादप्यधिकं किं दुःखं दास्यति ह्येतन्निमित्तमन्यथा नास्ति। रामोऽपि तामेवमुवाच हे देवि! खेदं मा उद्वह हि कर्माधीने सुखासुखे अवश्यमेव भोक्तव्ये स्तः। तत्स्वस्मिन्मंदिरे गच्छ, देवानामर्चनं कुरु पात्रेभ्यो दानं प्रयच्छ यत आपदि धर्मएव शरणम्। सीताऽपि सदनं गत्वा महीयसा संयमेनार्हतोऽपूजयदवदानवद्दानञ्च प्रददे। अथ यथाभूतपुरीवृत्तकीर्तनोकाधिकारिणो राजधानीमहत्तरा रघुनाथमाजग्मुः। ते च यथा विजयः, सूरदेवः, मधुमान्, पिंगलः, शूलधरः, काश्यपः, कालः, क्षेमश्चेति। तेच द्रु पत्रवत्कंपमाना रामाग्रतस्तस्थु नंतु विज्ञापयामासुर्हि राजतेजः सुदुःसहमस्ति। तेष्वाद्यः सर्वसंवित्या महत्तरो विजयाख्यः सावष्टंभः सन्निति गिरा प्रभो विज्ञपयामास। हिस्वामिन्नवश्यविज्ञप्यं यदि नहि विज्ञप्यते तदा स्वामी वंचितः स्याद्विज्ञप्यञ्चातिदुःश्रवमस्ति। हे देव! देव्यां प्रवादोऽस्ति सच दुर्घटोऽपि हि घटते, युक्त्याहि तद्धटामेति तन्मनीषिणा श्रद्धेयम्। तथाहि हे प्रभो? रिरंसुना रावणेन हृता जानकी तद्वेश्मनि निन्ये चिरमेकैवावात्सीच्च। सीता रक्ता स्याद्वा विरक्ता स्यात् परं स्त्रीलोलेन दशास्येन नूनं भोगदूषिता स्यादेव। लोकोऽप्येवं प्रवदति वयमपि तथैव प्रवदामो हे रघूद्वह! तद् युक्तियुक्तं प्रवादं मा सहस्व। हे देव! निजंकुलमिवाजन्मोपार्जीताममलां कीर्तिं प्रवादसहनेन त्वं मा मलिनी कृथाः। राघवः सीतां कलंकस्यातिथीभूतां निश्चित्य सद्यो दुःखतूष्णीकोऽभूत् प्रेम हि प्रायो दुस्त्यजमस्ति। काकुत्स्थो धैर्यमालम्ब्य तान्महत्तरानुवाच युष्माभिः साधु व्यज्ञपि भक्ताः क्वाप्युपेक्षका न भवन्ति। अहमिह

च्च्युतौ शरभौ निजानने प्रविशन्ताविति । तयाख्याते सति रामो व्याख्यात्ते सुतौ भाविनाविति, यत्तुशरभौ विमानाच्च्युतौ तन्मम मुदे न । हे प्रभो ! ते धर्मस्य माहात्म्यात्सर्वंशुभं भावीति तदा जानकी देव्यूचे, गर्भंच दधार । सीता रामचन्द्रस्याग्रेऽपि प्राणप्रिया बभूव प्राप्तगर्भाच विशेषतो लोचनानंदचन्द्रिका बभूव। मायाविन्य ईर्ष्यालवः सपत्न्यस्तामदोऽब्रुवन् रावणः कीदृग्रूपोऽभूत्तं लिखित्वा प्रदर्शय । सीताऽप्यूचे मया रावणः सर्वाङ्ग नहि दृष्टस्तच्चरणावेव दृष्टौ तं कथं नाम लिखामि । त्वं तत्पादावप्यालिख नस्तदीक्षणे कौतुकमस्तीत्युक्ता प्रकृतिऋज्वी सा दशास्यांघ्री लिलेख । तत्र स्थाने राम आगमत्ताभिरप्यदो बभाषे, असौ तवप्रियासीताऽद्यापि रावणस्य स्मरति । हेनाथ ! सीतास्वहस्तलिखितमेतद्रावणस्यक्रमद्वयं पश्य, जानीहि सीता तस्यैव नाथते । महामना रामस्तत्तथा दृष्ट्वापि गंभीरत्वात् सीतादेव्यामनुपलक्षितस्तथैव वर्त्तते । देव्यस्तत्सीतादोपपदं निजैर्दासीजनैर्जने प्राकाशयन् हि प्रायः प्रवादाः लोकनिर्मिताः सन्ति । अथ वसन्ते रामोऽब्रवीद्धे सीते गर्भखेदितां त्वां विनोदयितुकामेव मधुलक्ष्मीरिहाययौ । वकुलप्राया वृक्षाः स्त्रीदत्तदोहदैः पुष्पन्ति ततोऽधुना महेन्द्रोदयोद्यानं रन्तुं व्रजामः। सीताऽप्यूचे मे देवतार्चनलक्षणो दोहदोऽस्ति तं सुगंधिभिरुद्यानभवै र्नानापुष्पैः पुरय । रामः सद्योऽपि देवानां पूजाचर्यामकारयत् ससीतः सपरिच्छदश्च महेन्द्रोदये ययौ । तत्र सुखासीनो रघूद्वहो विचित्रनगरक्रीडमर्हत्पूजोत्सवमयं मधूत्सवमपश्यत् । अत्रान्तरे च सीताया दक्षिणं चक्षुरस्फुरत् सद्योऽपि साशंका सा राघवायाचचक्षे । इदं साधु नेति रामेणाख्याते सति सीतेत्यब्रवीत् किं ? रक्षोद्वीपवा-

गृहे गृहे आर्हतं बिंबं कारयेस्ततोऽस्यां पुर्यां जातु कस्यचिद्व्याधिर्न भावी । इत्युक्त्वा ते सप्तर्षयोऽन्यतो ययुः शत्रुघ्नस्तेषां सप्तर्षीणां रत्ननिर्मिताः प्रतिमा मथुरापुर्यां चतसृष्वपि ककुप्सु चक्रे । इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणे रत्नपुरे पुरे तदा रत्नरथो नाम राजाऽभवत् । तस्य चन्द्रमुखीकुक्षिजन्मा उद्यौवना नाम्ना मनोरमा कन्यकाऽभूत् । इयं कन्या कस्य दीयत इति नृपे मंत्रपरे सति नारद उपेत्येयं लक्ष्मणस्यार्हतीत्यवोचत् । अथ रत्नरथस्य पुत्री गोत्रवैरतः क्रुपिता सती विटोऽयंकुट्यतामिति भृत्यान्भ्रूसंज्ञयाऽऽदिक्षत् । धीमान् नारद उत्तिष्ठतस्तान् जिघांसून्विज्ञाय पतत्रीव समुत्पत्योपलक्ष्मणं प्रययौ । नारदस्तांकन्यां पटे लिखित्वा लक्ष्मणाय दर्शयामास स्ववृत्तान्तश्चाशेपत आचख्यौ । तद्रूपदर्शनाज्जातानुरागो लक्ष्मणः क्षणात् रामेण समं रक्षोविद्याधरैर्वृतोऽगात् । तत्र सौमित्रिणाऽशु जितो रत्नरथो रामाय श्रीदामां लक्ष्मणायच मनोरमां कन्यां ददौ । राघवौ सर्वां वैताढ्यदक्षिणश्रेणिं जित्वा भूयोऽयोध्यामीयतुः क्ष्मांच पालयन्तौ तस्थतुः । लक्ष्मणस्य तु षोडशान्तःपुरवधूसहस्रं, तत्र याअष्टौ महिष्योऽभवन् ताश्च विशल्या, रूपवती, वनमाला, कल्याणमालिका, रत्नमालिका, जितपद्मा भयवती मनोरमाच । सार्धे द्वेशतेसूनवोऽभूवन् तेष्वष्टमहिषीभवा यथा विशल्याभूः श्रीधरः पुना रूपवत्यंगजः पृथिवीतिलकः, वनमालाजोऽर्जुनसंज्ञकः, जितपद्मायाः श्रीकेशी, कल्याणाया मंगलो, मनोरमायाः सुपार्श्वकीर्तिः पुना रतिमालाभू र्विमलो,ऽभयवतीभूः सत्यकीर्तिकश्चेति। रामस्य चतस्रो महादेव्य आसन् तत्र मैथिली, प्रभावती, रतिनिभा, चतुर्थिका तु श्रीदामा चेति । एकदा ऋतुस्नाता सीता निशान्ते स्वप्नमैक्षत यथा विमाना-

जंघाचारणलब्धय आसन् । महर्षयो विहरन्तो मथुरां पुरीं जग्मुस्तदा च प्रावृडभूत्, अधिशैलगुहागृहंतस्थुः। ते हि सदापि षष्ठाष्टमादीनि तपांसि चक्रुः उत्पत्य पुनर्दूरदेशेषु पारणं चक्रिरे। भूयोऽपि मथुराशैलगुहायामेत्य तस्थुः, तत्प्रभावाच्चमरभूर्व्याधिः क्षयंययौ। अन्यदा ते पारणायोपेत्यायोध्यायां पुरि ययुर्भिक्षार्थंश्चार्हदत्तश्रेष्ठिनो गृहे प्राविशन् । सः श्रेष्ठी सावज्ञं तान् वंदित्वा केऽमीति दध्यौ वर्षास्वपि विहारिणोऽमी इहत्यास्तु न। अमून् पृच्छामि किम् ? यद्वा पाखंडै र्भाषितैरलम्, तस्यैवं ध्यायतः सतः ते तु तद्वध्वा प्रतिलाभिताः। ते महर्षयो द्युते राचार्यस्य वसतौ जग्मुर्द्युतिनाऽप्यभ्युत्थाय सगौरवं ते वंदिताः। अकालचारिण इति तत्साधुभि रवन्दिता द्युतिना दत्तासनास्ते तत्र पारणकं व्यधुः। मथुरापुर्या आयाताः संप्रति तत्रैव यास्याम इत्याख्याय ते समुत्पत्य पुनः स्वं स्थानं ययुः। द्युतिस्तेषां जंघाचारणानां गुणस्तोत्रंव्यधात् कृतावज्ञास्तत्साधवस्तु पश्चात्तापं प्रचक्रिरे। तच्छ्रुत्वासोऽर्हदत्तः श्रावकोऽप्यनुशयं व्यधात् कार्तिकश्वेतसप्तम्यां मथुरां पुरींच ययौ। तत्र चैत्यान्यर्चित्वा तान्सप्तर्षीनवंदत स्वयं कृतमवज्ञादोषं च शंसन् क्षमयामास। शत्रुघ्नोऽपि स्वमंडलं सप्तर्षीणां प्रभावेण शान्तरोगं विज्ञाय कार्तिक्यां हि तां पुरी मियाय। शत्रुघ्नस्तान्नत्वोवाच मे गृहे भीक्षा गृह्यतामिति तेऽपि प्रत्यूचुः साधूनां राजपिंडो न कल्पते। शत्रुघ्नो भूयोऽप्युवाच यूयं मय्युपकारिणः स्थ। युष्मत्प्रभावतो मद्देशे दैविको रोगः शान्तोऽस्ति। तल्लोकानुग्रहायेहाद्यापि किञ्चित्तिष्ठत, भवतां सर्वा प्रवृत्ति र्ह्यन्योपकृतिहेतवेऽस्ति। तेऽप्यूचिरेऽयं प्रावृट्कालस्तु गतोऽधुना तीर्थयात्रया विहरिष्यामो हि मुनय एकत्रस्थिरा न भवन्ति। त्व गृहिणां

मपन्येनिन्ये कंटकं दत्वा हृष्टः सोंऽकमुवाच भोः साधु कृतम्। यदा मथुरापुर्यामचलं नृपं त्वं श्टणोषि तदा तत्र समागच्छे हिं परमोपकार्यसि। अथाचलः कौशाम्ब्या मगात् तत्र सिंहगुरोः पुरो धन्वाभ्यस्यं तमिन्द्रदत्तनृपं समुदैक्षत। सोऽपि सिंहेन्द्रदत्तयो र्धानुष्कत्वमदर्शयत् तस्मै चेन्द्रदत्तो भुवा सह दत्तां नाम्नीं पुत्रीमदत्त। ततः सो जातबलेंगादिकान्देशानसाधयदन्यदा मथुरां चागच्छदग्रजैः सह युयुधे च। सः भानुमभादीनष्टावपि-भ्रातृन् बद्धवा चाग्रहीत्, तन्मुक्त्यै चन्द्रभद्रो मंत्रिणामचलान्तिके मैपीत्। अचलस्तेषां स्ववृत्तान्तमारव्यत् ते मंत्रिणोऽपि विज्ञाय सत्वरं गत्वा चन्द्रभद्राय चाचरव्युः। हृष्टश्चन्द्रभद्रोऽप्यचलं पुर्यामवीविशत् क्रमेण लघीयांसमपि तं निजराज्ये न्यधात्। पित्रा निर्वास्यमानान् भानुमभादिकान् भ्रातृन् कथंचिदचलोऽरक्षदद्दष्टसेवकांश्च चक्रे। अन्यदा नटरंगस्थेनाचलेन सोंऽको दृष्टः मतीहारै र्हन्यमानो निजान्तिके चानायि! अचलस्तस्मै तज्जन्मभूमिं तां श्रावस्तिं ददौ, अद्वैतसौहृदौ तौ द्वौ संभूय राज्यं चक्राते। अन्यदा तौ समुद्राचार्यसंनिधौ माव्रजतां कालेन मृत्वा च ब्रह्मलोके सुरोत्तमौ चाभूताम्। अचलजीवस्ततश्च्युत्वा तवानुजः शत्रुघ्नोऽभूत् माग्जन्ममोहनीयेन, ततोऽसौ मथुराग्रही जातः अंकजीवोऽपि ततश्च्युत्वा हेराघव! कृतान्तवदनो नाम तव सेनापतिः समजायत। इतश्च प्रभापुरपुरेशितुः श्रीनंदनस्य धरणीनाम्न्यां भार्यायां क्रमात् सप्त सुता अभूवन्। सुरनंदः, श्रीनंदः, श्रीतिलकः, सर्वसुंदर, जयन्तः, अमरः, नयमित्रश्च अन्यदा श्रीनंदनो मासजातं सुत राज्ये न्यस्य प्रीतिकरस्य गुरोरन्ते तैः सुतैः सह माव्राजीत्। श्रीनंदनो मोक्षं ययौ ते सप्त सुरनन्दादयस्तु तपः शक्त्या

यच्छक्ति र्जिता सातु तदा विशल्यायाः कन्यकायाः प्रभावेण खलु । अधुनाऽब्रह्मचारिण्यास्तस्याः सः प्रभा-वो गतः किंवा तेन, हे इन[1] ! तं मित्रघातकं हन्तुं यास्यामि । इत्युक्त्वा चमरो रोषाच्छत्रुघ्नविषयं ययौ तत्र सर्वं लोकं सौराज्यसुस्थितं ददर्श च । प्राक् प्रजोपद्रवेणैतं मधुद्विषमुपद्रवामीति बुद्धया सः तत्प्रजासु विविधोन्व्या-धीन्व्यधात् । कुलदेवतया तच्च व्याधिकारणं ज्ञापितः शत्रुघ्नोऽयोध्यायां रामलक्ष्मणसंनिधावगात् । तदा तौ देशभूषणकुलभूषणावागतौ रामलक्ष्मणशत्रुघ्नाश्चोपेत्य ववंदिरे । शत्रुघ्नः केन हेतुना मथुरां प्रत्याग्रहीति रामेण पृष्टः सन् देशभूषणो बभाषे । अनेकशः शत्रुघ्नजीवो मथुरायामुत्पद्य साधुसेवको रूपवान् श्रीधरो नाम विप्रोऽभूत् । अन्यदाऽध्वनि यन् सः ललिताख्यया राजमहिष्या दृष्टोऽथ रन्तुकाम्यया तया स्वान्तिक आनायि अतर्कितो राजाऽऽगाल्ललितापि च क्षुभिता सती चौरोऽयमिति पूच्चक्रे सोद्विजस्तु राज्ञाऽधारि । राजादेशा-द्वधार्थं सो वधस्थानमनीयत, ततः कल्याणमुनिना प्रतिज्ञातव्रतोऽमोचि । विमुक्तः सोऽपि प्राव्रजत् तपस्तप्त्वा दिवं ययौ च्युत्वा मथुरापुर्यां चन्द्रप्रभनृपात्मजोऽभूत् । सच चन्द्रप्रभस्य भूपतेः कांचनप्रभाराज्ञीकुक्षिभूरचलाभि-धोऽत्यन्तवल्लभ आसीत् । सोऽचलोऽयं राजा मास्मभूदिति सापत्नैर्भानुप्रभाद्यैरष्टभिरग्रजै र्व्यापादयितुमारेभे । तन्मंत्रे मंत्रिणाऽऽख्याते सत्यचक्षो नंष्ट्वाऽन्यतोऽगात् भ्रमंश्च वने गरीयसा कंटकेनाविध्यत । पथि क्रन्दन्सः श्रावस्तिवासिना पितृनिर्वासितेनैधोभारधारिणांकनाम्ना पुंसा दृष्टश्च । अंकः काष्ठभारं विमुच्य तस्यकंटक-

[1] स्वामिन्

राएत्याख्यन् यन्मधुर्मथुरापूर्वदिग्स्थिते कुबेरोद्याने गतोऽस्ति । सोऽधुना तत्र जयंत्या पत्न्यासार्धं क्रीडापरोऽस्ति तच्छुलश्चास्त्रागारे वर्तते तस्मात्तस्य योधनेऽयमेव कालोऽस्ति । ततश्छलज्ञः शत्रुघ्नो निशि मथुरां प्राविशत् प्रविशन्तं मधुं तत्र स्वयमेव बलै रुरोध । आदौ समरे मधुनंदनं लवणं जघान यथा रामायणरणारंभे नारायणः खरम् । सुतवधक्रुद्धो रथिनांवरो मधु र्धावित्वा धनुः स्फालयन्रथिना दाशरथिना सह युयुधे । तावुभावप्यन्योऽन्य मस्त्रैरस्त्राणि छिंदानौ देवासुराविव चिरं शस्त्राशस्त्रि युद्धं प्रचक्राते । तदा तुर्यो दशरथात्मजः समुद्रावर्तं धनुश्चाग्निमुखांश्च शिलीमुखान् सौमित्रिदत्तानस्मार्षीत् । धन्वा सः तत्स्मृतोपनतं धनुरधिज्यीकृत्य-तैरग्निपत्रिभि र्लुब्धकः शार्दूलमिव मधुं जघान । तद्बाणघातविधुरो मधुरेवमचिन्तयत् यन्मेपाणौशूलं नाभ्यागा-ल्लक्ष्मणानुजश्च न हतः । यन्मया जिनेंद्रोऽपि नार्चित श्चैत्यानि न कारितानि पात्रेषु च नो दत्तमेवं मम जन्म मुधा गतम् । इति ध्यायन्नात्तदीक्षो नमस्कारपरायणो मृत्वा सनत्कुमारे महर्द्धिको मधुर्देवोऽभूत् । मधुदेहस्योपरिष्टात्तद्विमानसुराः पुष्पवृष्टिं व्यधु र्मधुर्देवोजयत्विति जुघुषुश्च । तच्छूलं देवतारूपं भूत्वा चमरान्तिक उपेत्य शत्रुघ्नाच्छलोत्पन्नं मधुनिधनं शशंस च । ततो मित्रवधामर्षाच्चमरः स्वयंमाचलत् तदा वेणुदारिणा तार्क्ष्यस्वामिना क्व यासीति पृष्टश्च । स्वमित्रहन्तारं मथुरास्थितं शत्रुघ्नं हन्तु यास्यामीति तदाख्याते सति वेणुदारी पुनरवदत् । धरणेन्द्राद्रावणेन या शक्ति र्लब्धा सापि पुण्यप्रकृष्टेनार्धचक्रिणा सौमित्रिणा निर्जिता । रावणोऽपि तेनैव हत स्तत्पत्तिस्तुमधुः कियान्, शत्रुघ्नस्तु लक्ष्मणादेशात्प्रधने मधुमवधीत् । तदा चमरेन्द्र उवाच सौमित्रिणा

चिरं व्रतं पालयित्वा नानालब्धिजुषो भूत्वाऽनुरूपं पदमासदन् । सः कुंजरोऽपि वैराग्याद्विविधं तपो विधाय प्रपन्नानशनो भूत्वा ब्रह्मलोके सुरोऽभवत् । भरतमाता कैकेय्यपि व्रतं समुपाददे निष्कलंकं व्रतं पालयित्वाऽव्ययं पदं प्रपेदे । भरते प्रव्रजिते सति भूचरखेचरा भूपा अभिषेकाय भक्त्या राममर्थयांचक्रिरे । अयं लक्ष्मणो भवद्भिर्वासुदेवोऽभिषिच्यतामेवं रामस्तानादिशत्तेऽपि तथैवाशु चक्रिरे । रामभद्रस्य च बलदेवत्वाभिषेकं व्यधुस्तौ द्वावपि चाष्टमौ बलशार्ङ्गिणौ राज्यमपाताम् । पद्मो विभीषणाय क्रमागतं रक्षोद्वीपमदात् सुग्रीवाय कपिद्वीपं हनूमते च श्रीपुरमदात् । विराधाय तु पाताललंकां नीलाय पुन र्ऋक्षपुरं प्रतिसूर्याय पुनर्हनुपुरं पुरमदात् । रत्नजटिने पुनस्तदेवोपगीतनगरं भामंडलाय वैताढये रथनूपुरं नगरमदात् । अन्येभ्योऽप्येवं प्रदाय रामः शत्रुघ्नमभ्यधात् हे वत्स ! यत्तुभ्यं रोचते तं देशमुररीकुरु । मथुरां मे प्रयच्छेति शत्रुघ्नेनार्थितो रामः पुनर्जगाद हे वत्स ! सा मथुरापुरी दुःसाध्या वर्तते । तत्र मधो राज्ञः पुरा चमरेणार्पितं शूलं दूरात्सर्वं परबलं निहत्य तत्करेऽभ्येति । शत्रुघ्नोऽप्येवमवदत् हे देव ! रक्षः कुलान्तक ! नन्वहं तवभ्राताऽस्मि मद्युधि तस्य त्राता को नाम । मह्यं मथुरां प्रयच्छ, स्वयमेवाहं भिषग्वरो व्याधेरिव मधोः प्रतीकारं करिष्यामि । शत्रुघ्नमत्याग्रहिणं ज्ञात्वा राम इत्यन्वशात् , त्वयाऽपशूलः प्रमत्तश्च मधुर्योधनीयः । इत्यनुशिष्य रामोऽक्षय्यसायकौ तूणावदात् कृतान्तवदनं नाम सेनान्यं च सहादिशत् । परं विजयमाशंसन् लक्ष्मणोऽपि शिलीमुखानग्निमुखानर्णवावर्तधन्व च तस्मै ददौ । ततः शत्रुघ्नः प्रतस्थे निरंतरैः प्रयाणैश्चोपमधूपघ्नं ययौ नदीतटेऽवात्सीच्च । तत्रादौ प्रेपिताश्चा-

कितोऽसिमाकृष्य तं जघान । तदा विनोदोऽपि शाखया रमणच्छुर्या हतश्चिरं भवं भ्रान्त्वा धनाभिध इभ्यपुत्रोऽभूत् । रमणोऽपि भवं भ्रान्त्वा धनस्यैव लक्ष्मीकुक्षिसमुद्भूतो नामधेयतो भूषणो नाम सुतोऽभवत् । धनोक्तः सो द्वात्रिंशदिभ्यकन्याः परिणीतवान्, अन्यदा स्वगृहमूर्धनि निशि ताभिः क्रीडन्नस्थात् । तत्र निशस्तूर्ये यामे श्रीधरस्य महामुनेःकेवले उत्पन्ने सति देवैरारब्धमुत्सवमद्राक्षीत् । जातधर्मपरीणामः सः सद्यो वेश्मत उत्तीर्य तं वन्दितुमचालीन्मार्गेऽहिना दष्टश्च । शुभेन परिणामेन चिरं शुभगती भ्रान्त्वाऽत्र जंबुद्वीपे विदेहे पुरे रत्नपुरे पुरे सः अचलाख्यस्य चक्रिणो हरिणीनाम्न्यां महिष्यां धर्मतत्परः प्रियदर्शननामा सूनुरभूत् । प्रव्रजिषुः सः पित्रनुरोधात् त्रीणि कन्यासहस्राणि परिणीतवान् तथापि हि संविग्नोऽस्थात् । सो गृहवासेऽपि वर्षाणां चतुःषष्ठिसहस्राणि परंतपश्चरित्वा ब्रह्मलोके सुरोऽभवत् । सः धनोऽपि संसारं भ्रान्त्वा पोतनपुरे शकुनाग्निमुखब्रह्मपत्न्यां मृदुमतिः सुतोऽभवत् । सः दुर्विनीतत्वात् पित्रा गृहान्निर्वासितोऽभ्रमत्, धूर्तः सः सर्वकलाकल्पो भूत्वा भूयोऽपि गृहमगात् । सदा द्यूतेन दिदेव केनचिन्नाजीयत दिनेदिने देवकेभ्यो भूयिष्ठं धनमजयत् । सः वसन्तसेनया वेश्यया सार्धं भोगान् भुक्त्वाऽन्ते गृहीतश्रमण्यो ब्रह्मलोके सुरोऽभवत् । ततश्च्युत्वा पूर्वभवमायादोषाद्वैताढयपर्वतेऽयं भुवनालंकारो बभूव । प्रियदर्शनजीवोऽपि ब्रह्मलोकात्परिच्युतो, भवतोऽयं महाभुजो भ्राता बभूव । भरतालोकनाज्जातजातिस्मृतिरसौ गजः सद्यो गतमदो जज्ञे, हि विवेके रौद्रता नास्ति । इति पूर्वभवांश्छ्रुत्वा भरतोऽधिकं विरक्तः सन् राजसहस्रेण समं व्रतमग्रहीन्मोक्षमियाय च । ते सहस्रं राजानोऽपि

सूरोदयाख्यौ तापसौ चिरं भवं भ्रेमतुः। चन्द्रोदयो गजपुरे हरिमते राज्ञश्चन्द्रलेखायां भार्यायां नाम्ना कुलंकरः सूनुरभूत्। सूरोदयोऽपि तत्रैव विश्वभूते र्द्विजन्मनोऽग्निकुंडायां भार्यायां नाम्ना श्रुतिरतिः सुतोऽभूत्। सः कुलंकरो राजा तापसाश्रमं गच्छन्नवधिज्ञानिनाऽभिनंदनसाधुनेत्यूचे। तत्र पंचाग्नितपस्तप्यमानेन तपस्विना दग्धुमानीतकाष्ठस्य मध्ये पन्नगस्तिष्ठति सोऽहिः पुरा भवे क्षेमंकराख्यस्ते पितामहोऽभूत् तद्दारु दारयित्वा तं यत्नादाकृष्य भोः! रक्ष। तद्वचः श्रुत्वाऽऽकुलो राजा गत्वा तद्दावँदारयत् तदन्तःस्थितमहिं च ददर्श विस्मयते स्म च। यावत्कुलंकरो राजा प्रव्रज्या मादित्सते स्म, तावत्सोऽथ श्रुतिरतिद्विज एवमवोचत। अयं धर्मो वो नाम्नायिकस्तथापि ते निर्बन्धश्चेत् तर्ह्यन्तिमे वयसि दीक्षोपादेया संप्रति किं खिद्यते। राजापि तद्गिरा मनागपि भग्नदीक्षोत्साहो, मया किमत्र कर्तव्यमिति ध्यायन्नवास्थितः। अथ श्रीदामाख्या दुर्मतिस्तद्राज्ञी सदा पुरोधसासक्ता नूनं मामेषो ज्ञातवानित्याशंकत। एषो यावदावां न हन्ति तावद्धन्मीति पुरोधसानुमता सा विषं दत्वा कुलंकरममारयत्। क्रमात् सः श्रुतिरतिरपि मृतो भूयोऽप्युभावपि नानायोनिनिपातिनौ तौ चिरं भवं भ्रेमतुः। अन्यदा राजगृहे पुरे कपिलब्रह्मणः सावित्र्यां भार्यायां विनोदरमणाभिधौ सुतावभूताम्। ततो रमणो वेदमध्येतुं देशान्तरं ययौ कालेनाधीतवेदः स निशि राजगृहमगात्। असावकाल इति धिया तदा सो बहिरेवाऽस्थात् सर्वसाधारण एकस्मिन्यक्षमंदिरेऽस्वाप्सीत्। तत्र दत्तेन ब्रह्मणासमं कृतसंकेता शाखाख्या विनोदभार्याऽगात् तामनु विनोदोऽपि ह्यागात्। तदा सा रमणमुत्थाप्य दत्तबुध्याऽरमत, विनोदोऽप्यविशं-

आर्य ! त्वदाज्ञयेयत्कालं मया राज्यं धृतम् । हे प्रभो ! राज्यपालन आर्याज्ञाऽर्गलानाऽभविष्यच्चेत्तदैवाहं तात-पादैः सह प्राव्रजिष्यम् । व्रताय मामनुमन्यस्व स्वयं राज्यं प्रतीच्छ च त्वयि प्राप्ते सति भवोद्विग्नोऽहमतः परं स्थातुं नोत्सहे । उदश्रू रामोऽपि तमाह स्म, हे वत्स ! एवं किं भाषसे, त्वमेवेह राज्यं कुरु त्वय्युत्का वयमागताः स्मः । हे वत्स ! राज्येन सह न स्त्यजन् भूयो विरहव्यथां किं दत्से, तत्तिष्ठ, पूर्ववन्ममाज्ञां कुरु । स इत्याग्रहपरं रामं ज्ञात्वा नत्वा च यावदचलत् तावत् सौमित्रिणोत्थाय पाणिनाऽधारि । भरतं तथा यान्तं व्रताय कृतनिश्चयश्च ज्ञात्वा तत्र सीताविशल्याद्याः ससंभ्रमा आजग्मुः । भरतस्य व्रताग्रहं विस्मारितुकामास्ता जलक्रीडाविनोदार्थमर्थनां चक्रिरेतराम् । तासां चोपरोधेन सह सान्तःपुरोऽपि ययौ विरक्तोऽपि मुहूर्तकं क्रीडासरसि चिक्रीड । भरतो जलान्निर्गत्य राजहंसवत्तीरेऽस्थात् तदानीं स्तंभमुन्मुल्यभुवनालंकार स्तत्रचापयौ । मदान्धोऽपि सो भरतदर्शनात्सद्योऽप्यमदोऽभूत्, भरतोऽपितद्दर्शनेन परमां मुदमवाप । रामसौमित्री संभ्रमादु-पद्रवकारिण स्तस्य करिणो वंधनायाशु ससामंतावुपेयतुः । हस्तिपकै रामाज्ञया सो हस्ती स्तंभेऽनीयत देशभूषणः कुलभूषणश्च मुनी आगतौ । उद्याने समवसृतौ तौ महामुनी वंदितुं सपरिच्छदा पद्मसौमित्रिभरताः प्रययुः । तौ वन्दित्वा रामः पप्रच्छ, मम करी भुवनालंकारो भरतेक्षणादमदः कथमजनि । अथ देशभूषणः केवल्याख्यत्, पुरा नाभिसूनुना सह चत्वारः सहस्रा राजानः प्राव्रजन् । ते तु स्वामिन्यनाहारे कृतमौने विहारिणि सति निर्विण्णाः सन्तः सर्वे वनवासिनस्तापसा जज्ञिरे । तेषु प्रह्लादनसुप्रभराट्तनयौ चन्द्रोदय-

प्युत्थाप्य स्वांशुकेन परिमृज्य परिषस्वजे । ततो लक्ष्मणोऽपि हि ससंभ्रमः प्रसारितभुजो नमन्तौ भरत-शत्रुघ्नौ बाढमालिलिंग । अथ कृतत्वरो रामस्त्रिभिरनुजैः सार्धं पुष्पकमारोहदयोध्याप्रवेशाय च समादिदेश । अथ व्योम्नि भूमौ च तुर्येषु वाद्यमानेषु सत्सु उन्मुदौ रामसौमित्री निजामयोध्यां पुरीं प्राविशताम् । मयूरै र्वारिदाविवोन्मुखैः सोत्कंठै र्निर्निमेषैः पौरैः प्रेक्ष्यमाणौ निर्भरं स्तूयमानौ च पुरीजनैः स्थानेस्थाने चार्कवद्दीयमानार्घौ प्रसन्नास्यौ रामलक्ष्मणौ स्वं प्रासादं जग्मतुः । तत्र सुहृद्धृदयनंदनो रामः सौमित्रिणा सह पुष्पकादुत्तीर्य मातृसदनं जगाम । ससौमित्री रामोऽपराजितां देवीमथापरं मातृवर्गं नमश्चक्रे ताभि श्चाशीर्भिरैध्यत । अथ सीता विशल्याद्या अपराजितां प्रणेमुस्तत्पादपद्मेषु निहितालकारन्याश्च श्वश्रूः प्रणेमुः । ताः श्वश्र्वोययम् स्मदाशिषाऽस्मद्वद्वीरप्रकांडप्रसविन्यो भूयास्तेत्युच्चकै राशासत । अथापराजिता देवी लक्ष्मणं भूयो भूयोऽपि पाणिना स्पृशन्ती मूर्ध्नि चुम्बन्ती चैवमब्रवीत् । हे वत्स ! दिष्ट्या दृष्टोऽसि विदेशगमनं कृत्वा विजयीह यदागमस्तेनाधुना पुनर्जातोऽसि असौ रामः सीता च तवैव परिचर्यया वनवासभवानि तानि कष्टानि चातिनिन्ये । लक्ष्मणोऽप्यवदत् तातेनेवार्येणातिलालित स्त्वयेव सीतादेव्या च लालितोऽहं वनेऽपि सुखमस्थाम् । आर्यस्य मे च स्वेच्छादुर्ललितै र्वैराणि जज्ञिरे यन्मूलः सीतापहारो जज्ञे हे देवि ! अन्यत् किं गद्यते । परन्तु युष्मदाशीभि र्वैरिसागरं लंघित्वा हे मातः ! सपरिवारोऽप्यार्यः क्षेमेण इहाययौ । अथ रामपादानां पुरतः पत्तिमात्रत्वमाचरन्भरतो मुदाऽयोध्यायामुत्सवमकारयत् । अन्यदा भरतो रामभद्रं तु प्रणम्याऽभ्ययात्, हे

वत्सो जीवति नवेति किंञ्चिदपि न विद्मः। इत्यभिधाय सुमित्रामपि निर्भरं रोदयन्ती सा हा वत्स! वत्सेति करुणस्वरं रुरोद। ततो नारदस्तेऽवोचत् युवां सुस्थिते भवतं, युष्मत्पुत्रावुपेष्यामि तथा ताविहानेष्यामि। तयो रेवं प्रतिश्रुत्य जनश्रुत्या ज्ञातवृत्तो नारदो गगनाध्वना लंकायां राममभ्यगात्। अथ रामेण सत्कृत्य किमत्रागा इति पृष्टो नारदः स्वयं तन्मातृदुःखवृत्तान्तमखिलमाचख्यौ। सद्यः [1]सरणरणकः पद्मो विभीषणमवादीत् यन्मातॄणां दुःखं विस्मृत्य त्वद्भक्त्येहाधिकमस्थाम्। अस्माद्दुःखान्नो मातरो यावन्न विपद्यन्ते हि तावद्धे महाशय! तत्राद्य यास्यामोऽनुमन्यस्व। विभीषणोऽपि नत्वोचे, अत्रषोडशाहानि तिष्ठ, यावदहं तामयोध्यां स्वैः शिल्पिभी रम्यां करोमि। एवमस्त्विति रामेणोक्तः सः षोडशभि र्दिनै र्विद्याधरशिल्पिभि रयोध्यां स्वर्गपुरीनिभां चक्रे। तदा च रामेण सत्कृत्य विसृष्टो नारदो ययौ राममातॄणां पुत्रागममहोत्सवमाख्यच्च। अथ षोडशेऽह्नि सान्तःपुरौ रघूद्वहौ पुष्पकमारुह्यैकस्थौ शक्रेशानाविव प्रतस्थाते। रावणानुजसुग्रीवभामंडल नृपादिभि रन्वीयमानौ क्षणादयोध्यां नगरी मीयतुः। पुष्पकारूढावायान्तौ तौ दूरादपि निरीक्ष्य सानुजोऽपि हि भरतः कुंजरारूढोऽभ्यगात्। भरत आयाति सति रामाज्ञया पुष्पकं, पाकशासनशासनात्पालकमिवोपक्षिति जगाम। भरत आदावपि भ्रातृसंयुत इभादुत्ततार, सोत्कंठौ रामलक्ष्मणौ च पुष्पकादुत्तेरतुः। रामः पादयोः पतितं साश्रुलोचनं भरतं मुहुर्मुहु मूर्ध्नि चुंबन्समुत्थाय परिरेभे। रघुपुंगवः पादान्ते लुठन्तं शत्रुघ्नम-

---

१ उद्वेगेन सहितः,

सीतासौमित्रिसंयुतः काकुत्स्थो विभीषणार्पितैः कुसुमाद्यैरुपस्कारैः शान्तिमानर्च । अथ ससीतासौमित्री रामः सुग्रीवादिसमन्वितो विभीषणाभ्यर्थितो विभीषणगृहं ययौ । तत्र सपरिवारोऽपि राघवो रावणानुजं मानयन् देवार्चनं स्नानभोजनादि च चक्रे । अथोभे वाससी परिधाय सिंहासनासीनं राममग्रासनासीनो विभीषणः कृतांजलि र्बभाषे । अयं रत्नस्वर्णादिकोश इदं हस्तिहयादि चायंराक्षसद्वीपश्च गृह्यतां ते पत्तिरस्मि । अधुना त्वदाज्ञया ते राज्याभिकं कुर्महे प्रसीद लंकां पुरीं पवित्रय, मामनुगृहाण च । रामोऽप्युवाच भोमहात्मन् ! पुरा मया ते लंकाराज्यं दत्तं तद्भक्तिमोहितस्त्वमिदानींकिं व्यस्मार्षीं एवं तं निषिध्य प्रीतः प्रतिज्ञातार्थपालकः पद्मः स्वयं हि तदैव लंकाराज्ये तमभ्यषिंचत् । तत्र विद्याधरोत्तमाः प्राक् प्रतिश्रुताः सिंहोदरादीनां कन्या रामाज्ञयो-द्वोढुमानैषुः। अथ खेचरीगीतमंगलौ राघवौ स्वस्वप्रतिपन्नास्ताः कुमारी र्यथा विध्युपयेमाते । तत्र निर्विघ्नं भोगान् भुंजानौ सुग्रीवाद्यैः सेव्यमानौ रामलक्ष्मणौ षडब्दीमतिनिन्यतुः । अत्रान्तरे विन्ध्यस्थल्यां ताविन्द्रजिन्मेघवाहनौ सिद्धिमीयतुस्तत्तीर्थश्च मेघरथं नाम जज्ञे । कुंभकर्णश्च नर्मदायां नद्यां सिद्धिमियाय, तत्तीर्थञ्चाभिधानतः पृष्ठरक्षितमित्यासीत् । इतश्च साकेतपुरे रामलक्ष्मणमातरौ तद्वार्त्तामप्यजानंत्यौ भृशदुःखिते तस्थतुः । तदा च धातकीखंडात्तत्रागतो नारदो भक्तिनम्रे ते पप्रच्छ, युवां विमनस्के कुत इति । अथापराजितोवाच मे पुत्रौ रामलक्ष्मणौ स्नुषया सीतया सह पित्राज्ञया वनं यातौ स्तः । तौ महाभुजौ सीतापहाराल्लंकायां जग्मतुस्तत्र रणे रावणेन शक्त्या लक्ष्मणस्ताडितः किल । तत्र च शक्तिशल्योद्धरणाय त्रिशल्याऽनायि ततस्तत्र किमभूत्

रतिवर्धनराजेनार्पितेपट्टेनिषद्य भ्रातृसौहृदात्तस्य स्वस्य च प्राग्भवं शशंस । रतिवर्धनः संजातजातिस्मरणाद्विरक्तः सन् प्राव्राजीदथ मृत्वा च ब्रह्मलोके सुरोऽभवत् । ततश्च्युत्वा विदेहेषु बुद्धिनगरे भ्रातरौ युवां भूपावभूतं प्रव्रज्य चाच्युतमीयथुः । अच्युताच्च्युत्वा संप्रति प्रतिविष्णो र्दशास्यस्य पुत्राविन्द्रजिन्मेघवाहनौ युवा प्रजायेथाम् । रतिवर्धनमाता इन्दुमुख्यपि भवं भ्रान्त्वा पुत्रयोरियं जननी मंदोदरी समभवत् । कुंभकर्णेन्द्रजिन्मेघवाहनाद्या मंदोदर्यादयश्चापि तन्निशम्य तदैव व्रतमाददिरे । ससौमित्रिकपीश्वरो रामस्तं मुनिं नत्वा वेत्रिणेवाग्रगामिना प्रह्वेण विभीषणेन दर्श्यमानपथो विद्याधरीभिः कृतमंगलश्च महत्या ऋद्ध्येन्द्रइव लंकायां पुरि प्राविशत् । तत्र पुष्पगिरे र्गिरेर्मूर्धन्युद्याने गत्वा काकुत्स्थो हनूमता यथाख्यातां मैथिलीं ददर्श । तदैव जीवितंमन्यो राघवस्तामुत्क्षिप्यद्वितीयंजीवितमिव निजोत्संगे धारयामास । तदानीं मरुत्पथे प्रमोदिनः सिद्धगन्धर्वाद्या इयं महासती सीता जयत्विति जुघुषुः । सुमित्रानंदनो मुदा निरंतरैरश्रुजलैः सीतादेव्याः पादौ प्रक्षालयन्निव नमश्चक्रे । मदाशिषा चिरंजीव चिरंनंद चिरं जयेति ब्रुवाणा वैदेही लक्ष्मणं शिरसि जघ्रौ। भामंडलः सीतां नमश्चक्रे सीताऽपि मुदा मुनिवाक्यसमानया आशिषा तं नंदयामास । कपिराजो विभीषणो हनुमानंगदोऽपि च स्वनामाख्यानपूर्वं जनकात्मजां प्रणेमुः । पार्वणेन शशांकेन चिरात्कुमुदिनीव चिराद्विकाशं समुपेयुषी सा सीता रामेण शुशुभे । सुग्रीवाद्यैः समावृतः ससीतो राघवो भुवनालंकारं गजमध्यास्य रावणावासं जगाम । तदन्तश्च विवंदिषुः सः मणिस्तंभसहस्रांकं जिनेशितुः श्रीशान्तिनाथस्य चैत्यं प्रविवेश । तत्र

स्नात्वा कोष्णैरश्रुजलैः समं दशमौलये जलांजलिं प्रददुः । सलक्ष्मणो रामः सुधारसं किरन्निवाभिरामया गिरा-कुंभकर्णप्रभृतीनित्यभाषत । अधुनाऽपि हि पूर्ववत् स्वस्वराज्यानि कुरुध्वम् नो युष्मल्लक्ष्म्या कृत्यं नास्ति हे वीरा ! वः क्षेममस्तु । पद्मनाभेनेत्युक्ता युगपच्छोकविस्मयौ बिभ्राणाः कुंभकर्णाद्या गद्गदाक्षरं जगदुः । हे महाभुज ! नः प्राज्येन राज्येनाऽपि कश्चिदर्थो नास्ति वयं तु मोक्षसाम्राज्यसाधनीं परिव्रज्यां ग्रहीष्यामः । अत्रान्तरे कुसुमायुधोद्याने चतुर्ज्ञानी अप्रमेयबलो नाम महामुनिः समाययौ । तत्रैव निशि तस्योज्वलं केवलज्ञानमभूत् दिवौकसः केवलज्ञानमहिमानं चक्रुश्च । प्रातश्च रामसौमित्री ते कुंभकर्णादयश्चोपेत्यतमवन्दन्त ततो धर्मञ्चशुश्रुवुः । देशनान्ते परं वैराग्यमापन्नौ शक्रजिन्मेघवाहनौ निजान्पुरातनभवान्पप्रच्छतुः । अथ सः मुनिरब्रवीदिहभारते कौशाम्ब्यां पुर्यां युवां निःस्वौ नाम्ना प्रथमपश्चिमौ बन्धू जातौ । अन्यदा तौ भवदत्तान्महामुनेर्धर्मंश्रुत्वा व्रतं जगृहतुः शान्तकपायौ च विजह्रतुः । अन्येद्युः कौशाम्ब्यां गतौ तौ मधूत्सवे इन्दुमुख्या पत्न्या क्रीडन्तं नदीघोषं नृपं ददृशतुः । तं दृष्ट्वा पश्चिमो निदानमकार्षीत् यदमुना तपसाऽहमनयो रीदृक्क्रीडापरः पुत्रो भूयासमिति । साधुभि वार्यमाणोऽपि निदानान्न न्यवर्तत, ततश्च पश्चिमो मृत्वा रतिवर्धनरतयोस्तुग्[1] जज्ञे । क्रमेणोद्यौवनः प्राप्तराज्यः सः रतिवर्धनो रमणीभिः समावृतः पितेव विविधं रेमे । प्रथमसाधुस्तु निर्निदानतपोवशान्मृत्वा पंचमे कल्पे परमर्धि कस्त्रिदशो बभूव । स चावधेस्तत्रोत्पन्नं महीपतिं भ्रातरं ज्ञात्वा मुनिरूपधरः सुरस्तं बोधयितुमभ्यागात् । स च

१ पुत्रः

इत्याचार्य श्रीहेमचन्द्र विरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि अन्वयात्मक गद्य-रचनायां रावणवधो नाम सप्तमः सर्गः समाप्तः ॥

## अथ अष्टमः सर्गः

अथ ज्ञातिस्नेहवशीकृतो विभीषणः कांदिशीकान्निशाचरानेवं विज्ञापयामास । यूयमविशंकिताः सन्त एतौ पद्मनारायणौ वलशार्ङ्गिणौ शरण्यौ स्त स्तस्मादाशु शरणाय श्रयध्वम् । ते सर्वे पद्मसौमित्री शिश्रियु स्तौच तेषां प्रसादं चक्रतु र्हि वीराः प्रजासु समदृष्टयो भवन्ति। अथ विभीषणो भ्रातरं हतं दृष्ट्वा शोकावेशान्मर्तुकामः स्वयमपि निजां छुरिकां चकर्ष। हाभ्रातर्भ्रातरित्युच्चैः करुणाक्षरं क्रन्दन्तं तया (छुरिकया) स्वकुक्षिमाघ्नातं विभीषणं रामो दध्रे । तदा सलक्ष्मणो रामो मंदोदर्यादिभिः सार्धमुपरावणं रूदन्तं तमिति वोधयामास । ईदृक्पराक्रमः सोऽयं दशाननो नहि शोच्यो यदमरा अपि यस्य समरेष्वाशशंकिरे । असावनया वीरवृत्या मृत्युंगतः कीर्तिभाजनमस्ति, तदस्योत्तरकार्याणि कुरुध्वं रुदितै रलम् । इत्युदित्वा महात्मा पद्मनाभः प्राप्तबंधनान् कुंभकर्णेन्द्रजिन्मेघवाहनादीनमोचयत् । विभीषणः कुंभकर्णः शक्रजिन्मेघवाहनो मंदोदर्यपरेऽपि संभूय पतदश्रवः ज्वालितानलैः कर्पूरागरुसंमिश्रै र्गोशीर्षचन्दनैः सद्यो दशग्रीवांगसंस्कारं विदधुः । पद्मः पद्मसरस्येत्य तेच

भवेत् । लंकेश इति निश्चित्य तां विभावरीमतीत्य दुर्मदोऽशकुनै वार्यमाणोऽपि युद्धे चचाल । भूयोऽपि रामरावणसैन्ययोरत्युद्भटभटभुजास्फोटत्रासितदिग्गजं युद्धं प्रवृत्ते महाबलो लक्ष्मणस्तूलानीवाशेषरक्षांसि विधूय विशिखैर्दशकंधरं ताडयामास । दशकंधरः सौमित्रेर्विक्रमं दृष्ट्वा साशंकः सन् विश्वभयंकरां तां बहुरूपां विद्यां सस्मार । रावणस्तत्र विद्यायां स्मृतिमात्रोपस्थितायां सत्यामाशुस्वान्यनेकशो भैरवाणि रूपाणि विचक्रे । तदा लक्ष्मणो भूमौ नभसि पृष्ठेऽग्रे पार्श्वयोरपि विविधायुधवर्षिणो रावणानेवापश्यत् एकोऽपि तावद्रूप इव तार्क्ष्यस्थो लक्ष्मणोऽपि चिन्तितोपनतैः शरै र्बाणैश्च तान्रावणान् जघान । दशकंधरो नारायणस्य तै र्बाणै र्विधुरः सन्नर्धचक्रित्वलांछनं जाज्वलच्चक्रं सस्मार । रोषारुणाक्षो रावणोऽन्त्यं तच्चक्रं नभस्तले भ्रमयित्वा रामानुजन्मने मुमोच । तच्चक्रंतूदयपर्वतमूर्धनि रविरिव प्रदक्षिणां कृत्वा सौमित्रे र्दक्षिणेकरेऽवतस्थे । विषण्णो रावणो दध्यौ मुनेर्वचः सत्यंजातं तेषां विभीषणादीनां निर्णयश्च सत्यश्चालोचे । एवं विषण्णं भ्रातरं प्रेक्ष्य विभीषणो भूयोऽप्यूचे हे भ्रातरद्यापि त्वं जिजीविषुश्चेत्तर्हि वैदेहीं मुंच । क्रुद्धो रावणस्तमवोचत् रे ! मेऽस्त्रं-चक्रमेव किं ? सचक्रमप्येनंद्विषं मुष्टिना द्राग्घनिष्यामि । तदा लक्ष्मण इति दर्पाद्विब्रुवतो रक्षोनाथस्य वक्ष स्तेनैव चक्रेण कुष्मांडवदपाटयत् । तदा च ज्येष्ठकृष्णैकादश्या मन्हश्च पश्चिमे यामे मृतो दशग्रीवश्चतुर्थं नरकं ययौ ।

सपदि जयजयेति व्याहरद्भि र्द्युसद्भि र्व्यरचि कुसुमवृष्टि र्लक्ष्मणस्योपरिष्टात् ।
समजनि च कपीनां तांडवं चंडहर्षोत्थित किल किल नादा पूर्णरोदोनिकुंजम् ॥ ३७७ ॥

ययुः । निरर्गलास्ते तत्र विविधानुपसर्गान्विदधुः, दशकंधरस्तु मनागपि ध्यानान्नाचालीत् । अथांगद एवं जगाद भो रावण ! अप्राप्तशरणेन रामाद्भीतेन त्वया किमिदं पाखंडमारब्धम् । त्वया मद्भर्तु र्महासती भार्या परोक्षे हृता ते पत्नीं मंदोदरीं तु पश्यतोऽप्यहं हरामि । इत्युदीर्यामंदरोषः सोऽगदः कुररीकरुणस्वरामनाथामिव रुदन्तीं मंदोदरीं कचैरकर्षत् । ध्यानसंलीनो रावणस्तु तां प्रेक्षांचक्रेऽपि न, तदा नभस्तलं द्योतयंती सा विद्या प्रादुरासीच्च । सा इत्यूचे भोः ! अहं सिद्धास्मि तव किं करवाणि ब्रूहि, विश्वमपि ते वशीकरोमि तौ राघवौ तु कियन्मात्रौ। रावण एवं प्रत्युवाच त्वया सर्वं निष्पद्यते स्मृता सती काले समापतेः संप्रति स्वस्थानं गच्छ । तद्विसृष्टा सा विद्या तिरोधत्त ते वानरा अपि पवमानवदुत्पत्य निजं स्कंधावारं जग्मुः । दशाननो मंदोदर्यंगदोदन्तं श्रुश्राव सद्योऽहंकारगर्भमुच्चैः हुंकारश्च चक्रे । लंकेशः स्नात्वा भुक्त्वा च देवरमणे वनेऽगात् सीतांचोचे सुचिरं मया तेऽनुनयः कृतः ! अधुना पुनर्नियमभंगभीरुत्वमुज्झित्वा त्वत्पतिदेवरौच हत्वा प्रसह्य त्वां रमयिष्ये । विपसध्रीच्या तद्वाचा मूर्छिता जनकात्मजा दशास्यस्य तस्यामाशेव तत्क्षणं निपपात । कथं चिल्लब्धसंज्ञा सा एवमभिग्रहं जगाह रामसौमित्र्यो र्मृत्युश्चेत्तदाममत्वनशनमस्तु । तच्छ्रुत्वा रावणो दध्यावस्या-रामे स्नेहो निसर्गजोऽस्ति तदस्यां मे रागः स्थले कमलरोपणमेव । यद्विभीषणोऽवज्ञातोऽमात्याश्च न मानिता एतत्स्वंकुलञ्च कलंकितं तत्सर्वं मया युक्तं न कृतम् । अद्यैतांमुंचामि चेत्तद्विवेकपदे न पतेत् रामाक्रान्तेनेयं मुक्तेति प्रत्युतायशः स्यात् । ततोऽहं रामसौमित्रीवद्ध्वेह समानेष्ये तयोश्चामूमर्पयिष्यामि तद्धि धर्म्यं यशस्यञ्च

भक्त्या विकसिताननो दशाननः स्वयमिन्द्र इव पयस्कुंभैः श्रीशान्तिनाथस्य स्नात्रमकार्षीत् । गोशीर्षचन्दनेनांगरागं दैवतैः पुष्पैश्चपूजां विधाय श्रीशान्तेरेवं विधां स्तुतिं विनिर्ममे । देवाधिदेवाय जगत्तायिने श्रीमते-षोडशायार्हते शान्तिनाथाय नमः । हे श्री शान्तिनाथ ! भवांभोनिधितारण ! भगवन् ! सर्वार्थसिद्धमंत्राय त्वन्नाम्नेऽपि नमोनमः । हे परमेश्वर ! ये तवाष्टविधां पूजां कुर्वन्ति तेषामणिमादयोऽष्टाऽपि सिद्धयः करस्था एव । यान्यक्षीणि प्रतिवासरं त्वां पश्यन्ति तानि धन्यानि तद्दृष्टो येन धार्यसे तद्हृदयं तु तेभ्योऽपि धन्यम् । हे देव त्वत्पादसंस्पर्शादपि जनो निर्मलःस्यात् स्पर्शवेधिरसादयोऽपि न हेमीभवति किम् ! । हे प्रभो ! नित्यं त्वत्पादाब्जप्रणामेन भूलुंठनैश्च मम भाले किणावलिः शृंगारतिलकीभूयात् । हे प्रभो ! तवोपहारीकृतैः पुष्पगंधाद्यैः पदार्थै र्मद्राज्यसंपद्वल्लेः सदाफलं भवतु । हे जगद्विभो ! भगवन् ! भूयोभूयस्त्वामिदमेवमार्थये यद्भवे भवे त्वयि भूयसी भक्ति र्भूयादिति । पुरो रत्नशिलास्थितो लंकेश इति शान्तिं स्तुत्वाऽक्षस्रजं दधत् तां विद्यां साधयितुमारेभे । अथ मंदोदरी द्वाःस्थं यमदंडमदोऽवदत्, यत्सर्वोऽपि पूर्जनोऽष्टाह्नानि जिनधर्मरतोऽस्तु । यस्त्वेवं न करिष्यति तस्य वधात्मको दंडो भविष्यतीति हतानकस्त्वं लंकायामाघोषय । सः द्वाःस्थस्तदादेशेन पुर्यां तथैवाघोषयत् तच्च चारनरैरेत्य सुग्रीवाय न्यवेद्यत । सुग्रीवोऽप्येवमब्रवीद्धे स्वामिन् ! दशाननो यावद्बहुरूपिणीं विद्यां न साधयति तावत्साध्यः । पद्मोऽपि स्मित्वैवमुवाच शान्तं ध्यानपरायणं दशास्यं कथं गृह्णामि स इवाऽहं छली नास्मि । इति रामवचः श्रुत्वांगदादयः शान्तिचैत्यस्थितं लंकेशं क्षुब्धं

नो चेत्ते सर्वं न हि भविष्यत्येतज्जीवितं च नहि भविष्यति। अथ पद्मनाभो वभाषे राज्यसंपदा मेऽर्थो नास्ति महताप्यन्यप्रमदावर्गभोगेनापि ह्यर्थो नास्ति। किन्तु यदि रावणो जानकीमर्चयित्वा प्रेषयिष्यति तदा तद्बन्धुतनयान्मोक्ष्याम्यन्यथा न हि मोक्ष्यामि। पुनरपि सामन्त ऊचे हे राम! यदस्यस्त्रीमात्रकस्य कृते स्वं प्राणसंशये क्षेप्तुमेतत्तवोचितं नास्ति। रावणाहतः सौमित्रिश्चैकवारंजीवितश्चेत् सोऽद्य कथं जीविष्यति त्वंचामी प्लवंगमाश्च कथं जीविष्यन्ति। रावण एकोऽपीदं विश्वं हन्तुमीश्वरोऽस्ति सर्वथातद्वचोमान्यमुदर्कश्च स्वयं विमृश। तद्गिराक्रुद्धो लक्ष्मणोऽभ्यधात् हे दूतपांसन! रावणोऽद्यापि स्वशक्तिं परशक्तिं वा न वेत्ति। हतवन्धुपरीवारो भार्याशेषीकृतोऽपि सन्नेषः पौरुषं नाटयति तस्यैषा का धृष्टताऽस्ति। शेषैकमूलमूशलच्छिन्नाशेषजटो यथातरुस्तथैव सोऽप्येकांगो रावणः कियत्स्थास्यति। तद्गच्छ तं दशकंधरं युद्धाय संवाह्य, तं व्यापादयितुं कृतान्तइव मे भुजः सज्जोऽस्ति। लक्ष्मणेनैवमाक्षिप्तो विभापितुमनास्तु सः वानरैरुत्थाय ग्रीवायां धृत्वा निरवासयत। स च गत्वा रावणाय सर्वं राघववाचिकमाख्यत् रावणोऽपि सचिवानूचे ब्रूत, संप्रति किं कार्यम्। मंत्रिणोऽप्येवमब्रुवन् हे प्रभो? इह सीतार्पणमेवोचितमस्ति व्यतिरेकफलं तु दृष्टमधुनान्वयफलं पश्य। हे दशानन! सर्वं कार्यमन्वयव्यतिरेकाभ्यां परीक्ष्यते व्यतिरेकेणैकेन किं स्थितोऽसि। अद्यापि ते वन्धवः सूनवश्च वहवोऽक्षताः सन्ति सीतार्पणाद्विमुक्तै स्तैः संपदा च सममेधस्व। तेषां सीतार्पणगिराऽधिकं मर्मणि हतइव दशमुखोऽन्तर्दूनश्चिरं स्वयमचिन्तयत्। हृदि वहुरूपाया विद्यायाः साधनं निर्णीय रावणः शान्तकषायीभूय शान्तिचैत्यं ययौ।

प्रज्ञप्तिभगिनी धरणेनास्मै प्रदत्तास्मि । विशल्याप्राग्भवतपस्तेजःसोढुमनीश्वरी एषा यास्यामि तत्प्रैष्यभावादनागसं मां मुंच । इत्युक्तो महाभुजो मारुतिस्तां शक्तिं मुक्तवान् मुक्तमात्रा च सा शक्ति र्लज्जितेव तिरोदधे । विशल्याऽपि हि भूयः सौमित्रिं पाणिना पस्पर्श शनैः शनै र्गोशीर्षचन्द्रनेन च विलिलेप। अथ रुढव्रणः सौमित्रि द्रीक् प्रसुप्त इवोत्थितोऽश्रुजलं वर्षता रामभद्रेण च मुदा सस्वजे । ततो रामस्तस्मै सर्वं विशल्यावृत्तान्तं शशंस तत्स्नानपयसा चाशु स्वान्परांश्चाभ्यषेचयत् । ततस्तदानीमेव रामशासनात्सौमित्रि र्यथाविधि कन्यासहस्रसहितां विशल्यामुपयेमे । विद्याधरनृपैः सौमित्रे र्जीवनोद्वाहोत्साहजन्मा महोत्सवो जगदाश्चर्यकारणं जज्ञे । तदा नक्तंचराधिपो रावणः सौमित्रिर्जीवित इति चरैर्विज्ञाय मंत्रिवरैःसममिति मंत्रयांचक्रे । ममाऽयं भावोऽभवत् यच्छक्तिताडितः सौमित्रिःप्रातर्मरिष्यति ततस्तत्स्नेहपीडितो रामोऽपि मरिष्यति । कपयश्च नंष्ट्वा यास्यन्ति तेच मद्बन्धुसूनवः कुंभकर्णेन्द्रजिन्मुख्याःस्वयमिह मामेष्यन्ति । अधुना दैववैगुण्यात्सोऽपि लक्ष्मणोजीवितस्ते-कुंभकर्णादयो मया कथं मोचयितव्याः । मंत्रिणोऽपि तमेवमूचु र्जानकीमोक्षणं विना कुंभकर्णादिवीराणां न मोक्षः प्रत्युताशिवं भविष्यति। स्वामिन् ! इयत्यपि गते निजं कुलं रक्ष रक्ष, अत्र रामानुनयनं विनाऽन्य उपायो नास्ति । रावणस्तानवज्ञाय सामन्तं नाम दूतं सामदानदंडपूर्वमनुशिष्योपराघवमादिशत् । सः गत्वा द्वाःस्थविज्ञप्तो धीरगीः सुग्रीवादिसमावृतं पद्मनाभं नमस्कृत्येति व्याजहार । दशास्यस्त्वामेवं वदति मे बन्धुवर्गं विमुंच जानकीमनुमन्यस्व मे राज्यार्धं च गृहाणेति । त्रीणि कन्यासहस्राणि तुभ्यं दास्यामि तेन च संतुष्य,

शरणो मुनिः पृष्टो विशल्यायाः प्राग्जन्मतपसः फलं वदति स्म । अस्याः स्नानांभसा नृणां व्रणसंरोहणं शल्यापहारो व्याधिसंक्षयश्च भावी भर्ता चास्या लक्ष्मणो भावी । तया मुनिगिरा सम्यग्ज्ञानादनुभवादपि विशल्यास्नानपयसः प्रभावो मया निश्चितः । द्रोणमेघ इत्युदित्वा ममाऽपि विशल्यास्नपनोदकमर्पयत्तेन ममभूमिरप्यरुगभवत् । मयाऽनेन तस्याः स्नानांभसा सिक्तस्त्वमप्यहो निःशक्तिशल्यः संरूढव्रणश्च क्षणादभूः । हे प्रभो ! भरतस्य ममाप्येवं प्रत्यय उत्पन्नः, तस्मादाप्रत्यूपात्तद्विशल्यास्नानवार्यानयत । तस्मात् त्वर्यतां त्वर्यतां प्रत्यूपे किं करिष्यथ हन्त शकटे पर्यस्ते सति गणाधिपः किं कुर्वीत । रघूद्वहो भामंडलं हनूमन्तमंगदश्च विशल्यास्नानवारिणे प्रतिभरतमादिशत् । ते च पवनरंहसा विमानेनायोध्यां प्रययुः प्रासादांके शयानं भरतं नृपं च ददृशुः । भरतस्य प्रबोधाय ते चाम्बरे गीतं चक्रुः राजकार्येऽपि राजानो ह्युपायत उत्थाप्यन्ते । भरतेनाऽपि विबुध्य दृष्टः पुरो नमन् पृष्टो भामंडलः कार्यमूचे, आप्तस्याप्ते प्ररोचना न स्यात् । तत्रेयुपा मयैतत्सेत्स्यस इति मत्वा भरतस्ततस्तद्विमानाधिरूढः कौतुकमंगलं पुरमगात् । अथ भरतेन द्रोणघनो विशल्यां याचितः सह स्त्रीसहस्रसहितां तामुद्वाह्यादत्त च । भामंडलोऽप्ययोध्यायां भरतं मुक्त्वोत्सुकः सपरीवारो विशल्यासंयुतश्च तत आययौ । ज्वलद्दीपविमानस्थः सूर्योदयभ्रमाद् भीतै र्निजैः क्षणं दृष्टः सः उपलक्ष्मणं विशल्यामधात् । तया च पाणिना स्पृष्टाल्लक्ष्मणात्तत्क्षणादपि यष्टिना महोरगीव सा महाशक्ति र्निर्जगाम । समुत्पतन्ती सा शक्ति र्हनूमता समुत्पत्य श्येनविहगेन वर्तिकेव प्रसभं जगृहे । देवतारूपा साप्यूचे मे कश्चनाऽपि दोषो नास्ति अहं

इतश्च पद्मसैन्ये प्राक्प्राकाररक्षसं भामंडलमुपेत्य कोऽपि विद्याधरोऽवदत् । ननु यदि त्वं तदाप्तोऽसि चेत्पद्म-
पादान् मे दर्शय लक्ष्मणजीवातुमलमाख्यास्यामि वो हितोऽस्मि । भामंडलेन पाणिना दोष्णि विधृत्य नीतः सः
पद्मस्य पादपद्मांते प्रणम्यैवं व्यजिज्ञपत् । संगीतपुरनाथस्य शशिमंडलभूपतेः सुप्रभाकुक्षिसंभवः प्रतिचन्द्रो
नामाहं तनयोऽस्मि । अन्येद्युरहं सकलत्रः क्रीडार्थमंबरे चलितो सहस्रविजयनाम्ना विद्याधरेण च दृष्टः ।
तेन च तदा मैथुनिकाद्वैराच्चिरमहं योधितश्चंडरवया शक्त्या चाहत्य भूतले च पातितः । साकेतपुर्यां माहेन्द्रो-
दयोद्याने भुवि लुठन्नतिकृपालुना त्वद्भ्रात्रा भरतेनाहं दृष्टश्च । तेन पृथिवीभूभुजा सद्यो गंधाम्बुभिःरहं
सिक्तो मत्तश्च परगृहाद् दस्युरिव शक्तिर्निरगात् । सद्योरूढप्रहारेण विस्मितचेतसा मया पृष्टस्तवानुजो गंधांबु-
माहात्म्यमित्यशंसत् । गजपुरात् विंध्यनामा सार्थवाह इहाभ्यागगत्, मार्गेचैकस्तन्महिषोऽतिभारत्रुटितोऽप-
तत् । पुरीजनस्तन्मूर्ध्नि पादं विन्यस्य संचचार तेन महतोपद्रवेण विपन्नः सोऽथ सैरिभोऽकामनिर्जरायोगाच्छ्वे-
तंकपुरेश्वरो नाम्ना वायुकुमारः सुरः पवनपुत्रकोऽभूत् । अवधिना च पूर्वं मृत्युं ज्ञात्वाऽथ प्रकुपितः सः अस्मिन्पुरे
जनपदे च नानाविधान्व्याधीन् व्यधात् । मन्महीवर्तिनोऽपि हि मन्मातुलस्य द्रोणमेघनरेन्द्रस्य देशे गृहे च
व्याधि र्नाभूत् । मयाऽव्याधिकारणं पृष्टो द्रोणघनोऽवदत् पुरा मे भार्या प्रियंकराऽतिव्याधिबाधिताऽभूत् ।
अथ गर्भे जाते सति तत्प्रभावात्साऽमुना व्याधिनाऽमुच्यत क्रमादभिधानतो विशल्यां नाम पुत्रीं सुषुवे । त्वद्देश
इव मद्देशेऽपि व्याध्युपद्रव उद्भूते सति विशल्यास्नानतोयेन सिक्तो लोको विरुगभवत् । अन्यदा मया सत्यभूत-

प्रतीच्यां नीलसमरशीलदुर्धरमन्मथाः, जयो विजयः संभवश्चावतस्थिरे। उदीच्यामंगदः कूर्मोऽगो महेन्द्रो विहंगमः सुषेणश्चन्द्ररश्मिश्चामी क्रमाद्द्वारेष्वस्थुः। दक्षिणस्यां भामंडलो विराधो गजो भुवनजिन्नलो मैन्दो विभीषणश्चामीक्रमादस्थुः। महाभुजाः सुग्रीवाद्याः काकुत्स्थौ मध्येकृत्वा उद्यता आत्मारामा इव प्रजागरपरास्तस्थुः। कश्चित् सीताया आचख्यो यल्लक्ष्मणः शक्त्या हतोऽस्ति रामभद्रोऽपि प्रातर्भ्रातृसौहृदाद्विपत्स्यते। जनकात्मजा वज्रनिर्घोषवद्घोरं तच्छ्रुत्वा पवनाहता लतेव मूर्छया पृथ्व्यां पपात। विद्याधरीभि रंभोभिः संसिक्ता लब्धचेतना जानकी उत्थाय करुणस्वरमेवं विललाप। हा वत्स! लक्ष्मण! अग्रजमेकाकिनं त्यक्त्वा कागाः, त्वां विनैषो मुहूर्तमपि स्थातुं न क्षमोऽस्ति। धिगहं मंदभाग्यास्मि, अधुना मम कृते देवतुल्ययोः स्वामिदेवरयो रीदृगागतम्। हे वसुंधरे! प्रसीद मत्प्रवेशाय द्विधा भव, वा हे हृदय! त्वं प्राणनिर्वाणहेतो र्द्विधा भव एवं करुणं रुदन्तीं सीतां कापि कृपावती विद्याधरी अवलोकिन्या विद्ययेत्यब्रवीत्। हे देवि! ते देवरः प्रभातेऽक्षतांगो भविष्यति रामभद्रेण च सममेत्य त्वामानंदयिष्यति। तदा काकुत्स्थगृहिणी तद्गिरा सूर्योदयं चिन्तयन्ती चक्रवाकीव जाग्रती सती स्वस्थावस्थाऽस्थात्। सौमित्रिरद्य मारित इति मत्वा रावणः क्षणं जहर्ष, भ्रातृपुत्रमित्रबंधश्च स्मृत्वा क्षणं रुरोद। हा वत्स कुंभकर्ण! त्वं ममैवापर आत्माऽसि, हे इन्द्रजिन्मेघवाहनौ युवां मे द्वितीयौ बाहू इव स्तः। हा मम रूपान्तरोपमा जंबुमाल्याद्या वत्साः! गजा इवाप्राप्तपूर्वं बंधं कथं प्राप्ताः स्थ। इत्थं स्वबन्धूनां नूतनं बंधादि स्मारं स्मारं दशग्रीवो भूयो भूयो मुमूर्छ च रुरोद च।

उपसौमित्रि निपद्य रुदन्नित्यगदत् । हे वत्स ! तव किं बाधते ब्रूहि तूष्णीं किं स्थितोऽसि संज्ञयाऽपि समाख्याहि आत्मनोऽग्रजं प्रीणय । एते सुग्रीवाद्यास्तवानुगास्त्वन्मुखमीक्षंते, हे प्रियदर्शन ! वाचा दृशा वा किन्नानुगृण्हासि । रावणो जीवन्रणादगादिति लज्जावशाध्रुवं न भाषसे तद्भाषस्व तवेप्सितं पूरयिष्ये । रे ! रे ! दुरात्मन्रावण ! तिष्ठ तिष्ठ क्व यास्यसि एषोऽहं न चिराय त्वां महापथे प्रस्थापयामि । इत्युक्त्वा धनुरास्फाल्य यावद्रघूद्वहोऽस्थात् तावद्विनयपूर्वकं कपीश्वरेणैवमूचे । हे स्वामिन् ! इयं निशाऽस्ति निशाचरश्चलंकामगमत् एषो नः स्वामी च शक्तिप्रहारविधुरो वर्तते । धैर्यमाधेहि दशाननं हतमेव जानीहि सौमित्रेः प्रतिजागरणोपायमेव चिन्तय । भूयो राम एवं जगाद भार्या हृताऽनुजश्च हतः, अयं रामस्त्वद्यापि तिष्ठति, शतधा न विदीर्यते । हे सखे ! सुग्रीव ! हनुमन् ! भामंडल ! नल ! अंगद ! सर्वेऽपि विद्याधराश्च ! सर्वेऽपि संप्रति स्वौकसि यात । हे सखे ! विभीषण ! यत्त्वं कृतार्थीतो नासि तत् सीतापहाराव् सौमित्रिवधादप्यधिकं शुचेऽभूत् । परं हे बंधो ? बन्धुरूपेण वैरिणं स्वबन्धुं प्रात निंजबान्धववर्त्मना नीयमानं पश्य । त्वां प्रातः कृतार्थीकृत्य लक्ष्मणमनुयास्यामि, हि लक्ष्मणं विना मे जीवितेन सीतया च किं स्यात् । अथ विभीषणो बभाषे हे प्रभो ! इदमधैर्यं किम्, अनया शक्त्या हतोऽपि पुमान् यामिनीं जीवति, तस्माद्धेप्रभो ! यावद्विभावरी न विभाति तावत्सर्वथा मंत्रतंत्रादिना घातप्रतीकाराय प्रयत्यताम् । राघवेणामित्युक्ते सुग्रीवाद्या राघवौ परितो विद्यया चतुर्द्वारान् सप्तवप्रान्व्यधुः । तत्र प्राच्यां द्वारेषु सुग्रीवः पावनंजयिः कुंदस्तारो दधिमुखो गवाक्षो गवयश्च क्रमादस्थुः ।

याद्वयां तां महाशक्तिं समुदधे सः ताम् धगद्धगिति ज्वलतीं तडत्तडिति नादिनीं संहाराद्भुतडिल्लेखामिव खेऽभ्र मयत् । दिवि सुरा अपसस्रुः सैन्यानि दृशममीलयन् सुस्थिता अपि केऽपि तां विलोक्य सुस्थितं नास्थुः । रामः सौमित्रि मित्यूचे हन्तास्माकमागन्तुरेषो विभीषणो हन्यते तदाश्रयघातिनो धिक् । इति रामवचः श्रुत्वा मित्रवत्सलः सौमित्रि र्दशकन्धरमाक्षिपन् विभीषणाग्रे गत्वाऽस्थात् । दशाननः पुरस्थं गरुडस्थं तं प्रेक्ष्योवाच तुभ्यं शक्ति र्नोत्क्षिप्ताऽस्ति, तस्मात्परमृत्युना मा मृथाः । यदि वा म्रियस्व यतस्त्वमेव मम मार्योऽसि । एषो वराको विभीषण स्त्वत्पदे ममाग्रेऽस्थात् । इत्युक्त्वा दशाननस्तां शक्तिं पतदुत्पाताशनिकल्पां रामानुजन्मने मुमोच । आपतन्तीं तां सौमित्रिः सुग्रीवो हनुमान्नलो भामंडलो विराधोऽन्येऽपि स्वैः स्वैरस्त्रैरताडयन् । व्याल द्विपोंऽकुशमिव सा तदस्त्रौघमवज्ञायाम्भोधावुर्वानल इव लक्ष्मणोरःस्थलेऽपतत् । तया भिन्नो लक्ष्मणो महीपृष्ठे निपपात तत्सैन्ये च विष्वग् महान् हा हा रव उत्पपात । अथ क्रुद्धोज्येष्ठकाकुत्स्थो रावणं जिघत्सु-रिव पंचाननरथस्थित आयोधयितु मारेभे । पंचाननरथः क्षणाद् द्विषं विरथं चकार दशाननोऽपि वेगेन रथान्तरमध्यारुरोह । जगदद्वैतपौरुषः काकुत्स्थ एवं रथान् पंचवारान् भंक्त्वा भंक्त्वा दशाननं विरथीचक्रे । दशास्यएवमचिन्तयदयं भ्रातृस्नेहात्स्वयमेव मरिष्यति तदधुनाऽमुना योधितेन मे किं प्रयोजनमस्ति । एवं विमृश्य दशग्रीवो द्रुतं लंकापुरीं ययौ रामशोकादातुर इव रविश्चास्तं जगाम। अथ रावणे भग्ने सति रामो निवृत्य लक्ष्मणमियाय तं च निपतितं दृष्ट्वा मूर्छितो भुवि पपात । सुग्रीवादिभिश्चन्दनवारिणाआसिक्तो रामो लब्धसंज्ञ

ततो योध्धुमुद्यतौ तौ भ्रातरौ चित्राण्यस्त्राणि कर्षन्तौ निरंतरं च वर्षन्तौ प्रवृत्ताते । अथेन्द्रजित् कुंभकर्णौ अपरेऽपि हि राक्षसा कृतान्तस्य किंकरा इव स्वामिभक्त्याऽभ्यधावन्त। रामः कुंभकर्णमरोत्सीत् रावणिं पुनर्लक्ष्मणोऽरोत्सीत् सिंहजघनं नीलो दुर्मर्षश्च घटोदरं स्वयंभू दुर्मतिं नलवीरः शंभुमंगदो मयं स्कन्दः पुनश्चन्द्रणखं चन्द्रोदरात्मजो विघ्नं भामंडलनृपः केतुं श्रीदत्तो जम्बुमालिनं पवनंजयनंदनः कुंभकर्णसुतं कुंभं किष्किन्धेशः सुमालाख्यं कुंदो धूम्रराक्षसं वालिसूश्चन्द्ररश्मिश्च भटं सारणराक्षसमेवमपरेऽपि कपयोऽन्योन्यं राक्षसानरोत्सुस्तैश्च सार्धमर्णवे नक्रा नक्रैरिवाऽयुध्यन्त । एवं भीषणेभ्योऽपि भीषणे युद्धे वर्तमाने सतीन्द्रजिद् क्रोद्धाल्लक्ष्मणाय तामसमस्त्रमसुचत् । शत्रुतापनः सौमित्रिस्तदस्त्रं तपनास्त्रेणाग्निना म[1]दनपिगवत्सद्योविद्रावयामास। सौमित्रिः क्रुधेन्द्रजिते नागपाशास्त्रं मुमोच तेनास्त्रेणांभसि तंतुना हस्तीव सः द्रागवध्यत । नागास्त्रेणाक्रम्यमाणसर्वाङ्गो दशास्यसुः सागराम्बरां दारयन्नशनिरिव निपपात। विराधो लक्ष्मणाज्ञया तं स्वरथांके चिक्षेप, निजे च शिविरे द्रुतं [2]कारापाल इवानैषीत् । लक्ष्मणाग्रजस्तु कुंभकर्णं नागपाशैरबध्नात् ततो रामाज्ञया भामंडलस्तं शिविरेऽनैषीत् । अन्येऽपि प्रतियोद्धारो रामस्य सैनकै र्वद्धाः, ते च मेघवाहनमुख्या निजे शिबिरे निन्यिरे । दशमुखस्ततु दृष्ट्वा क्रोधशोकसमाकुलो जयश्रियो मूलं शूलं विभीषणाय चिक्षेप । रामावरजः शितैः पत्रिभिस्तच्छूलं कदलीकांडलीलयान्तरालेपि कणशश्चकार । ततो विजयार्थी दशग्रीवो धरणेन्द्रप्रदत्ताममोघविज-

---

१ भाषाया "मीण" २ कारागृह रक्षकः

रक्षोऽनीकेषु विविशुः । तदा गरुत्मद्भि र्नागा इवाद्रिर्वाऽऽम्रघटा इव ते राक्षसा स्तैः कपीश्वरैराक्रान्ताः सन्तो विदुद्रुवुः । रक्षोभंगेन संक्रुद्धः स्वयं रावणो महारथप्रचारेण मेदिनीं दारयन्निव दधावे । दाववन्हेरिव तरस्विनस्तस्य प्रसरतः सतः मुहूर्तमपि कपिवीरेषु कश्चनाप्यग्रे नास्थात् । अथ तद्युद्धे चलितं रामं प्रश्रयान्निषिध्य विभीषणः क्षणादेत्य स्वयमेव दशकन्धरं रुरोध । रावणस्तमवदत् रे! विभीषण! कं श्रितोऽसि, येनमुखे कवलवत् क्रुद्धस्य ममाजौ क्षिप्तोऽसि । व्याधेन श्वानं किराविव रे! मयि त्वां प्रहिण्वता रामेण साधु मंत्रितम् ह्यात्मरक्षणश्चेदं साधु कृतम् । हे वत्स! अद्यापि त्वयि मम वात्सल्यमस्ति तद्गच्छ, ससैन्यावेतौ रामलक्ष्मणौ त्वद्य हनिष्यामि वध्यमानानाममीषां संख्यापूरणो मास्म भूः स्वस्थानमेव त्वमेहि अद्य ते पृष्ठे हस्तोऽयमस्ति । विभीषणोऽप्येवमुवाच स्वयमंतक इव रामस्त्वां प्रति क्रुद्धोऽचालीत् स च मया छलान्निषिद्धोऽस्ति । अहं तु त्वां बोधयितुकामो युद्धव्याजादिहागतोऽस्मि, मद्वचः कुरु सीताऽद्यापि मुच्यताम् । हे दशानन! हन्त, मृत्युभयात् राज्यलाभेन वाऽहं रामं न गतोऽस्मि किन्तु निर्वादभयाद् गतोऽस्मि सीतार्पणेन निर्वादं प्रणाशय, यथाह्यहं रघुपुंगवं विहाय त्वां श्रयामि । अथ क्रुद्धो रावणः प्रोचे, रे कातर, दुर्बुद्धे, विभीषण! किमद्यापि विभीषिकां प्रदर्शयसि । भ्रातृहत्याभयादेवमुक्तोऽसि नान्येन हेतुना मुक्तोऽसि, इत्युक्त्वा दशकंधरः कार्मुकमास्फालयामास । सः विभीषणोऽपि भ्रातृहत्याभयादेवैवमुक्तोऽस्यन्येन हेतुना नेत्युक्त्वा धनुरास्फालयामास।

---

१ रामाय,

मोचनीयः । हे स्वामिन् ! सुग्रीवभामंडलहनूमतो विना नः सैन्यमवीरमिवानुजानीहि, तद् यामि । एवं तत्र ब्रुवत्येव भटोंऽगदो वेगाद् गत्वा युद्धकोविद आक्षिप्य कुंभकर्णेन युयुधे । कुंभकर्णेन क्रोधान्ध्यात् प्रोत्क्षिप्तभुजपाशतो मारुतिरुत्पत्य पंजराद्विहंगइव ययौ । भामंडलकपीश्वरौ मोचयितुं विभीषणो रथस्थितो रावणिभ्यां समं योध्धुमधावत । इन्द्रजिन्मेघवाहनौ दध्यतुरेष नः पितु रनुजोऽस्माभिः सहाहवं कर्तुं स्वयमभ्येति । हा अद्यानेन तातकल्पेन सह कथं योद्धव्यं, किन्त्वितोऽपसरणं युक्तं हि पूज्याद् बिभ्यतां ह्री नास्ति । एवं विचिन्त्य तौ धीमन्तौ रावणी रणान्नेशतु र्विभीषणश्च भामंडलकपीश्वरौ पश्यन्नस्थात् । हिमानीच्छन्नवपुषौ सूर्याचन्द्रमसाविव चिन्ताम्लानाननौ रामलक्ष्मणौ तत्र तस्थतुः । ततो रामभद्रः पूर्वमतिपन्नवरं सुरं सुपर्णामरपुंगवं महालोचनमस्मार्षीत् । सोऽमरोऽवधिना ज्ञात्वाभ्येत्य सिंहनिनादाख्यां विद्यां मुशलं स्यंदनं हलञ्च [1]पद्माय ददौ । तथा लक्ष्मणाय गारुडिं विद्यां स्यन्दनं समरे रिपुनाशिनीं विद्युद्वदनां विद्याञ्च ददौ । उभयोरपि सोऽमरो वरुणाग्नेयवायव्यप्रमुखाणि दिव्यान्यपराण्यस्त्राणि छत्रे च ददौ । तत्क्षणं सौमित्रे र्वाहनीभूतं गरुडं प्रेक्ष्य सुग्रीवभामंडलयोः पाशपन्नगाः प्रणेशुः । तदा रामसैन्ये समंततो जयजयारावो जज्ञे देवोऽब्जिनीपतिरिव रक्षोबलमस्तं ययौ । प्रातर्भूयोऽपि रघूद्वहदशास्ययोः सैन्यानि सर्वाभिसारसाराणि रणांगणमुपासरन् । तेषां कृतान्तदताभस्फुरदस्त्रभयंकरोऽकांडारब्धसंवर्तो महारणः प्रावर्तत । मध्याह्नतापसंतप्तैः सूकरैःसरसीव क्रुद्धैरक्षोभि र्वानराणां वरूथिन्यक्षोभि । चमूं भग्नप्रायां प्रेक्ष्य महौजसः सुग्रीवाद्या अन्यवपुष्षु योगिन इव

एष रुष्टोऽहं गत्वा मशकमुष्टिवत्तान् हनिष्यामि । एवं दशग्रीवं निषिध्य मानोद्ग्रीवो महाभुज आग्रानः सः शक्रजित् कपिसैन्यमन्तः प्रविवेश । आपततः कासरस्य कासार इव महोजस स्तस्यापततः सतः कपिभिः समरोर्वी मुमुचे । सः त्रस्यतः कपीनूचे रे ! रे ! वानरा स्तिष्ठत, अहमयुध्यमानान्न हन्मि रावणस्य नंदनोऽस्मि । मारुतिः क्वास्ति सुग्रीवश्च क्वास्ति अथवा ताभ्यां कृतम्, अभ्यमित्रीयमानिनौ तौ रामसौमित्री क्वनु स्तः । दोर्दर्पादिति ब्रुवाणं तं दशग्रीवनंदनममर्षारुणितेक्षणः सुग्रीवो रणायाह्वत । भामंडलोऽपीन्द्रजितोऽवरजं मेघवाहनं यथा शरभः शरभं तथाऽऽयोधयितुमारेभे । चत्वारो दिग्गजा इव चत्वारः सागरा इव त्रिलोकीभयंकरास्ते आस्फालयन्तः शुशुभिरे । तद्रथानां गतागतै र्वसुंधराऽकंपत सानुमंतश्चकंपिरे महोदधिश्च चुक्षोभ । अत्यन्तलघुहस्तानामविहस्तित्वशालिनाम् तेषां वाणाकर्षणमोक्षयोरन्तरं न बुबुधे । ते च दैवतै रायसै रस्त्रै श्चिरायायुध्यन्त, परं तेषां मध्यात्कोऽपि केनापि नाजीयत । अथो क्रूद्धाविन्द्रजिन्मेघवाहनौ सुग्रीवभामंडलयो रुद्धतं नागपाशास्त्रं मुमुचतुः । भामंडलकपीश्वरौ नागपाशै स्तथाबद्धौ यथा हि तौ निःश्वसितुमप्यनीश्वरावभूताम् । इतश्च लब्धसंज्ञेन कुंभकर्णेन रोषतो गदया ताडितो मारुतिर्मुर्छया पृथिव्यामपतत् । सः करी करेणेव तक्षककल्पेन दोष्णा समुदग्रे वलयितेन चान्तःकक्षं न्यधत्त । विभीषणो राममूचे हे स्वामिन् ! एतौ हि ते वले वलीयसौ सारभूतावानने नयने इव स्तः । तौ च वैदेहिसुग्रीवौ रावणिभ्यां महोरगै र्बद्धौ यावल्लकां न नीयेते तावत्तौ अहं मोचयामि । हे रघूद्वह ! कुंभकर्णेन महीयसा दोष्णा वद्धो हनुमान् लंकामप्राप्तएवाऽयं

लोक्य सुग्रीवः समधावत। भामंडलो दधिमुखो महेन्द्रः कुमुदोऽगदोऽपरेप्युद्यतः प्रदीपन इवान्वधावन्त। युगपच्चित्राण्यस्त्राणि वर्षन्तो वानरोत्तमा व्याधाः पञ्चाननमिव दशाननानुजमरुधन्। रात्रिंचरवरस्तेषु कालरात्रिमिवापरां प्रस्वापनास्त्रममोघं मुनिवाक्यवदमुंचत्। दिवा कुमुदखंडवन्निद्रायमाणं स्वं सैन्यं दृष्ट्वा सुग्रीवः प्रबोधिनीं महाविद्यां सस्मार। अरे! कुंभकर्णः क्वास्तीत्युच्चैस्तुमुलकारिणस्ते वानरभटा निशात्यये खगा इवोत्तस्थुः। सुग्रीवाधिष्ठिता आकर्णाकृष्टकार्मुकाः सुष्ठुयोधिनः कपिकुंजराः कुंभकर्णमुपाद्रवन्। अगदंकारो गदानिव सुग्रीवो गदया कुंभकर्णस्य सारथिं रथं रथ्यांश्च दलयामास। अथ भूमिष्ठःकुंभकर्णो हस्तेनोद्स्तमुद्गर एकशृंगो गिरिरिव सुग्रीवायाभ्यधावत। युद्धार्थं धावतस्तस्य गरीयसांगवातेन करिस्पर्शेन वृक्षवत् भूयांसः कपयः पेतुः। स्थले नदीरय इव प्लवंगमैरस्खलितः सः मुद्गरेणाहत्य सुग्रीवरथमचूर्णयत्। सुग्रीवः खे समुत्पत्य महीयसीमेकां शिलां वज्री अद्रये वज्रमिव कुंभकर्णाय मुमोच। कुंभकर्णः कपीनामुत्पातिकीं रजोवृष्टिं दर्शयन्निव मुद्गरेण तां शिलां कणशोऽकरोत्। अथ वालिनोऽवरज स्तडत्तडिति कुर्वाण मुत्कटं तडिद्दंडास्त्रं रावणावरजायामुचत। कुंभकर्ण स्तस्मै चंडाय तडिद्दंडायानेकशःशस्त्राणि प्रचिक्षेप तानि तु सर्वाणि मोघिभूतानि। कल्पान्ते पर्वत इव जगद्भयंकराकारः कुंभकर्ण स्तडिद्दडेन ताडित उर्व्यां पपात। भ्रातरि मूर्छिते सति क्रुद्धो भ्रुकुटीभीषणाननो दशाननः स्वयमेव साक्षादंतक इवाचालीत्। इन्द्रजिन्नत्वा तमित्यूचे हे स्वामिन्! रणे तव पुरो यमो न, वरुणो न, कुबेरो न, हरिरपि न, तिष्ठति। हे देव! एते प्लवगाः किन्तु तिष्ठन्ति, तस्मात्तिष्ठ,

बुत्कुर्वन्तं शरैश्छादयामास वज्रोदरोऽपि निर्धूय प्राट्ट्कालोऽबुदै र्मार्तंडमिव तं शरैःस्तिरयामास । अहो वज्रो-
दरो वीरोऽस्ति, योऽस्मै हनुमतेऽलम्, अहो पावनि वीरोऽस्ति यो वज्रोदररक्षसेऽलमेवं रणक्रीडासदस्यानां
दिवौकसां गिरोऽसहिष्णु द्विपज्जिष्णु र्मानपर्वतो हनुमानुत्पातमेघवद्युगपदस्त्राणि वर्षन् रक्षसां पश्यतामपि तं
वज्रोदरमवधीत्। अथ वज्रोदरवधक्रुद्धो रावणिर्जंबुमाली प्रतीकारो द्विपमिव तर्जन्मारुति माह्वास्त । अन्योऽन्य-
वधकांक्षिणौ महामल्लावुभावपि [1]वार्तिकौ पन्नगैरिव बाणै श्चिरं युयुधाते । इषुभ्यो द्विगुणद्विगुणानिषून्प्रतिय-
च्छन्तौ तौ परस्परमधमर्णोत्तमर्णतां प्रापतुः । अथ क्रुद्धो हनुमान् गरीयसा मुद्गरेण तंद्विषमरथ्यरथसारथिं
कृत्वा ताडयामास । मूर्छितो जंबुमाल्युर्व्यां निपपात रक्षोवीरो महोदरश्चशिलीमुखान्वर्षन् रुपोत्पपात च ।
अन्येऽपि हनुमन्तं जिघांसवो राक्षसभटा जात्यश्वानः क्रोडमिवोच्चकै र्वेष्टयामासुः हनुमता, ते केऽपि दोष्णोः
केऽपि मुखे, केऽप्यंघ्र्योः केऽपि हृदि च केऽपि कुक्षौ च तीक्ष्णैः शरैर्जघ्निरे । अन्तर्वणं दव इव मध्येंऽभोधि
वाडव इव मध्ये रक्षोवलं वीरो मारुतिश्चकासामास । महोजसां शिरोरत्नं पवनंजयनंदनो दिवाकरस्तमांसीव
क्षणाद्रक्षांस्यभांक्षीत् । अथ रक्षोभंगेन संक्रुद्धः शूलभृत् कुंभकर्णो भूमिष्ठ ईशान इव स्वयं योध्धुमधावत ।
कुंभकर्णः कानप्यंघ्रिप्रहारेण, कानपि मुष्टिघातेन कांश्चित्कूर्परघातेन कांश्चन तलघातेन कांश्चिन्मुद्गरघातेन
कांश्चन शूलघातेन कानपि कपीनन्योन्यघातेनावधीत् । कल्पान्तार्णवकल्पं तरस्विनमापतन्तं तं रावणानुजमा-

---

[1] गारुडिनौ ।

भीषणः सः विविधान्यस्त्राणि बिभ्राणो तत्कालारुणया दृशाऽपि शत्रून् दहन्निव प्रत्येकमप्यात्मसेनान्यं शतमन्युवत् पश्यन्नरीन्तृणाय मन्यमानो रावणो रणावनिमगात् । महौजसस्तेऽपि राघवसेनान्यो दिव्यमरै वीक्ष्यमाणाः सैन्येः सह समरायोपतस्थिरे । तदा समराजीरभूतलं क्षणेनापि काप्युद्धते रक्तवारिभिः सनदीकमिव, कापि पतितैः कपिकुंजरैरुत्पर्वतमिव क्वचिच्च रथच्युतै र्मकरास्यैरुन्मकरमिव कापि सामिभग्नै र्महारथै रुदंतमिव । क्वचिच्चोत्तांडवैः कवन्धै र्नृत्तस्थानमिवाजायत । अथरावणहुंकारप्रेरितैः सर्वै रजनीचरैः सर्वाभिसारेण कपिसैन्या वभंजिरे । अथ स्वसैन्यभंगेन क्रुद्धः सुग्रीवोऽधिज्यकार्मुकः सन् प्रबलै र्बलै रचलां चलयन्निव स्वयं चचाल। हे राजन्! त्वमिहैव तिष्ठ मम विक्रमश्चेक्षस्वैवं सुग्रीवं निषिध्य युधि हनुमानचलत् । मंदरो महाब्धिमिव हनुमाननेकानीकदुर्मदं दुर्गाहमपि राक्षरानीकमगाहिष्ट । अथ युधि दुर्जयो धनुस्तूणमाली माली पर्जन्यवद्दुर्जितं गर्जन् हनुमतेऽढौकत । धनुष्टंकारकारिणौ वीरौ हनुमन्मालिनौ पुच्छास्फोटकरावुद्दामौ सिंहाविव विरेजतुः । तौ माली हनूमन्तौ परस्परमस्त्रैः प्रजह्राते मिथोऽस्त्राणि चिच्छिदाते मिथोऽतर्जयताञ्च । चिरं युद्धवा हनुमान् ग्रीष्मार्कः पल्वलं निस्तोयमिव वीर्यशालिनं मालिनं निरस्त्रं चक्रे । हे जरद्रक्षः! गच्छ, गच्छ, त्वया हतेन किं ननु, इतिब्रुवाणं शीलमेत्य वज्रोदरोऽवदत् । अरे रे! कद्वद! पाप! एवं वदन् हि म्रियसे, एह्येहि मयासह युध्यस्व, एषो न भवसि मा स्मगाः । मृगाधिपो हकामिव मारुति स्तद्वचः श्रुत्वा उर्वहंकारो

१ गजा रथवोढारो यस्यैतादृश रथमारूढ ।

हस्तमहस्तौ वानरैः सह योध्धुमुद्यतौ । अथ तयो र्युद्धाध्वरदीक्षितयो र्द्वयोरपि नलनीलौ महाकपी संमुखीनौ सन्तावुदस्थाताम् । महाभुजौ हस्तो नलश्चादितोऽपि रथारूढौ संमुखीनौ वक्रावक्रग्रहाविवावमिलताम् । तौ मिथो ज्यानादेन युद्धनिमंत्रणपराविवाधिज्यीकृत्य धन्वन्यास्फालयामासतुः । तौ द्वावपि परस्परं तथा बाणान् ववृषतु र्यथा तयो रथौ शरशूलैः [3]श्वाविन्निभावभूताम् । क्षणं नले क्षणञ्च हस्ते जयपराजयावभूतां तत्र निपुणै-रपि तद्बलान्तं नाज्ञायि । सभ्यीभूतस्ववीराणामग्रे ह्रीणो बली नलोऽविहस्तैः क्रुधा क्षुरप्रेण हस्तशिरोऽच्छिदत् नलो हस्तमिव नीलोऽपि सद्यः प्रहस्तमवधीत् । तदा नलनीलयो रुपरिष्टात् दिवः पुष्पवृष्टिरभूत् । हस्तप्रहस्त-निधनात् दशाननबले क्रुधा मारीचः, सिंहजघनः, स्वयंभूः, सारणः, शुकः, चन्द्रार्कोद्दामबीभत्साः कामाक्षो, मकरो, ज्वरः, गंभीरः, सिंहरथाश्वरथा अन्येऽपि चोपासरन् । मदनांकुरसंतापप्रथिताक्रोशनंदनाः, दुरितानघ-पुष्पास्त्रविघ्नप्रीतिकरादयः, कपयः पृथक् पृथक् कुक्कुटैः कुक्कुटा इवोत्पतन्तः पतन्तश्च राक्षसैः सार्धमयुध्यन्त । मारीचरक्षः संतापं नंदनो ज्वरराक्षसं उद्दामराक्षसो विघ्नं दुरितवानरः शुकं सिंहजघनोनाम राक्षसः प्रथितं नाम वानरं दृढं योधयित्वा जघ्नु र्भास्करश्चास्तं ययौ । ततो रामरावणौ द्वयोरपि हि सैन्यानि हतानहतानपि स्वान् शोधयन्तो निवृत्त्यास्थुः । विभावर्यां विभातायां सत्यां प्रत्यर्कं दानवाइव रामबलं प्रति रक्षोयोधा योध्धुं ढुढौकिरे । भूमध्येऽचलोमेरुरिव मध्ये सैन्यं दशास्यो [1]गजरथ्यरथारूढो रणकर्मणे चचाल । अंतकादपि

१ हस्तौ, पादौ मस्तकञ्चेति पञ्चशाखा । २ शाखाः सन्ति येषां तेषां वृक्षाणाम् ३ शल्यकः "शाहुडी" इति भाषायाम् । ४ अव्याकुलः ।

रभकेतवः, केचिच्चमूरुकेतवः, केचित् कुर्कुटकेतवः, केचित् कोदंडपाणयः, केचिन्निस्त्रिंशपाणयः, केचिन्मयूर-केतवः, केचित्पन्नगकेतवः, केचिन्मार्जारकेतवः, केचित् कुर्कुटकेतवः, केचिद् भुशुंडीपाणयः, केचिन्मुद्गरपाणयः, केचित्त्रिशूलपाणयः, केचित्परिघपाणयः, केचित् कुठारपाणयः, केचित्पाशपाणयो, दशास्यवीरा मुहुर्मुहु विंपक्षवीरान् नामग्राहं पृच्छन्तो रणकर्मणि चतुरं विचेरुः। रावणो वैताढ्यस्येव सैन्यस्य प्रथिम्ना पंचाशद्योजनानि मेदिनीमाच्छाद्य रणकर्मणेऽस्थात्। स्वनायकान्प्रशंसन्तः परनायकान्निंदन्तः परस्परं चाक्षिपन्तः परस्परं मिथोऽभिधाश्च कथयन्तोऽस्त्राण्यस्त्रै र्वादयन्तः कांस्यतालवत्करास्फोटपुरःसरं रामरावणयोः सैन्या मिमिलुः। तत्राजौ गच्छ, गच्छ, तिष्ठ, तिष्ठ, मा भैषी रायुध मुत्सृजायुधं कुरुष्वेति भटानां वागभूत्। द्वयो श्चम्वो र्वनान्तर्विहगा इव शल्यानि शंकवो बाणाश्चक्राणि परिघा गदाश्च समुत्पेतुः। तदा मिथो घातभंगैः खड्गै र्वेगात्कृत्तैश्चमौलिभिरुच्छलद्भिः खं नानाकेतुराश्रिवाभूत्। सुभटा मुद्गराघातै र्मुहु र्द्विपांल्लोठयन्तो दंडकन्दुकिनीं क्रीडां तन्वाना इव रेजिरे। अपरै र्भटैः कुठारघातै राच्छिन्ना भटानां [1]पञ्चशाखाः [2]शाखावतां शाखा इव पतंति स्म। वीरा वीराणां शिरांसि छित्वा बुभुक्षिताय कीनाशायोचितान् कवलानिव भूमौ प्रचिक्षिपुः। तस्मिन् युद्धे महौजसां रक्षसां वानराणाञ्च जयो दायादानां धनमिव चिरं साध्योऽभवत्। तत्र समरे चिरं प्रवर्तमाने सति महाबलै र्वानरैः काननवत् तद्राक्षसबलमभंजि। रक्षोबले भग्ने सति सदा लंकेशजयप्रतिश्रुवौ

१ गूढपुरुषेः,

दृष्टभावानुरूपञ्च करिष्यामः । तदभिज्ञो विशालो नाम खेचर एवमभ्यधात् रक्षःस्वेपो विभीषण एक एव महात्मा धार्मिकश्चास्ति । सीतामोक्षायजल्पंश्चायमनल्परोषेण बन्धुना निर्वासितः शरण्यं त्वामागादेतदन्यथा नास्ति । राम इति श्रुत्वा द्वाःस्थेन विभीषणमवीविशत्, पादयोः क्षिप्तमूर्धानञ्च संभ्रमात्परिरेभे । विभीषणोऽप्येवमुवाच यद्दुर्नयमग्रजं हित्वा त्वा मागतोऽस्मि तद्भक्तं मां सुग्रीववदादिदेश । राघवस्तदा तस्मै लंकाराज्यं प्रत्यपद्यत, महात्मसु प्रणिपातः क्वापि मुधा न भवति । अथ रघूद्वहो हंसद्वीपेऽष्टौ दिनान्यतिवाह्य चमूवृतः कल्पान्तवातवल्लंकां प्रत्यचालीत् । स्थेमपर्वतः काकुत्स्थश्चम्वाः पृथुत्वेन पृथ्व्याविंशतियोजनीं रुद्ध्वा सज्जः सन् रणायावतस्थे । स्फुटद्ब्रह्मांडभूरिव रामसेनाकलकल उदधे र्वेलाध्वनिरिव लंकां बधिरयामास । अनन्यसाधारणोजस उदायुधाः प्रहस्ताद्या दशकंधरसेनान्यः सद्यः संवर्मयामासुः । केचिन्मतंगजोद्वाह्यै रपरे वाहवाहनै रन्येतु शार्दूलवाह्यैः परे खरवाह्यै रथैः केचित् कूबेरवन्नरैः केचिद्धक्षिवन्मेषैः केचिद् यमवन्महिषैः केचिद्रेवन्तवद्धयैः केचिद्देववद्विमानैः समरकर्मणे प्रह्वाः वीरा युगपदुत्पत्य दशाननं परिवव्रुः । अथ रोषारुणाक्षो रत्नश्रवःप्रथमनंदनो रावणः संनह्य विविधायुधपूरितं स्यन्दनमध्यास्त । शूलपाणि र्भानुकर्णोऽपरोदंडपाणिरिवोपेत्य दशकंठस्य पारिपार्श्वकः समभूत् । इन्द्रजिन्मेघवाहनौ कुमारौ दशकंठस्यापरौ दोर्दंडाविव पार्श्वयो रेत्य तस्थतुः । अन्येऽपि दोष्मन्तः सूनवः, शुकसारणमारीचमयसुंदादयः कोटिशोऽपि सामन्ता अभ्ययुः । दशाननः संख्यकर्मठै रसंख्यै रक्षौहिणीनां सहस्रै दिशः प्रच्छादयन् पुर्याः प्रचचाल । शार्दूलकेतवः केचित्, केचिच्छ-

प्यधिकाऽस्ति. ताञ्च सीताकारणेन मा परिहार्षी रेवंतवोभयभ्रष्टता भवेत् । अथेद्रजिदेवमुवाच ह्याजन्मभीरुणा त्वया नः सर्वं कुलं दूषितं त्वं तातस्य सोदरो नासि । इन्द्रस्यापि विजेतारं सर्वसंपदां नेतारं तातमेवं संभावयन् हे मूर्ख ! मुमूर्षसि । अनृतभाषिणा त्वया हि पुराऽपि तातश्छलितः । यद्दशरथवधं प्रतिज्ञाय नह्यकृथाः । हे निस्त्रप ! इहायातं दाशरथिं दर्शयन् भूचरेभ्योऽपि भयमुत्पाद्य तातादक्षितुमिच्छसि । तन्मन्ये रामगृह्योऽसि मंत्रेऽपि नाधिकरोषि, ह्याप्तेन मंत्रिणा कृतो मंत्रो भूभुजां शुभोदर्को भवति । विभीषणोऽप्येवमुवाच अहं खलु न शत्रुगृह्योऽस्मि पुत्ररूपस्त्वमेव कुलनाशकृच्छत्रुरुत्पन्नोऽसि । अयं तव पितैश्वर्यकामाभ्यां तावदन्धः, हे मुग्ध दुग्धास्य ! जन्मान्धइव वेत्सि किम् ! । हे राजन् ! त्वमनेन पुत्रेण निजेनचरित्रेण चाचिरादेव पतिष्यसि त्वत्कृतेऽहं मुधा ताम्यामि । दैवदूषितोरावणोऽप्यधिकं क्रुद्धः सन् विभीषणवधाय भीषणंखड्गमाकृष्योच्चैरुद-स्थात् । कुंभकर्णेन्द्रजिद्भ्यां द्रुतमन्तरा पतित्वा युद्धान्निषिध्य तौ द्विपौ शालामिव स्वं स्थानं नीतौ । अरे ! मत्पुर्या निर्याहि त्वं वह्निवदाश्रयाशोऽसि, रावणेनेत्युक्तो विभीषणो रामाभ्यर्णेऽगात् । तदा रक्षोविद्याधराणां चोत्कटास्त्रिंशदक्षौहिण्यो लंकाधिपं हित्वा सद्योऽपि विभीषणमनुजग्मुः । आपतंतं तं च प्रेक्ष्य सुग्रीवाद्याः प्रचुक्षुभुः, हि शाकिन्यामिव द्विषि यथा तथा विश्वासो न भवति । सः विभीषण आदौ पुरुषं प्रेष्य रामाय स्वमजिज्ञपत् रामोऽपि विश्वासपात्रंसुग्रीवमुखमुदैक्षत । सुग्रीवोऽप्यब्रवीत् यद्यप्येते प्रकृत्या क्षुद्रा राक्षसा आजन्ममायिनः सन्ति तथाप्यसाविहायातु । अस्य शुभाशुभं भावं प्रेषणैरेव ज्ञास्यामो ततश्च हे प्रभो ! इह

रंबरं बिभरांचक्रुः। स्वामिकार्यसिद्धावहंयवः खेचरा विमानैः स्यंदनै रश्वै गंजै रन्यैश्च वाहनैः खे जग्मुः। उदन्वत उपरि गच्छन् ससैन्यो राघवः क्षणात् वेलन्धरमहीधरे वेलन्धरपुरं प्राप। तत्रोद्धतौ समुद्रसेतू राजानौ दुर्धरौ समुद्राविव रामाग्रसैन्येन योद्धु मारेभाते। महाभुजो नलः नीलश्च समुद्रं सेतुमबध्नात् स्वामि कर्मणि मनीषी उपराममनैषीच्च। काकुत्स्थः पुनरेव तौ तथैव स्थापयामास हि महान्तः पराभूतेऽरावपि कृपालवः सन्ति। समुद्रोऽपि हि रामानुजन्मने रूपाभिरामा रामामतल्लिकास्तिस्रः कन्यकाः प्रददौ। रघूद्वह स्तां निशा मुषित्वा प्रगे सेतुसमुद्रानुगतः क्षणात्सुवेलाद्रिमासादयामास। तत्रापि दुर्जयं सुवेलं नाम राजानं जित्वा रामश्चैकां निशामुवास प्रातर्भूयश्च चचाल। अथ रघुपुंगवः उपलंकं हंसद्वीपे हंसरथंनृपं जित्वा तत्रैव कृतावास स्तस्थौ। अथ काकुत्स्थ आसन्नस्थे सति मीनस्थितेऽर्कज इव विष्वक् प्रलयशंकिनी लंका क्षोभ मुपेयाय। तदा रावणस्य ते सहस्रशः सामन्ता हस्तप्रहस्तमारीचसारणाद्याः युद्धाय संनह्यन्ति स्म। अथ द्विषत्ताडनपंडितो रावणो दारुणानि कोटिशो रणतूर्याणि किंकरै स्ताडयामास। विभीषणस्तदा दशास्यमभ्येत्य नत्वाऽवोचत् क्षणं प्रसीद, शुभोदर्कं मम वचो विमृश। अविमृश्य पुरा लोकद्वितयघातकं परदारापहरणं चक्रे तेन ते कुलं लज्जितं च चक्रे। निजभार्यां समानेतुमयं काकुत्स्थः समुपस्थितोऽस्ति, अस्मै च तत्कलत्रार्पण-मिदमेवातिथ्यं कुरु। रामस्त्वत्तोऽन्यथाकारमपि सीतां ग्रहिष्यति, त्वयासह तवाशेषं कुलञ्च निग्रहिष्यति। साहसखरांतकौ तौ रामसौमित्री दूरे स्तां तत्पत्ति रेको हनुमानपि देवेन किं न दृष्टः। ते श्री रिन्द्रश्रियोऽ-

सभमोः किरीटं कणशश्चूर्णयामास । एषो हन्यतां गृह्यतां चेति रावणे जल्पति सति, सः हनुमान् तत्पुरीमनाथामिव [1]पाददर्दरैरभांक्षीत् । पावनिरेवं क्रीडां कृत्वा सुपर्ण इवोत्पत्य राममेत्य सीताचूडारत्नञ्चसमर्प्यानमत् । रामस्तं सीताचूडामणिं साक्षादागतां सीतामिव मुहुर्मुहुः स्पृशन् हृद्यारोपयामास । आलिंग्य दाशरथिना सुतवत्प्रसादात्पृष्टः शशंस दशवक्त्र विमाननां ताम् ॥ सीताप्रवृत्ति मखिलां हनुमान् यथावदाकर्ण्यमानभुजविक्रमसंपदन्यैः ॥ ४०८

इत्याचार्य श्रीहेमचन्द्र विरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि अन्वयात्मक गद्य-रचनायां सीताप्रवृत्यानयनो नाम षष्ठः सर्गः समाप्तः ॥

---

## अथ सप्तमः सर्गः

अथ ससौमित्री रामः सुग्रीवाद्यै भँटै र्वृतो लंकाविजययात्रायै गगनाध्वना प्रतस्थे । भामंडलो नलो नीलो महेन्द्रः पावनंजयि विराधः सुषेणो जाम्बवानंगदोऽपि चान्येऽपि कोटिशो महाविद्याधराधीशास्तत्क्षणं स्वसैन्यैश्छिन्नदिङ्मुखाः रामं समावृत्य चेलुः । विद्याधरैराहतान्यनेकेशो यात्रातूर्याण्यत्यन्तगंभीरै र्नादै

[1] 'पादावेव' दर्दरा प्रर्वता स्तैः ।

दत्ते। हृष्टेनेन्द्रजिता फुल्लाक्षै र्जयसाक्षिभी राक्षसै निरीक्ष्यमाणो हनुमानुपरावणं निन्ये। तदा रावणो मारुति-माहस्म, हे दुर्मते! आजन्म मामकीनेन त्वया यत्तपस्विनौ तावाश्रितौ तत् किं कृतम्। वने वासौ फलाहारौ मलिनौ मलिनांशुकौ तौ तुष्टौ सन्तौ किराताविव तुभ्यं कां श्रियं दास्यतः। तत्रापि हे मंदबुद्धे! त्वं तद्वाचेह किमागमः, येनाहायातमात्रोऽपि प्राणसंशयं प्राप्तोऽसि। तौ भूचारिणौ तु दक्षौ तत्ताभ्यामदः कारितोऽसि, हि धूर्तकाः परहस्तेनांगारान् कर्षयन्ति। यत्त्वं मे सेवकवरोऽसि परस्य चाद्य दूतोऽसि, तद्धे! साम्प्रतमवध्योऽसि किन्तु शिक्षामात्राय विडंब्यसे। हनुमानप्येवमुवाच कदाहं तव सेवकोऽस्मि, कदाच त्वं मम स्वाम्यभूरेवं वदन्नलज्जसे किम्?। एकदा बहुमन्यस्ते सामन्तः खरो युधि वरुणबन्धात् त्वन्मैत्र्या मत्पित्रा पुरा मोचितः। पुरा त्वया साहाय्यार्थमाहूतोऽहमभ्यागमं रणे संकटे त्वां वरुणपुत्रेभ्यश्चारक्षम्। साम्प्रतं पापतत्परस्त्वं साहाय्यस्य योग्यो नासि, हि परस्त्रीहारिणस्तव संभाषोऽपि पापाय भवति। त्वदीये तं न पश्यामि योऽधुना सौमित्रेरेकस्मादपि त्वां त्रास्यते, तदग्रजो रामस्तु दूरे। तद्गिरा कुपितो भालाहितभृकुटीभीषणो दशाननो दशनैरोष्ठं दशन्निदमभ्यधात्। यत्त्वंमदरी श्रितोऽसि मांचारीकृतवानसि, तन्नूनं मर्तुकामोऽसि तत्र तव किं वैराग्यम्। यथा कुष्ठविशीर्णाङ्गं मुमूर्षुमपि हत्याभयात्तु कोऽपि न निहन्त्येवमरे! दूतमपि को हन्यात्। तस्मात् संप्रति पञ्चशिखीकृत्य रासभ आरोप्यान्तर्लंकं प्रतिपथं लोकवेष्टितो भ्राम्यसे। इत्युक्तः क्रुद्धो मारुतिः पाशपन्नगानत्रोटयत् हि नलिनीनाळै र्बद्धः कुंजरः कियत्तिष्ठति। मारुतिस्तडिद्दंडइवोत्पत्य पादघातेन राक्ष-

स्तेभ्यः प्रजहार, हि वलीयसां सर्वमप्यस्त्रं भवति । अस्खलन् समीरणो वृक्षानिवैक्ष्वाकुपत्तिः सः हनुमान् क्षुद्रान् तानारक्षक्षपाचरान्मक्ष्वभांक्षीत् । तदा केचिद्धनुमता क्रियमाणमुद्यानारक्षसंक्षयं गत्वा क्षपाचरपते राचचक्षिरे । ततो राक्षसेश्वरो हनुमतो घातनायारिघातनमक्षकुमारं वलैः सह समादिक्षत् । अथ रणायाक्षिपन्तमक्षं पावनंजयि र्वभाषे, हे अक्षकुमार ! भोजनादौ फलमिव रणादौ मे त्वमापतः । हे कपे ! त्वं मुधा गर्जसीति तर्जयन्त्रावणात्मजोऽक्ष्णोः प्रसररोधिभि स्तीक्ष्णैर्विशिखै र्ववर्ष । उद्वेलो वारिधि र्वारिभि र्द्वीपमिव [1]श्रीशैलोऽपि समकर्षणेषुवर्षेण रावणिं विदधे । चिरं शस्त्राशस्त्रि युद्धं कृत्वा रणपारंपरिमेप्सु रंजनासुतः पशुमिवाक्षकुमार मवधीत् । ततो भ्रातृवधामर्षात् हे मारुते ! तिष्ठ तिष्ठेति स सौष्ठवमुदीरयन्निन्द्रजिद्द्रुतमाययौ । द्वयोरपि महावाह्वोः कल्पान्त इव दारुणो विश्वविक्षोभकरणो रणश्चिरं प्रवव्रुते । वारिधारावन्नीरन्ध्राः शस्त्रधोरणी र्वषन्तौ व्योमस्थौ तौ पुष्करावर्तकाविवालक्ष्येताम् । आस्फलद्भि र्निरंतरै स्तयो रस्त्रैः क्षणादन्तरिक्षं यादोभि र्वारिधि रिव दुःप्रेक्ष्य मजनि । दुर्वारो रावणात्मजो यावन्त्यस्त्राणि मुमोच तदनेकगुणै रस्त्रै र्मारुति स्तानि चिच्छेद । हनूमदस्त्रक्षुण्णाङ्गः सर्वेऽपीन्द्रजितो भटा जंगमा रक्तह्रदिनीपर्वताइवानश्यन् । तदादशास्यसूर्निजं सैन्यं नष्टं दृष्ट्वा स्वश्च मोघीकृतायुधं दृष्ट्वा श्रीशैलाय नागपाशास्त्रममुंचत् । तदैव द्रढीयोभि र्नागपाशैरभित आपादमस्तकं पवननंदनश्चंदन इवावंधि । हनूमता सः नागपाशवन्धोऽपि समसाहि हि, शक्तोऽपि कौतुकाद् द्विषां क्षणं जयं

[1] हनुमान्

सा हनुमदुपरोधेन रामोदन्तमुदा च एकविंशत्यहोरात्रप्रान्ते भोजनं व्यधित। एवञ्च प्रोवाच हे वत्स! ममाभिज्ञानं चूडामणिमिमं गृहीत्वाऽऽशु गच्छ, हि तिष्ठतस्ते उपद्रवः स्यात्। अत्रत्वामागतं ज्ञात्वा क्रूरकर्मैषो बली राक्षसोऽन्तकवद्धन्तुं समुपस्थास्यते नूनम्। सोऽपि स्मित्वा कृतांजलिः सप्रश्रयमिति जगाद, हे मात! त्वं मयिवात्सल्यादेवंकातरा वदसि । त्रिजगज्जैत्रयो रामलक्ष्मणयोश्चाहं पत्तिरस्मि, ममाग्रतः ससैन्योऽप्ययं तपस्वी रावणः कोनाम। हे स्वामिनि! ससैन्यमप्येनं रावणं परिभूय त्वामपि स्कंधमारोप्य स्वामिनोऽन्तिके नयामि। स्मित्वा सीताऽप्येव मुवाच हे भद्र! एवं ससौष्ठवं स्वकं वदन् रामभद्रं प्रभुं नहि ह्रेपयसि। रामशार्ङ्गिणोः पदातौ त्वयि सर्वं संभाव्यते, परन्तु मनागपि परपुंस्पर्शो मे नार्हति। तच्छीघ्रं गच्छ एवं सति त्वया सर्वं कृतं भविष्यति,। यत्त्वयि गते सति आर्यपुत्र उद्योगं करिष्यति। अथ हनुमानित्थं स्माहैषोऽहं गच्छामि परं रक्षसां किञ्चिद्विक्रमचापलं दर्शयिष्यामि। जितकाश्ययं दशास्यः परवीर्यं न मन्यते, तस्मादद्य रामभद्रीयपत्तेरपि पराक्रमं जानातु। आमेत्युक्त्वा सीता तस्य निजं चूडामणि मर्पयत् सोऽपि नत्वा पादन्यासै र्धरां धुन्वन्नुच्चैश्चचाल। प्रसरत्करविक्रमः सः वनं वनद्विपवत् तदेव देवरमणोद्यानं भंक्तुं प्रचक्रमे। रक्ताशोकेषु निःशूको बकुलद्रुष्वनाकुलःसहकारेष्वकारुण्यश्चंपकेष्वपि निष्कंपो, मन्दारेष्वमन्दरोपः कदलीष्वपदयो रम्येष्वन्यद्रुष्वपि भंगलीलां चकार। तदुद्याने चतुर्द्वारि क्षपाचरा द्वारपाला स्तदा मुद्गरपाणयस्तंनिहन्तुमधावन्त। तीरमहीधरे महांभोनिधिकल्लोला इव तेषां प्रहरणानि तु हनुमति स्खलंति स्म । कुपितः पावनि र्निरायास स्तैरेवोद्यानपादपै

हे सुभ्रु ! अहमन्याश्च तत्पत्न्य
धायि तथापि संमति ह्यस्तु । हे जानकि ! भजनीयमपि भजन्तं त मुपेत्य भज, हे सुभ्रु ! अहमन्याश्च तत्पत्न्य
स्त्वदाज्ञां बिभ्रतु । सीताप्यवोचदाः पापे ! पतिदौत्यविधायिनि ! दुर्मुखि ! त्वद्भर्तुरिवतवापि मुखं को वीक्षेत ।
मां रामस्य पार्श्वे विद्धि, सौमित्रिं च खरादीनिव सबान्धवं तव धवं हन्तुं द्रागिहागतं विद्धि । हे पापिष्ठे !
उत्तिष्ठोत्तिष्ठ, अतःपरं त्वयासह न वच्मि, सीतयैवं तर्जिता सकोपा सा ततः प्रययौ । अथ हनुमानाविर्भूय
सीतां नत्वा कृतांजलि रित्यूचे हे देवि ! सलक्ष्मणो रामो दिष्ट्या जयति । त्वत्प्रवृत्तिकृते रामेणादिष्टोऽहमि-
हागमम्, मयि च तत्रगते सति रिपुच्छिदे राम इहैष्यति । बाष्पायितेक्षणा सीताऽपृच्छन्नतुत्वं कोऽसि भोः,
एतं दुर्लंघ्य मर्णवश्च कथं लंघितवानसि । मे प्राणनाथः सौमित्रिणा सह प्राणिति कच्चित् ? त्वया क वा स्थाने
दृष्टः कालं वा कथं नयति । हनुमानाख्यश्चाहं पवनांजनयोः सुतोऽस्मि, विद्ययाव्योमयानेन च मया जलधि
र्लंघितोऽस्ति । सलक्ष्मणो रामो विद्धिपद्धधात् समस्तवानराधीशं सुग्रीवं पत्तीकृत्याधिकिष्किन्धमस्ति ।
दवानलेन गिरिरिव रामोऽपित्वद्वियोगेन दिवानिशं तप्यमानोऽपरानपि तापयन्नस्ति । हे स्वामिनि ! गवा
वत्स इव त्वया रहितो लक्ष्मणोऽनिशं दिशः शून्याः पश्यन् जातु सौख्यं न लभते । ते पतिदेवरौ क्षणं स-
शोकौ क्षणञ्च सक्रोधौ सुग्रीवेणाश्वास्यमानावपि सुखं न प्रापतु । शक्रेशानावमरा इव तौ भामंडलो विराधो
महेन्द्राद्याश्च खेचराः पत्तीभूयोपासते । हे देवि ! तत्प्रवृत्ति मानेतुं सुग्रीवदर्शितोऽहं रामेण स्वाङ्गुलीयकं
समर्प्य प्रेपितोऽस्मि । त्वत्तोऽभिज्ञानं चूडामणि मयाऽऽनायितोऽस्ति, प्रभु स्तद्दर्शनेन मामत्रायातं प्रत्येष्यति ।

विचिंत्य हृतां रामपत्नीं सीतां सतीं रावणान्मोचय । इदं काकुत्स्थपत्नीहरणं केवलं परलोक एव न किन्त्विह-
लोकेऽपि बलिनोऽपि त्वद्भ्रातु र्दुःखाकृदेवहि विभीषणोऽप्यभाषीष्ट, हे हनुमन् त्वया साधूक्तं सीतां मोचयितुं
मया स्वाग्रजः पूर्वमप्युक्तः । भूयोऽपि हि सनिर्बन्धं सबान्धवं प्रार्थयिष्ये यद्येषोमद्गिरा सीतां पुन र्मुञ्चति ।
एवं विभीषणोक्ते सति, अंजनासुतः समुत्पत्य वैदेह्याधिष्ठिते देवरमणोद्याने जगाम । तत्राशोकतरो र्मूले
कपोललुलितालकां संतताश्रुपयोधारापल्वलीकृतभूतलां प्रम्लानवदनांभोजां हिमार्तां पद्मिनीमिवात्यन्तक्षाम-
वपुषं प्रथमेन्दुकलामिवोष्णनिश्वाससंतापविधुराधरपल्लवां निष्पंदां योगिनीमिव राम राम इति ध्यायन्तीं
मलिनीभूतवसनां वपुष्यपि निरपेक्षां देवीं वैदेहीं पवनंजयनंदनो ददर्श । अथ हनुमान्दध्यौ, अहो ! सीताम-
हासत्यस्ति जनैरस्या दर्शनमात्रेणापि पवित्रीभूयते । अस्याश्च विरहे सः रामः खिद्यते तत्स्थाने खलु, यद्यस्य
कलत्रं रूपवच्छीलवदीदृग् पावनमस्ति । वराकोऽयं रावणो भूयसा रघूद्वहप्रतापेन, स्वपापेनच द्विधापि
पतिष्यत्येव । ततो विद्यातिरोभूतो हनुमान् सीतोत्संगेंऽगुलीयकं पातयामास, साच तद्दृष्ट्वा मुमुदे । त्रिजटा
तदैव दशकंठं गत्वाव्यजिज्ञपत्, जानकी इयत्कालं विपण्णाऽऽसीद्यतु सानंदा दृश्यते । सः रावणस्तु तदा
मंदोदरी मूचे, अहमेवं मन्ये यदियं सीता विस्मृतरामा संप्रति मयि रिरंसु र्दृश्यते तद्गत्वा वोध्यतामिति ।
ततश्च पत्यु र्दौत्येन पुनः प्रलोभनकृते मंदोदरी ययौ, विनीता च सा सीता मवोचत । दशानन स्तावदद्वैतैश्व-
र्यसौन्दर्यवर्य स्त्वमपि रूपलावण्यसंपदाऽप्रतिरूपैवाऽसि । यद्यप्यज्ञेन दैवेन युवयोरुभयोरप्युचितो योगो न व्य-

नसंनिभोऽन्तः स्फुरल्लक्ष्मा मृगलक्ष्मा व्यक्तं व्यराजत । अन्तरा दत्तपाणिभि र्विरहिभिः स्खल्यमानाः शीतगु-
कराः मनोभुवः शरा इव प्रसस्रुः । चिरभुक्तामपि प्राप्तदुर्दशां पद्मिनीं प्रोज्य भृंगाः कुमुद्वतीं भेजु रहो !
नीचसौहृदं धिक् । इन्दुः प्रियमित्रस्य पुष्पेषो रिषून् सज्जीकर्तुमिव शेफाल्याः कुसुमानि करपातै रपातयत् ।
स्वानिपूर्तकीर्तनानि कुर्वाण इवेन्दुकान्तान्प्रवर्षयंच्छीतरश्मि र्नवाः सरसी र्निममे । धौतदिङ्मुखा सा ज्योत्स्ना
अटन्तीनां कुलटानां पद्मिनीनामिवोच्चकै र्मुखग्लानि विततान । लंकासुंदर्या च समं रममाणः पवनंजयनंदनो
निराशंक स्तां यामिनी मतीयाय । अथ प्राचीनबर्हिषः प्रिया माशां मंडयन् मार्तण्डः स्वर्णसूत्रसहोदरैः किरणै
रुदियाय । स्मेरासुकुमुद्वतीष्वव्याहतं निष्पतन्त्यभ्रंडरोचिषो रुचयः प्रस्वापनास्त्रतां ययुः । प्रबुद्धाभिः पुरंन्ध्रीभि
स्त्यक्तानि मौलिमाल्यानि केशपाशवियोगेनालिनादैररुदन्निव । रात्रिजागरणायासकषायितविलोचनाः
गणिकाः कामुकानां निकेतनान्निवर्तन्ते स्म । खंडिता मुखपद्मभ्यो निःश्वासवल्लय इव स्मेरपंकजकोशेभ्यो भृंग-
राजयो निर्ययुः । उदितादित्यतेजोभि र्लुण्ठितद्युतिवैभवो रजनीजानि र्लूतातन्तुपुटोपमोऽभवत् । यत्तमो ब्रह्मां-
डेऽपि न मातं तत्तमभ्रंडरोचिषा चंडानिलेन मेघ इव निर्धूय क्वाप्यनीयत । रात्रेरिवानुबद्धाया निद्राया अपस-
र्पणात् स्वस्वकर्माणि निर्मातुं पुरीजनः प्रावर्तत । तदा च गुरुविक्रमो हनुमान् सुंदरोक्तिभि र्लंकासुंदरी
मापृच्छय लंकानगरीं प्राविशत् । अथस्थामधामा द्विपद्धटविभीषणः पवनंजयनंदनो विभीपणस्य सदनं जगाम ।
विभीषणेन सत्कृत्यागमकारणं पृष्टोऽजनासूनुः सारगंभीरगी रदोऽत्रोचत् । यद्रावणस्य भ्राताऽसि तच्छुभोदर्कं

निर्ममे । दूरीभूतप्रियतमा वराकी चक्रवाकी रजस्वला ललनेव म्लानि मासादयामास । अर्हपतौ पत्यावस्तंगते सति पतिव्रताव्रतेव पद्मिनी उच्चकैर्मुखसंकोचं कलयामास । वायव्यस्नानमुदिते द्विजे वन्दिता[1]स्तर्णकोत्कंठिता गाव स्तूर्णं वनादृव्याजु[2]घुट्टः । त्विषामीशोऽस्तकाले निजं तेजो राजा युवराजाय राज्यसंपदमिव हविर्भुज आर्पयत् । नागरीभिः प्रतिपदं दिवोऽवतीर्णनक्षत्रश्रेणिश्रीपरिमोषिणः प्रदीपकाः अदीप्यन्त । चंडाशावस्तमीयुषि सति शशिनि चानुदिते सति तमो विजृंभितु मारेभे हि खला श्छलच्छेकाः खलु । एतद्रोदसीभांडं किमंजनाद्रे श्चूर्णेनपूर्णमथाञ्जनैः पूर्णमित्यभितस्तमोपूर्णमलक्ष्यत । नहि स्थलं नहि जलं न दिशो न भूः न नभोऽपि दृश्यते बहूक्तेन किं स्वहस्तोऽपि न लक्ष्यते । असिश्यामे विशेषतस्तमोलिप्ते व्योमनि ताराश्चिरं द्यूतकरित्रस्थ[3]वराटिका व्यडंबयन् । व्यक्तोडु कज्जलश्यामलं नभ उत्पुंडरीककालिंदीहृदसब्रह्मचारिताम् कलयामास । एकाकारकरे तमःपूरे विष्वक् प्रसर्पति सति, अनालोकं विश्वं विश्वं पातालसन्निभमभूत् । स्फीतेऽन्धकारे कामिसंघट्टनोत्सुका दूत्यो निःशंका हृदे शफरिका इव स्वैरं जजृंभिरे । आजानूत्क्षिप्तमंजीरा स्तमालश्यामलांशुकामृगनाभिविलिप्तांग्योऽभिसारिका अभिसस्रुः । अथोदयाद्रिप्रासादे सुवर्णकलशोपमः करांकुरमहाकन्दो निशाकर उदियाय । अंधकारं लक्ष्मव्याजादिन्दुनासह नैसर्गिकेण वैरेण नियुद्धंतन्वानमिवालक्ष्यत । विपुले गोकुले गोपु गवेन्द्र इव विपुले नभस्तले तारासु चन्द्रमाः स्वैरं क्रीडति स्म । मृगनाभिद्रवाधाररौप्यभाज-

---

१ वत्सेपूत्कंठिता. २ प्रतिनिवृतिरे ३ द्यूतपट्टस्थितकपर्दिकाः

माशालिकां विद्यां ददर्श। अरे कपे! क यातोऽसि, मम भोज्यतां यातोऽसीति साक्षेपं ब्रुवाणा सा मुखं व्याददातिस्म। गदापाणि र्हनुमांश्च तदाननं प्रविवेश, आदित्योऽभ्रमध्यमिव तां विदार्य च निर्ययौ। मरुत्सुत स्तया कृतं लंकायाः प्राकारं विद्यासामर्थ्यतः कर्परलीलया मक्ष्चभांक्षीत्। ततो युद्धाध्वन्यधुरंधरः सः उच्चैः क्रुद्धं युध्वानं वज्रमुखाभिधं तद्वप्रारक्षं सहैवावधीत्। वज्रमुखे हते सति तस्य कन्यका विद्याबलवती लंकासुंदरी कोपान्मारुतिं युद्धायाह्वास्त। व्योमनि तडिल्लेखेव मुहुर्हनुमन्तं प्रहरन्ती सानुमतीव सा चतुरं रणेऽचारीत्। तदस्त्राणि निजै रस्त्रैच्छिदानः पावनञ्जयि र्वीरुधं निष्पत्रामिव तामाशु निरस्त्रीचकार। ततः कामेन शिलीमुखै स्ताडिता सा एषः क इति साश्चर्यादाञ्जनेय मुदीक्षितुं संप्रवृत्ता। हे वीर! मया, पितृवधोत्थया क्रुद्धाऽविचार्य मुधैव हि योधितोऽसीति सा हनुमन्त मूचे। साधुना पूर्वमाख्यातमस्ति यस्ते जनकघातकः सैव ते भर्ता भविष्यति तेन हे नाथ! वशंवदां मामुद्वह। सकलेऽप्यस्मिंजगति तव समः कोऽन्यो भटोऽस्ति तत स्त्वया पत्या सता नारीष्वतिगर्विता स्थास्यामि। हनुमानप्येवं विनीतां तां कन्यां मुदितः सन् गान्दर्वेण विवाहेन सानुराग मुपायत। तदा व्योमाटवीपर्यटनश्रमात्स्नातुकाम इव त्विषामधिपति रपरवारिधौ ममज्ज। प्रतीचीगाशामुपभुज्य गच्छता भानुमालिना संध्याभ्रच्छद्मना तस्या वासांसीवापनिन्यिरे। अस्तकाले रविं त्यक्त्वा पृथग् स्थितं तेज इव वारुण्यां दिश्यभ्रपरंपरा चकाशे। नवरागोऽसौ मां हित्वा नवरागां वारुणीं सिषेवे इत्यपमानेन प्राची ध्रुवं म्लानास्याऽभूत्। तत्र क्रीडास्थानभुवां तासां परित्यागभुवा रुजा खगैः कोलाहलमिपादाक्रन्दो

ते पंथानः शिवाः सन्त्वित्युदित्वा ससैन्यो महेन्द्रो राघवान्तिकेऽगात् । अथ हनुमान्व्योम्ना गच्छन् दधिमुखाभिधे द्वीपे कायोत्सर्गे तस्थिवांसौ महामुनी प्रेक्षांचक्रे । तयोरनतिदूरे च तिस्रः कुमारिका, विद्यासाधनतत्परा ध्यानस्था निरवद्यांगी रपश्यत् । तदाऽखिलेऽपि द्वीपे दवानलः प्रजज्वाल तौ साधू ताः कुमार्यश्च दवसंकटे निपेतुः । हनुमान् तद्वात्सल्येन विद्यया सागरादानीय वारिभि मेंघ इव तं दवाग्निं शमयामास । तदैव सिद्धविद्या स्ताः कन्याः ध्यानस्थितौ तौ मुनी तु प्रदक्षीणीकृत्य हनुमन्तं बभाषिरे । हे परमार्हत ! यत्साधूनामुपसर्गमरक्षस्तत्साधु, त्वत्साहाय्येन हि कालं विनाऽपि नो विद्याः सिद्धाः । का यूयमिति तेनोक्तास्ताः कन्यकाः एवमब्रुवन्नस्मिन्दधिमुखे पुरे गन्धर्वराजो नाम राजाऽस्ति । वयं कुसुमालाकुक्षिसंभवास्तस्य कन्याः स्मः, अस्मांस्तु वहवः खेचरेश्वरास्तातं ययाचिरे । अंगारको नाम खेचरोऽस्मत्कृत उन्मत्तोऽभवत्, ततस्तस्मै न चान्यस्मै अरोचकीतातो न ददौ । मत्पुत्रीणां कः पतिः स्यादिति मुनिं पिताऽपृच्छत् यः साहसगते र्हन्ता सः पतिः स्यादिति सोऽवदत् । तद्गिरा तातोऽन्वेपयन् तं तु क्वचिदपि नोपलेभे, ततस्तंज्ञातुमस्माभि र्विद्यासाधनं प्रचक्रमे । अंगारकेण विद्याभ्रंशनिमित्तञ्च दवः कृतः भोस्त्वया निष्कारणबन्धुना च शमितः । या विद्या षड्भिर्मासैः सिध्यति सा मनोगामिनी नाम विद्या नः क्षणादपि सिद्धि माययौ । हनुमान् तासां रामेणनिर्मितं साहसगते र्वध मात्मनश्च लंकायां गतिश्चामूलाच्छशंस । तच्छ्रुत्वा मुदिता स्ताः पितुर्गत्वाऽशेषतः शशंसुः सोऽपि ससैन्यः सद्यस्ताभिः समं रघूद्वहमगात् । अथ हनुमानुत्पपात लंकायां गतश्च सन् कालनिशामिव घोरा

हनुमानप्येवमुवाच हे प्रभो ! ते आज्ञां विधाय लंकाया यावत्पुनरायामि तावदिहैव तिष्ठ । इत्युक्त्वा राघवं च
नत्वा सपरिच्छदो मारुतिरतिरंहसा विमानेन लंकापुरीं प्रत्यचालीत् । सः नभसा गच्छन् महेन्द्रगिरिसानुनि
मातामहमहेन्द्रस्य महेन्द्रपुरपत्तन मपश्यत् । हनुमानेवञ्च दध्यौ, ह्यदो महेन्द्रस्य पुरमस्ति येन मे माता निरप-
राधाऽपि तदा निर्वासिता । इति संस्मृत्य संक्रुद्धः सः दिङ्मुखप्रतिशब्दितै ब्रह्मांडं स्फोटयदिव रणतूर्यं प्रवाद-
यत् । इन्द्रविक्रमो राजा महेन्द्रोऽपि सपुत्रः परबल दृष्ट्वा रणकर्मणे सैन्यैः समं निरगमत् । व्योमन्युत्पातजीमू
त इवासृग्वृष्टि र्विभीषणो महेन्द्रहनुमच्चम्वो र्महारणोऽजायत । अथ प्राभंजनः प्रभंजो द्रुमानिव संगरे वेगेन
भ्रमन् क्षणेनाऽपि परसैन्यान्निर्वभंज । अथ महेन्द्रिः प्रसन्नकीतिर्जामेयसंबंधमविदन्नशंकं निघ्नन् हनुमता
सहायुध्यत । उभावपि महाबाहू उभावप्यत्यमर्षिणौ अन्योऽन्यं द्रढयुद्धेन श्रमंजनयामासतुः । अथ युध्यमानो-
ऽपि पावनिरेवमचिन्तयामास यन्मया स्वामिकार्यविलंबकृद्युद्धमारभि तद्धिक् । ये क्षणाज्जीयन्ते तेऽन्ये ह्यदो
मम मातृकुलं तथाप्यारब्धनिर्वाहकृते जेतव्यमेव हि । इति ध्यात्वा क्रुद्धो हनुमान् क्षणात्प्रहारै र्मोहयन् प्रमा-
स्त्ररथसारथिं प्रसन्नकीर्तिं जग्राह । मारुति र्भृशमायोध्य महेन्द्रमप्यग्रहीत्, नत्वा चैवं समाचख्यौ ते नप्ताऽञ्जना-
सुतोऽस्मीति । रामाज्ञया च वैदेहीशुद्ध्यै लकांव्रजन्नहमत्रायातश्चिरान्मातृनिर्वासनं समस्मार्षम् । हे तात !
जातामर्षेण योधितोऽसि तन्मे सहस्व, स्वामिकार्याय यास्यामि त्वमपि नः स्वामिसन्निधौ याहि । महेन्द्रोऽपि
महाभुजं तमालिङ्ग्येत्यूचे प्राक् जनश्रुत्या श्रुतोऽसि विक्रमी भवानद्य दिष्ट्या दृष्टः । स्वस्वामिकार्याय गच्छ,

स्ति। संदेशहारकेणाऽपि यदि प्रयोजनं सिध्येत् तदा भूभुजां स्वयमुद्योगकर्मणा पर्याप्तम्। तस्मात्तत्रकोऽपि महाभुजो दूतः प्रेष्यतां हि सा लंका क्षितौ दुःप्रवेशनिष्काषा श्रूयते। सः दूतो लंकायां गत्वा सीतार्पणकृते विभीषणं भणिष्यति, हि रक्षसां कुले सएव नीतिमानस्ति खलु। सोऽपि सीतां मोचयितुं रावणं बोधयिष्यति, रावणेन त्ववज्ञातस्तदैव त्वामेष्यति रामेण तेषामेवं वचस्यनुमते सति सुग्रीवोऽथ श्रीभूतिं प्रेष्य हनूमन्त माह्वत। अथ तेजसा भानुमानिव हनुमान् सभासीनं सुग्रीवादिसमावृतं रामं नमश्चकार ततः सुग्रीवो रामायैवं शशंस विनय्ययं हि पावनंजयि विंधुरे नः परमो वन्धुरस्ति। सर्वविद्याधरेष्वप्यस्यतुल्यो द्वितीयो नास्ति, तद्धे स्वामिन्! सीताप्रवृत्तिलाभार्थमेनमादिश। हनुमानप्येवमुवाच मत्प्रायाः कपयोऽनेकशः सन्ति परं तु सुग्रीवभूपति स्त्वेतत् स्नेहतो वक्ति। हे स्वामिन्! गवो, गवाक्षो, गवयः, शरभो, गंधमादनः नीलो द्विविद मैन्दौ जाम्ववानंगदो नलः, तदन्ये वहवोऽपि कपिपुंगवाः सन्ति अहमपि त्वत्कार्यसिद्धये तेषां संख्यापूरणोऽस्मि, सराक्षसद्वीपां लंकामुत्पाटयेहानये किम्? अथ सबान्धवं दशकंधरं बद्धवाऽऽनयामि किम्?। अथवा तत्रैव सकुटुंबं दशग्रीवं हत्वा निरुपद्रवां देवीं जनकजामेवात्र नयामि। रामोऽप्येवं निजगाद, त्वयि सर्वं संभवति, तल्लंकायां पुर्यां गच्छ सीतां च तत्र गवेषयेः। मदभिज्ञानमिमां मदूर्मिकां देव्या अर्पयेः, तस्याश्चूडामणिश्चात्राभिज्ञान समानयेः। इदं मद्वाचिकं शंसेः, यथा हे देवि! लक्ष्मणाग्रजस्त्वद्वियोगातुरोऽत्यन्तं त्वामेव ध्यायन् तिष्ठति। हे जीवितेश्वरि! मद्वियोगेन जीवितं मात्याक्षीः रावणश्चाचिराल्लक्ष्मणेन हतं द्रक्ष्यसि।

हा राम! वत्स सौमित्रे! भ्रात भौमंडल! सीतायां देव्यामिति रुदत्यां सत्यां दशमौलयेऽहमकुप्यम्। अथ तेन सीतोदन्तेन मुदितो रघुपुंगवः सुरसंगीतपुरेशं रत्नजटिनमाश्लिषत्। रघूद्वहो भूयो भूयोऽपि सीतोदन्तं पप्रच्छ, सोऽपि तन्मनःप्रीतिहेतवे भूयो भूयोऽप्याख्यत्। रामस्तान् सुग्रीवादीन्महाभटानपृच्छत् यथा तस्य रक्षसः सा पूर्लङ्का इतः कियति दूरेऽस्ति। तेऽप्यूचु रथ तया पुर्याऽऽसन्नयाऽथवा दविष्ठया किम्? यज्जगज्जिष्णो स्तस्याग्रे वयं सर्वे तृणवत् स्मः। रामोप्यूचे तस्य जय्याजय्यविचिन्तया कृतम् [1]दर्शनप्रतिभूवद् भवन्तो नः केवलं तं दर्शयत। दर्शितमात्रस्य सौमित्रिमुक्तनाराचपीयमानगलासृजस्तस्यसामर्थ्यमचिरात् ज्ञास्यथ। लक्ष्मणोऽप्येवं बभाषे ननु क एषो रावणो नाम। यः सारमेय इवासारच्छलेनैवं चकार। क्षत्राचारेणाहं छलिनस्तस्य शिरश्छेत्स्यामि, यूयं तु तत्संग्रामनाटकं सभ्यीभूयैव पश्यत। अथ जाम्ववान् व्याजहार वः सर्वं युज्यते परं यो हि कोटीशिलोत्पाटी सः रावणं हनिष्यति। ज्ञानवताऽनन्तवीर्येण साधुना ह्यद आख्यातमस्ति, तदस्मत्प्रत्ययहेतो स्तां शिलां समुत्पाटय। एवमस्त्वित्युक्तवन्तं लक्ष्मणं ते यत्र सा कोटिशिलाऽस्ति तत्र सपदि व्योमयानेन नयंति स्म। लक्ष्मणस्तां शिलांलतामिव दोष्णोच्चिक्षेप, तदा पुष्पवर्षिभिस्त्रिदशैः साधु साध्वित्युच्यमानोऽभवत्। संजातप्रत्ययास्तेऽपि पूर्ववद्व्योमयानेन लक्ष्मणं किष्किन्धायां समानिन्युः। ततः कपिवृद्धाः प्रोचु र्युष्मत्तो रावणक्षयो भविष्यति, परमादौ द्विषां समीपे दूतः प्रेष्य इति नीतिमतां नीतिर

१ दर्शने प्रतिभूवत् साक्षिवत्

माप। आयातं लक्ष्मणं श्रुत्वांऽतःपुराद्रुतं निर्गत्य भयाद् कंपमानवपुः कपिराज उपतस्थे। क्रुद्धो लक्ष्मणश्चोचे हे वानर! त्वं कृतकृत्योऽसि स्वान्तःपुरसमावृतः सुखं निःशंकं स्तिष्ठसि। तरुतलासीनः स्वामी अब्दसन्निभान् दिवसान्यथाऽत्येति तन्न वेत्सि, प्रतिपन्नश्च विस्मृतमस्ति। अधुनापि हि सीताप्रवृत्तिमानेतुमुत्तिष्ठस्व साहसगतेर्मार्गं मागमः सच मार्गः संकुचितो नास्ति। अथ सुग्रीवस्तस्य पादयोः पतित्वेत्यब्रवीत्, प्रसीद मे एकं प्रमादं सहस्व यतस्त्वं प्रभुरसि। कपीश्वर एवं सौमित्रि माराध्याग्रे च कृत्वा द्रुतं ययौ भक्तितो रामभद्रश्च नमश्चक्रे। स्वान्सैन्यानित्यादिशच्च भोः भोः सर्वेऽपि दोर्भृतो! यूयं सर्वत्राऽस्खलिताः स्थ तेन मैथिलीं गवेषयत। तेनेत्युक्तास्ते सैन्या द्वीपेष्वद्रिषु सिंधुषु भूमिरन्ध्रेष्वथान्यत्र च त्वरितत्वरितं ययुः। तदा सीताहरणमाकर्ण्य सः भामंडलोऽपि ह्यत्यंतदुःखित इवागमद्राममस्थाच्च। स्वामिव्यसनपीडितो विराधोऽपि चिरपत्तिवत् सैन्यैः सममेत्य शुश्रूषमाणस्तत्रैवास्थात्। स्वयं गच्छन् सुग्रीवोऽपि कंबुद्वीप मुपाययौ, रत्नजटी दूरात्तं दृष्ट्वाऽचिन्तयत्। दशमौलिना तन्ममागः संस्मृत्यायं महाबाहुर्वानरेश्वरः सुग्रीवो मद्वधाय प्रैषि किम्?। पुरा ताव न्महोजसा दशास्येन विद्या हृता, इदानीमेषो हरीश्वरो मे प्राणान् हरिष्यति। सुग्रीव इति चिन्तापरं तं द्रागगा दुवाच च, त्वं मां कथं नाभ्युदस्थाः व्योमयानेऽलसोऽसि किम्?। सोऽभ्यधाद्दशास्येन सर्वतो मे विद्या हृता अहं हि जानकीं हरतस्तस्य युद्ध उपस्थितः। ततश्च कपिकेतुना सः रामपादान्ते नीतः तेन विज्ञापितः सीतोदन्तमेवं व्यजिज्ञपत्। हे देव! नृशंसेन दुरात्मना लंकापुरीशेन देवी सती सीता, कुप्यतो मम विद्या च हृता।

हे हंसगामिनि ! अमूश्च केलिकुलिन्यः सहंसाः सन्ति । हे सुभ्रु ! स्वर्गखंडोपमान्येतानि रतिवेश्मानि सन्ति,
एषु यत्र तव रति स्तत्र मयासह रमस्व । जनकात्मजा तु हंसीव रामपादाब्जे ध्यायन्ती धैर्येण वसुंधरेव तद्गिरा-
नहि चुक्षोभ । दशाननः सर्वेषु रम्यस्थानेषु भ्रान्त्वा भ्रान्त्वा भूयोऽपिजानकी मशोकवनिकामध्ये मुमोच ।
अथ विभीषणो ज्येष्ठमुन्मत्तमिव वाचोयुक्तेरगोचरं प्रेक्ष्य मंत्रयितुं कुलामात्यानाहूत्रयत् । ऊचे च भोः कुला-
मात्याः ! एते कामाद्याह्यान्तरद्विषो भूता इव सन्ति, तेष्वेकोऽपि प्रमादिनमुन्मथ्नाति । स्वामी कामं कामा-
तुरोऽस्ति कामस्त्वेको हि दुर्जयोऽस्ति परनारीरिरंसयाकृतसाहाय्यः किं पुनः । तदतः परं लंकापुर्याः पति
र्दोष्मानपि द्रुतमत्यन्तं महति व्यसनार्णवे पतिष्यति । अथ ते मंत्रिणः प्रोचु र्वयं तु नाम्नैव मंत्रिणः स्मः,
त्वमेव मंत्र्यसि मंत्रात्तु यस्येदृक् दूरदर्शिताऽस्ति । प्रभौ कामवशंवदे सति, मिथ्यादृष्टौ जने जैनधर्मस्योपदेश-
नमिव परं मंत्रः किं करोति । ते सुग्रीवहनुमन्मुख्याश्च राघवं मिलिताः सन्ति, हि न्यायभाजां महात्मनां पक्षं
को नावलंबते । हि सीतानिमित्तो ज्ञान्युक्तो ह्यैक्ष्वाकान्नः कुलक्षयो भावी तथापि पुरुषाधीनं समयोचितं कर्तव्य-
म् । ततो विभीषणो वप्रे यंत्रादिरोपणं चक्रे हि मंत्रिणो मंत्रचक्षुषाऽनागतमपि पश्यन्ति । इतश्च विरहपीडितो
रामो सौमित्रिणाऽऽश्वास्यमानः कथमपि कमपि कालं प्रत्यवाहयत् । अथ रामेणानुशिष्य प्रेषितो लक्ष्मणः
स्वयं तूणचापकृपाणभृत् सुग्रीवं प्रति प्रतस्थे । सः पदन्यासैः क्ष्मां दलयन् तं च पर्वतं कम्पयन् वेगान्दोलि
तदोःस्पर्शान्मार्गवृक्षांश्चपातयन्नुत्कटभृकुटीभीमललाटोऽरुणलोचनो भीतै द्वाःस्थै र्मुक्तमार्गः सः सुग्रीववेश्म

तत्रैकदा मे देवरः क्रीडयेतस्ततो भ्रमन् खे एकं महासिं ददर्श कुतूहलाज्जग्राह च । सच तेनाऽसिनाऽभ्यर्णस्थां वंशजालीं चिच्छेद, अज्ञानाच्च तदन्तःस्थतत्साधकशिरोऽच्छिदत् । अयुध्यमानोऽनागस्कः कोऽप्ययं हा, मया-हत-इति सानुताप इव भ्रातुः समीपं स उपागमत् । तस्यासिसाधकस्यैवोत्तरसाधिका काचिन्मद्देवरस्यानुपदं तत्र कोपादुपागमत् । मम भर्तारं चाद्भुतरूपपुरंदरं दृष्ट्वा कामार्ता रन्तुकामाऽयाचीत् तां मत्पतिरवज्ञासीत्। अथ साऽगमत् तत उल्वणं रक्षसां वल मागमत्, युधि लक्ष्मणः क्ष्वेडां वैधुर्यसंकेतीकृत्यागात् । अथैपो दुराशो राक्षसो मायाक्ष्वेडां कृत्वा मत्पतिश्च दूरं नीत्वा स्ववधायैव मामहृत । तच्छ्रुत्वा रावणश्च नत्वा विभीषणो वभाषे हे स्वामिन् ! कुलस्य दूपणमिदं किं त्वया कृतमस्ति । सानुजः काकुत्स्थो नो हन्तुं यावदिह नायाति तावदा-श्वेव नीत्वा सीता तदन्तिके मुच्यताम् । इत्युक्ते क्रोधारुणाक्षो रावणोऽपीत्यब्रवीत् हे भीरो ! किमिदं भाषसे मम पौरुषं व्यस्मार्षीत् किम् ! । अनुनीता सीताऽवश्यं मम भार्या भविष्यति, तौ चायातौ वराकौ रामलक्ष्म-णौ हनिष्यामि । विभीपण ऊचे हे भ्रातः ! तज्ज्ञानिनो वचः सत्यम् यद्रामपत्न्याः सोतायाः कृते नः कुल-संक्षय इति । भक्तस्य वंधोश्च मम वाचं कथं न मन्यसे अन्यथा मया हतः सः दशरथस्तावत्कथं जीवितः । हे महाभुज ! यद्वस्तु भावि यद्यपि तदन्यथा न भावि तथापि मार्थ्यसे नः कुलघातीनीं सीतां मुंचेति । अथ विभीपणगिरामनाकर्णितकेनेव सीतां पुष्पक आरोप्य भ्रमन्नेव मदर्शयत् । अमी रत्नसानवः क्रीडाद्रयः स्वादु निर्झराः सन्ति, अमून्युपवनानिच नंदनोद्यानसोदर्याणि सन्ति । अमूनि धारावेश्मानि यथाकामीनवृष्टीनि,

अहो युक्तं लोकोऽन्यस्त्रीषु रिरंसुररत्यपरा च दूतीभवति । हे मुग्धे ! द्रष्टुमप्युचिता नासि संभाषितुं तु किंतु,
इतः स्थानाद्दूरं गच्छ गच्छ मम दृष्टिपथं त्यज । तदा रावणोऽपि तत्राजगाम निजगाद च हे सीते ! कुतः कुपिता-
ऽसि, मन्दोदरी तव दास्यस्ति । अहं स्वयमपि ते दासोऽस्मि, हे देवि ! मे प्रसादं कुरु, हे जानकि ! अमुं-
जनं दृशाऽपि किं न प्रीणासि । तदा महासती सीता पराङ्मुखीभूयेत्यभाषत, मां रामगेहिनीं इच्छन् कृतांत-
दृष्ट्या दृष्टोऽसि । रे ! अप्रार्थितप्रार्थकस्य ते आशां धिक्, द्विपदन्तके सानुजे रामे कियज्जीविष्यसि । तये-
त्याक्रुश्यमानोऽपि दशाननो भूयो भूयस्तथैवोवाच, अहो ! बलीयसी कामावस्था धिक् । अत्रान्तरे विपनमां
सीतां द्रष्टुमक्षम इव धाम्नां निधिः पश्चिमे लवणाम्बुधौ निममज्ज । घोरा निशा प्रावर्तत घोरबुद्धी रावणश्च
क्रोधकामान्धश्च सन् सीतायामुपसर्गान् प्रचक्रमे । ततो रावणेन विकृता भयंकरा फूत्कारिणो महाघूकाः
फेत्कुर्वाणाश्च फेरवो विचित्रं क्रन्दन्तो वृका अन्योऽन्ययोधिन ओतवः पुच्छाच्छोटकृतो व्याघ्राः फूत्कुर्वाणाः
फणाभृतः पिशाचप्रेतवेतालभूताश्चात्तकर्त्रिकाः दुर्ललिताः यमस्य सभासद इवोल्लसन्तो उपसीतमीयुः । सीता
तु मनसा पञ्चपरमेष्ठिनमस्क्रियां ध्यायन्ती, अभीतैव तस्थौ दशाननं तु न भेजे । प्रभाते तु विभीषण स्तन्निशा-
वृत्तं निशम्योपदशग्रीवमागात् सीतां चैवमवोचत । हे भद्रे ! त्वं कासि कस्याऽसि कुतः स्थानादत्रागतासि मा
भैषीः परस्त्रीसोदरस्य मे सर्वमाख्याहि । सीताऽपि तं मध्यस्थं परिज्ञायाधोमुखी सती भामंडलस्वसा जनक-
पुत्र्यहं सीता स्मीत्याख्यत् । रामभद्रस्य गृहिणी दशरथस्य स्नुषाऽहं सानुजेन पत्या समं दंडकारण्यमागमम् ।

इतश्च लंकायां पुर्यां मंदोदर्यादयो रावणान्तःपुरस्त्रियः खरादिहननोदन्तादरुदन् । चन्द्रणखाऽपि च स्वसा सुन्देन सह रुदती पाणिभ्यामुरः कुट्टयंती रावणगृहं माविशत् । रावणञ्च दृष्ट्वा कंठे लगित्वोच्चतरस्वरं रुदती हा दैवेन निहतास्मीत्येवं निजगाद । हे वंधो ! त्वयि जीवत्यपि दर्पवद्भि र्विद्विपद्भिः पुत्रो हतो भर्त्ता च हतो मम देवरौ च हतौ चतुर्दश सहस्राणि कुलपत्तयश्च हताः पातालंलंका त्वदर्पिता राजधानी चाच्छिन्ना सुन्देन सूनुना सहाहं जीवग्राहं मणश्य त्वां शरण्यमिहायातास्मि मां शाधि कुत्र तिष्ठामि । ससौष्ठवो दशास्योऽपि त्वद्भर्तृपुत्रहन्तार मचिराद्धनिष्यामीति रुदन्तीं तामबोधयत् । सः रावण स्तेन शोकेन वैदेहीविप्रलंभरुजाऽपि च फालच्युतो द्विपीव तल्पे तस्थौ । अथ मंदोदरी देवी तमुपेत्येत्यभ्यधात् हे स्वामिन् ! माकृतवन्निश्चेष्ट इव कथं तिष्ठसि । रावणोऽप्येवमब्रवीत् वैदेहीविरहज्वरान्नचेष्टितुं नच वक्तुं नाप्यालोकयितुं क्षमोऽस्मि । हे मानिनि ! मया जीवता तेऽर्थश्चेत्तन्मानं मोज्झ्य यथा मयि रिरंसते तथा गत्वा वैदेही मनुनय । अनिच्छन्तीमन्यनारीं जातुचिदप्यहं न भुंजे, इति गुरुसाक्षिको ममाऽत्रार्गलानियमोऽस्ति । पत्युः पीडया पीडिता सा कुलीनाऽपि तत्क्षणं देवरमणोद्याने जगाम सीतामुवाच च । एषा मंदोदरीनामाहं दशाननमहिषी त्वयि दासीत्वं मपत्स्ये, दशकन्धरं भजस्व । हे सीते ! त्वमेव धन्यासि यामनिशं विश्वसेव्यांघ्रिकमलो महाबलो मम पतिः सिसेविषते । दशाननः माप्यते चेदद्यापि भूचरेण तपस्विना पत्तिमात्रेण रामेण पत्या तव किं माप्यते । सीता रुषैव बभाषे क्व सिंहः, क्व च जंबुकः, क्व सुपर्णः, क्व वा काकः, क्व रामः, क्व च ते पतिः । तव पाप्मनस्तस्य च दंपतीत्व-

राम
स·

॥

शरणम् । स्वयं दुःख्यपि रामस्तद्दुखं छेत्तुमभ्युपागमत्, महीयसां परकार्यं स्वकार्यादधिको यत्नः कार्यः । अथ कृतांजलिः सुग्रीवो विराधेन सीताहरणवृत्तान्तमवबोधितो रामं विज्ञापयामास । रवेरिव विश्वं त्रायमाणस्य तथा द्योतयतस्ते काऽपि कारणापेक्षा नास्ति तथापि हे देव ! अदो वच्मि । त्वत्प्रसादात् क्षतारिः सन् ससैन्योऽपि तवानुगोऽहं न चिरात् सीतायाः प्रवृत्तिमानेष्यामि । अथ राघवः ससुग्रीवः किष्किन्धां प्रति प्रतस्थे, अनुगच्छन्तं विराधं च संबोध्य विससर्ज । अथ रामभद्रे किष्किन्धापुरद्वारमधिष्ठिते सति सुग्रीवो विटसुग्रीवं रणकर्मण आह्वास्त । विटसुग्रीवोऽपि निनदन्नाह्वानमात्रतो रणायागात्, हि द्विजा भोजनायेव शूरा रणाय अलसा न भवन्ति । तावुभावपि मत्तौ वनद्विपाविव दुर्धरै रणन्यासैश्च वसुंधरां कम्पयन्तावयुध्येताम् । रामस्तौ सरूपौ दृष्ट्वाऽस्मदीयः कः परश्च क इति संशयतः क्षणमुदासीन इव तस्थौ । एवं तावन्द्ववत्त्विति विमृशन्रघुपुंगवस्ततो वज्रावर्ताभिधधनुष्टंकारमकरोत् । तस्माद्धनुष्टंकारतः साहसगतेः सा रूपान्तरकरी विद्या क्षणाद्धरिणीव पलायत । हे पाप ! मायया सर्वं विमोह्य परदारै रिरंससे तस्माच्चापमारोपयेति रामस्तं ततर्ज । रघूद्वह एकेनापीषुणा तस्य प्राणानहार्षीत् हि हरिणमारणे हरे द्वितीया चपेटा न भवति ततो रामो विराधमिव सुग्रीवं राज्ये न्यवेशयत् सुग्रीवोऽपि प्राग्वदेव स्वलोकेनानमस्यत । अथ प्राञ्जलि र्वानरेश्वरोऽत्यन्तसुदरीः त्रयोदश निजाः कन्या दातुं रामभद्रमयाचिष्ट । रामोऽपि सीतान्वेषणहेतवे सुग्रीव मुवाच प्रयतस्वेति, एताभिः किमपरेणाऽपि वस्तुना किम् ? इत्युक्त्वा रघूद्वहो वहिरुद्याने गत्वा तस्थौ सुग्रीवोऽपि तदादेशान्निजां पुरीं प्रविवेश ।

त्त्वा परमं पदं जगाम मे कुमारश्चन्द्ररश्मिरसौ जगतोऽपि बलीयानस्ति किन्तुद्वयो रभेदज्ञः कं रक्षतु कं च निहन्तु । अहो चन्द्ररश्मिना तस्य पापीयसो यच्छुद्धान्तप्रवेशनं रुद्ध मिदं तु साधु साधु विदधे । अमुष्य बलिनो वधाय कं बलीयांसं श्रयामि, यद्विपत्रः स्वतोऽपि परतोऽपि वा घात्या एव । भूर्भुवःस्वस्त्रयीवीरं मरुत्तमख भंजनं दशाननं विद्विपद्धातहेतवे भजामि किम् ? किन्त्वसौ त्रैलोक्यकंटकः प्रकृत्या लोलोऽस्ति तेन तं च मां चा शु निहत्य स्वयं तारामादास्यते ईदृशे व्यसने प्राप्ते सति साहाय्यं कर्तुं खरतरः खर आसीत् स तु राघवेण हतः ।

तद्गत्वा तावेव रामसौमित्री मित्रीकरोमि, हि तौ तत्कालोपनतस्यापि विराधस्य राज्यदौ स्तः । अलंकर्मीणदोर्वलौ तौ तु विराधस्योपरोधेनाऽधुनाऽपि तथैव पाताललंकायां तिष्ठतः । सुग्रीव एवं विमृश्य रहसि स्वय मनुशिष्य विश्वासभूतं दूतं विराधपुर्यां न्ययोजयत् । सः पाताललंकायां गत्वा विराधाय प्रणम्य स्वामिव्यसनवृत्तान्तं कथयित्वेदमब्रवीत् । नः स्वामीदृशे महति व्यसने पतितोऽस्ति ततस्त्वद्द्वारेण राघवौ शरणीकर्तुं वांछति । सुग्रीवो द्रुत मायातु हि सतां संगः पुण्यतो भवति तेनेत्युक्तो दूत एत्य सुग्रीवाय तच्छशंस । अथ सुग्रीवोऽश्वानां ग्रैवेयकस्वनैः सर्वा दिशो मुखरयन् वेगाद्दूरमदूरयन् सः पातालंकामुपवेशमवत् क्षणेन प्राप । विराधमुपतस्थे च सोऽपि तं मुदाऽभ्युत्तस्थौ । विराधोऽपि तायिने रामभद्राय पुरोभूय तं नमस्कारयामास तद्दुःखञ्च व्यजिज्ञपत् । सुग्रीवोऽप्येवमूचेऽस्मिन्दुःखे त्वमेव मे गतिरसि क्षुते हि सर्वथा मूढे तरणिः खलु

राम
स

॥

कुर्वद् युद्धं भवत्तते । सादिना सादी निपादिना निपादी पदातिना पदातिश्च रथिकेन रथिकश्च युयुधे । अथ मेदिनी चतुरंगचमूचक्रविमर्दात्प्रोढप्रियसमागमान्मुग्धेव कंपमवाप । हे परगृहप्रवेशिन्नेह्येहीति तं ब्रुवन्सुग्रीव उद्ग्रीवः सन्विटसुग्रीवं योध्धु माह्वत । ततश्च विटसुग्रीवस्तर्जितो मत्तेभइवोर्जितं गर्जितं कुर्वन्युधे संमुखीनोऽभवत् क्रोधारुणलोचनौ तौ महायोधौ कीनाशस्य सोदराविव जगत्त्रासं विदधानौ युयुधाते । अथ रणच्छेकावुभावपि तौ मिथो निशितैः शस्त्रै र्निशितानि शस्त्राणि तृणच्छेदं चिच्छिदाते । महीपयो र्महायुद्धे वृक्षखंड इव तयो र्महायुद्धे उच्छलद्भिः शस्त्रखंडैः खेचरीगणो दुद्रुवे । अथामर्षशिरोमणी तौ छिन्नास्त्रौ जगमौ पर्वताविवान्योन्यं मल्लयुद्धेनास्फलताम् । वीरचूडामणी तावुभौ क्षणादूव्वोम्न्युत्पतन्तौ क्षणाच्च भुवि निपतन्तौ ताम्रचूडाविवा भाताम् तौ द्वावपि महाप्राणौ मिथो जेतु मनीश्वरौ अपसृत्य च वृषभाविव दूरेण तस्थतुः । ततः सुग्रीवः साहाय्यकार्थमंजनासुतं समाहूय भूयोऽप्युग्रकर्मणा मायासुग्रीवेण युयुधे । द्वयो र्भेदमजानतो हनूमतः पश्यतः सतः उत्कटो विटसुग्रीवः सुग्रीवं कुट्टयामास । पुनर्युद्धेन खिन्नतनुः सुग्रीवः खिन्न रततः किष्किन्धपुराद् वहि र्निर्गत्यावास मग्रहीत् । विटसुग्रीवस्त्वस्वस्थमानस स्तत्रैव तस्थौ वालिनंदनादन्तःपुरप्रवेशं च न लेभे । अथसुग्रीवो न्यंचितग्रीवमेवं पर्यचिन्तयदहो ! स्त्रीलंपटः कूटपटु र्नः कोऽप्येषो द्विषन्नस्ति अहो ! आत्मीया अपि द्विषन्मायावशीकृताः सन्तोऽनात्मीया वभूवु स्तदसौ निजैर्हयैरेवावस्कंदः । मया मायापराक्रमोत्कृष्टो द्विषन् कथं वध्यः, वालिनास्त्रस्त्रपाकरं पराक्रमभ्रष्टं मां धिक् । महावलो वाली धन्यो योऽखंडपुरुषव्रतो राज्यं तृणमिव त्य-

वाऽपरश्च कः विराधोऽपि नत्वाऽवदत् हे प्रभो ! निर्वेदं मा कृथाःअनिर्वेदःश्रियोमूलमस्ति नन्वहं तव भृत्योऽस्मि। अद्य मां पाताललंकायां निवेशयितुमेहि तत्र भर्तुः सीताप्रवृत्तिः सुलभा भविष्यति । ततःसलक्ष्मणो रामः स-सैन्येन विराधेन सह पाताललंकायाः पुर्याःपरिसरावनौ ययौ। तत्र महासैन्यसमावृतोऽरिसूदनः सुन्दोनाम खरात्मजो रक्षः संमुखीनो रणायागात्। सुन्दः पितृवधक्रुधा पूर्वविरोधिना पुरोगेण विराधेन समं सद्यो घोरं रणं चक्रे। अथ काकुत्स्थे रणस्थे सति चन्द्रणखागिरा सुन्दः सद्यः प्रणश्य लंकायां रावणं शरणं ययौ । ततो रघुपुंगवौ पाताललंकायां प्रविश्य तं विराधं पैतृके पदे निवेशयामासतुः। रामलक्ष्मणौ खरराजस्य प्रासादे तस्थतुः। विराधः पुनः सुन्दवेश्मनि युवराज इव तस्थौ ।

इतश्च चिरं ताराभिलाषिणः साहसगते हिंमवद्गिरिकंदरे प्रतारणी विद्या सिद्धा। कामरूपोऽमर इव तया सुग्रीवरूपः सः अंवरे द्वितीयोऽर्क इव किष्किन्धपुरे जगाम । सुग्रीवे च क्रीडार्थं वहिरुद्याने गते सति तदा सः तारादेवीविभूपितं तदन्तःपुर मगात् । ततः सत्यसुग्रीव आगात् तदा द्वारि चाग्रे सुग्रीवो राजा गत इतिवादिभि र्द्वारपालकैः स्खलितः । सुग्रीवद्वितयं दृष्ट्वा संदेहाद्वालिनंदन स्त्वरितः शुद्धान्तविप्लवं त्रातुं तद्द्वारं ययौ । ततः शुद्धान्ते प्रविशन् विटसुग्रीवो वालिसूनुना मार्गाद्रिणा सरित्पूर इव प्रस्खलितः । अथ जगत्सार-सर्वस्वानीव सर्वत आहूतानि सैनिकानाश्चतुर्दशाक्षौहिण्योऽमिलन् । अथ तयोर्द्वयोरपि भेद मजानन्तः सैनिका अर्धं सत्यसुग्रीवतोऽर्धं च विटसुग्रीवतोऽभवन् । तत उभयोरपि सैन्ययोः कुंतपालैर्दिवमुल्कापातमयीमिव

ततो विराधेन सार्धं रामसोदरःस्फुरद्वामेक्षणः काममार्ययोः शुभमाशंसन् ववले। गत्वा दूरं द्रुमान्तरे रामभद्रम- पश्यत् सीताविरहितं दृष्ट्वा परमं विषादं ययौ। पुरःस्थमपि सौमित्रिमपश्यन् रघुपुंगवः सीताविरहशल्येन पीडितः स इत्यब्रवीत्। मया तावदिदं वनं भ्रान्तं जानकी न दृष्टा, हे वनदेवताः! युष्माभिरपि किं सा न दृष्टा ब्रूत। भूतश्वा- पदसंकुलेऽमुष्मिन् भीषणेऽरण्ये सीतामेकाकिनीं विमुच्य हा लक्ष्मणाय गतोऽस्मि। लक्ष्मणंच रक्षोभटसहस्राग्रे संयत्येकं मुक्त्वा भूयोऽहमत्रागामहोदुर्धियो मम धीः पश्यत। हा सीते! प्रिये! निर्जनेऽरण्ये मया कथं मुक्तासि, हा वत्स! लक्ष्मण! रणसंकटे कथंमुक्तोऽसि। एवं ब्रुवन् क्रन्दद्भिः पक्षिभिरपि वीक्ष्यमाणो महाभुजो रामभद्रो मूर्छया क्षितौ न्यपतत्। लक्ष्मणोऽप्येवमब्रवीदार्यायेदं किं ननु, अयं तव भ्राता लक्ष्मणोऽरीन् जित्वा समुपा- स्थितोऽस्ति। तया गिरा पीयूषेणेव संसिक्तोः रामभद्रो लब्धसंज्ञोऽग्रे निजानुजं ददर्श सस्वजे च। उदश्रुः सौमित्रिः सिंहनादस्य कारणमूचे, इदं जानकीहरणं कस्याऽपि मायिनः कर्माऽस्ति। अहं तस्य प्राणैः सह जानकीमाहरि- ष्यामि। संप्रति तु तत्प्रवृत्त्युपलंभाय प्रयतामहे। एषो विराधः पाताललंकाराज्ये स्थाप्यताम् हि मया खराहवेऽ- मुष्मै प्रतिपन्नमस्ति। अथ तौ प्रभू आरिराधयिषु र्विराधः सीताप्रवृत्तिमानेतुं विद्याधरमहान् प्रजिघाय। मुहुर्मुहुर्निःश्वसन्तौ क्रुधाअधरं निर्दशन्तौ शोकानलकरालितौ काकुत्स्थौ तत्र तस्थतुः। विराधमहिताश्च ते विद्या- धरा दूरं भ्रान्त्वा सीताप्रवृत्तिं न प्रापुस्तत्रैत्य चाधोमुखास्तस्थुश्च। रामस्तेषामधोमुखत्वेन ज्ञात्वेदमब्रवीत्, युष्मा- भिः स्वामिकार्यं साधूद्यतम्। हे भटाः! सीताप्रवृत्तिर्नप्राप्तातत्र वः को दोषो दैवस्य विपरीतस्य के यूयमथ-

समाययौ । आरिराधयिषु र्विराधो रामसोदरं नत्वा एतेषां त्वद्द्विषांद्विषन्नहंतवभृत्योऽस्मीत्यूचे । हे महाभुज ! अमी रावणपत्तयश्चन्द्रोदराख्यं मे पितरं निर्वास्य पाताललंकां जगृहुः। अंशो स्तमोध्वश इव द्विषद्विदलने ते कः सखा तथापि हे प्रभो ! भृत्यलेशत्वाद्रणाय मामादिश । स्मित्वाच लक्ष्मणोऽवोचत् यन्मयाहन्यमानानमून्द्विषः पश्य हि दोष्मतामन्यसाहाय्याद्विजयो ह्रियै भवति । अद्य प्रभृति मे ज्येष्ठो रघूद्वहस्ते स्वामी, मया चाद्यप्रभृति पाताललंकाराज्ये त्वं स्थापितोऽसि। स्वं विरोधिनं तं विराधं लक्ष्मणान्तिके दृष्ट्वाऽधिकं क्रुद्धःखरोऽधिज्यधन्वाऽभ्येत्येवमब्रवीत् । विश्वघातक ! मम तनयः शंबूकः क्वास्ते वराकेण विराधेन सख्याऽधुना किं रक्ष्यसे। सौमित्रिश्चस्मित्वोवाच तेऽनुजस्त्रिशिरा अपि भ्रातुःपुत्रस्य सोत्कंठो मयाधुना तमनुप्रेपितोऽस्ति। तवापि पुत्रे भ्रातरि च वलीयसी चेदुत्कंठा तर्हि त्वामपि तत्र नेतुं ननु सज्यधनुरेवास्मि। हे मूढ ! मया प्रमादघातेन पादन्यासेन कुंथुवत् तत्र सूनुर्हतोऽस्ति तत्र मे पौरुषं नास्ति। अधुना भटंमन्यस्त्वं मम कौतुकं पूरयसि चेत्तर्हि वनवासेऽप्यहं सत्री त्वया कीनाशं प्रीणामि। सौमित्रावित्युक्तवतिसत्यमित्रःखरोराक्षसेश्वरो दन्ती गिरिसानुनीव खरंप्रहर्तुमारेभे। लक्ष्मणोऽपि क्षणेनाऽपि सहस्रशःकंकपत्रै र्भानुमान् भानुभिरिवाम्बरं तिरयामास । तयोः श्राद्धदेवदैवतैक महोत्सवो गरीयान् भयंकरश्च खेचराणां संगरोऽजायत । विष्णुना रणे यस्येदृक्शक्तिरस्ति सःखरः प्रतिविष्णोरप्यधिकोऽस्तीति व्योमन्येवंगिरोऽभवन् । अस्याऽपि वधे कालक्षेप इत्यमर्षाल्लज्जितः सौमितिः स्वयं क्षणात् क्षुरप्रेण खरमूर्धानमच्छिदत् । ततः ससैन्यो दूषणो योध्धुमुद्यतः स च दववह्निना सयूथः कुंजर इव लक्ष्मणेनापि संजह्रे ।

# अथ षष्ठः सर्गः

इतश्च यत्रामितैः सह सौमित्री रणकेलिकृदभूत् तत्रचापभृद्रामस्त्वरितं संप्राप्तः। आयान्तं राममालोक्य सौमित्रि रिदमब्रवीध्धे आर्य ! आर्यामेकाकिनीं मुक्त्वा त्वं किमागमः। हे लक्ष्मण ! तव वैधुर्यलक्ष्मणा सिंहनादेनाहूतोऽहमिहायात इति राघवो व्याजहार। लक्ष्मणोऽप्यवदत् हे आर्य ! मयासिंहनादो नाकारि, आर्येणचश्रुतस्तेन नूनं वयं केनापि वंचिताः स्मः। आर्यामपहर्तुं केनापि दुष्टेनोपायतस्त्वमपनीतोऽसीति शंके, सिंहनादस्य करणे स्तोकमपि कारणं नास्ति। हे आर्य ! महाभुज ! आर्यां त्रातुं तच्छीघ्रमेव गच्छ, एषोऽहमप्यरीन्हत्वा यावत्पृष्टत एवायामि। इत्युक्तो रामभद्रःस्वस्थानमगात् तत्रच जानकीं नापश्यच्च तेन मूर्छितो महीपृष्ठे च निपपात। लब्धसंज्ञःसमुत्थाय मुमूर्षुं तं जटायुपमीक्षांचक्रे तेन तीक्ष्णधी राम इति दध्यौ। केनापि छलपरेण मे दयितापजहे. तेनैव नूनं चापहारक्रुध्धोऽयं महात्मा खगश्च निहतः। ततो रामः श्रावकस्य जटायुषः प्रत्युपकाराय परलोकाध्वशंवलं नमस्कारं ददौ। सो विपद्य माहेन्द्रे कल्पे प्रवरः सुरोऽभवत्, रामोऽपि सीतामन्वेष्टुमितस्ततोऽटव्यामाट। इतश्च वीरो लक्ष्मणः प्राज्यपत्तिना खरेण योध्धुमेकोऽपि प्रावर्तत युधि सिंहस्य कोऽपि सखा न भवति। अत्रान्तरे खरस्यावरजो भट स्त्रिशिरा अस्मिंस्तवाक्षेपः को नाम इति ज्येष्ठं न्यवारयत्। अथ रामावरज स्तंपतंगवद्रणयन् समरोद्यतं रथस्थं त्रिशिरोराक्षसं जघान। तदा पाताललंकेशचन्द्रोदरनृपात्मजो विराधः सर्वसन्नाहिसैन्यस्तत्र

पक्षीव सः हृतविद्यः पपात कंबुद्वीपे कंबुशैल मारुह्य च समवास्थित । विमानस्थो रावणोऽपि व्योम्नाऽर्णवोपरि गच्छन् मन्मथातुरो मैथीलीं भति सानुनयमिति मोचे। हे सिते ! नभश्चरक्ष्माचराणां भर्त्तुर्मे महिषीपदं भाप्तासि, कथं रोदिषि हर्षस्थाने शुचा कृतम् । मंदभाग्येन रामेण सह त्वां योजयन्विधिः पुरा नानुरूपं चक्रे तदधुना मयोचितमकारि । हे देवि ! सेवया दाससंनिभं मां पतिं मन्यस्व मयि दासे सति खेचर्यः खेचरा अपि तव दासा एव । रावणे त्वेवं ब्रुवाणे सति सीता मंत्रवद्राम इत्यक्षरद्वयं स्मरन्त्यधोमुखी तस्थौ । स्मरातुरः सः जानकीपादयो मूर्घ्रा पपात परपुंस्पर्शकातरा साऽपि पादावपासारयत् । सीता चैव मा।चुक्रोश, हे निरनुक्रोश, निस्त्रप, अचिरात्परस्त्रीकामनाफलं मृत्युं लप्स्यसे । तदानीं सारणादयो मंत्रिणः, अन्ये च रक्षःसामंताः राक्षसभभोः संमुखा एयुः। महासाहसकृदलंकर्मीणविक्रमो महोत्साहो रावणो लंकांपुरी मागमत् । यावद्रामसौमित्रि-क्षेमोदन्तसमागमो न, तावन्न भोक्ष्ये इति सीतोच्चैरभिग्रह माददे ।

लंकापूर्वदिशि स्थिते सुरवरोद्यानोपमे खेचरस्त्रीणां विभ्रमधाम्नि देवरमणोद्याने स्वयं जानकीम् ।
रक्ताशोकतरोस्तले त्रिजटया चाऽरक्षकै राहृतां मुक्त्वागाद्दशकंधरः प्रमुदितः स्वं धाम धाम्नां निधिः ॥४६०॥

इत्याचार्य श्री हेमचन्द्रविरचिते त्रिपष्ठि शलाकापुरुषचरिते महाकाव्येऽन्वयात्मक गद्यरचनायां सीता हरणं नाम पञ्चमः सर्गः समाप्तः ॥ ५ ॥

तेनोक्ता सा ततः परतो व्रजित्वा साक्षात्सौमित्रिरिव सिंहनादं विनिर्ममे। तं सिंहनादं श्रुत्वा रामः ससंभ्रमः सन्दध्यौ मे अनुजो हस्तिमल्ल इव जगत्यप्रतिमल्लोऽस्ति। तं न पश्यामि येन सौमित्रिः संकटं प्राप्नोति, तस्य संकटसंकेतक्ष्वेडा तत्रैव निशम्यते। महामना रामो यावदेवं वितर्कव्यग्रोऽभूत्तावल्लक्ष्मणवात्सल्यात्सीता चैव मवोचत। हे आर्यपुत्र! वत्से संकटमागते सति अद्यापि किं विलंबसे द्रुतं गत्वा लक्ष्मणं ननु त्रायस्व। इत्यादि सीतावचनैः सिंहनादेन चेरितो रामः शकुनान्यप्यमानयन्त्वरितं जगाम। अथ दशग्रीव उत्तीर्य पुष्पकाभिधे विमाने क्रदंतीं जनकात्मजा मारोपयितु मारेभे। हे स्वामिनि! एषोऽस्मि मा भैषीः, हे निशाचर! तिष्ठ तिष्ठ इति रोषाद्वदन् जटायु दूरात्तमधावत। ततः सः महाखगो निशिताभिस्त्रोटिनखकोटिभिः सीरैः कृषिमही-मिव रावणस्योरश्चकर्ष। ततः क्रुद्धो दशग्रीवो दारुणं खड्गमारोप्य पक्षौ छित्वा तं पतंगं पृथिवीतलेऽपातयत् अथ निःशंको दशग्रीवः पुष्पके सीतामारोप्य पूर्णप्रायमनोरथः सन्नभसा तूर्णं चचाल। विद्विषन्माथ! हा नाथ! हा राम! हा वत्स लक्ष्मण! हा तातपादाः! हा भ्रात भामंडल! महाभुज। काकेन बलिरिव छला-दनेन वः सीता ह्रियते, एवं रोदसीं रोदयन्तीव सीतोच्चै रुरोद। तद्रुदितं श्रुत्वा अर्कजटिनंदनो रत्नजटी खेचर एवं विममर्श नूनमसौ रामस्य पत्न्यस्ति। येनाऽयं शब्दः समुद्रोपरि श्रूयते तेत्तेयं रावणेन ह्रियते राम-लक्ष्मणौ च छलितौ स्तः। तेनाद्य प्रभो भामंडलस्योपकरोमीति जातधीः सः खड्गमाकृष्य दशकंधरमाक्षिपन् दधावे। एषो दशाननस्तु युद्धायाह्वयमानं तं हसित्वा विद्यासामर्थ्यतोऽखिलां तद्विद्यां सद्यो जहार। निकृत्तपक्षः

दंडकारण्य आयाता वनातमज्ञौ रामलक्ष्मणौ मनुष्यौ ते जामेयं यमगोचरं
स्वसा त्वरितं गत्वा रावण मित्यूचे। दंडकारण्य आयाता वनातमज्ञौ रामलक्ष्मणौ मनुष्यौ ते जामेयं यमगोचरं युध्यमानोऽस्ति। कनिष्ठ-
निन्यतुः। तच्छ्रुत्वा ते स्वसृपतिः सबलः सानुजो ययौ, तत्र च संप्रति सौमित्रिणा सार्धं युध्यमानोऽस्ति। कनिष्ठ-
भ्रातृवीर्येण स्ववीर्येण च गर्वितो रामः सीतयासह विलसन्परतः स्थितोऽस्ति॥ सीता च रूपलावण्यश्रिया
योषितां सीमेव वर्तते न देवी नोरगी किन्तु सा काप्यन्यैव मानुष्यस्ति॥ दासीकृताशेषसुरासुरवधूजनं त्रैलो-
क्येऽप्यप्रतिच्छन्दं तस्या रूपं वाचामगोचरमस्ति। [1]आसमुद्रसमुद्राङ्ग हे बान्धव! भूतले यानि कान्यपि
रत्नानि सन्ति तानि सर्वाणि तवैवार्हन्ति। रूपसंपदा दृशामनिमिषीकारकारणमेतत्स्त्रीरत्नं चेन्न गृण्हीया
स्तर्हि त्वं रावणो नासि। अथ दशकन्धरः पुष्पकमारुह्य हे विमानराज! यत्र जानक्यस्ति तत्र त्वरितं याहीति
आदिदेश। तत्र गच्छतो दशग्रीवमनसः स्पर्धयेव विमानं चात्यन्तवेगेनानुजानकि ययौ। दशकंधरो दृष्ट्वाप्यत्युग्र
तेजसो रामात् हुतवहाद्व्याघ्र इव बिभाय दूरे तस्थौ। इति चाऽचिन्तयदितःकष्टं यद्रामोदुरासदो दृश्यते, इतश्च
सीताहरणं कार्यं तेनेतो व्याघ्र इतस्तटी। इति च विमृश्य ततोऽवलोकनीं विद्यामस्मार्षीत् सा च मंक्षु किंकरीव
कृतांजलिः सती उपतस्थे। ततश्च दशाननस्तत्कालं तामाज्ञापयामास सीतां हरिष्यतो ममान्हाय साहाय्यं
कुर्विति। साऽवोचद् वासुके मौलिरत्नं सुखमादीयते परंतु रामसमीपस्था सीता तु देवासुरैरपि नादीयते
किन्त्वसावुपायोऽस्ति येनैष रामो लक्ष्मणं यायात् ह्यनयो र्यं तस्यैव सिंहनादेन संकेतोऽस्ति। एवं कुर्विति

[1] समुद्र पर्यन्तं मुद्रयासहिता आज्ञा यस्य तत्सबोधनम्

रामस्तां बभाषे हे भद्रे ! कृतान्तैकनिकेतने दारुणे दंडकारण्ये इह कुत आगमोऽस्ति । साप्यूचे अहमवन्तीराजस्य कन्यास्मि, भवनोपरि सुप्ता केनापि खेचरेण क्षपान्तरे हृताऽस्मि । इहारण्ये समायातः सः अन्येन केनचित्सासिना विद्याधरकुमारेण दृष्ट इति च जगदे । चिह्लो हारलतामिवेदं स्त्रीरत्नमपहृत्य रे पाप ! क्व गमिष्यसि तेऽहं मृत्युरुपस्थितोऽस्मि । इत्युक्तः सः मामत्र मुक्त्वा तेन सह सुचिर माजिं व्यधात् मत्तौ वनगजाविवोभावपि विपेदाते । एकाकिनी कांदिशिकेतस्ततोभ्राम्यन्ती चाहं जंगले छायाद्रुमिव पुण्ययोगेन त्वां प्राप्ताऽस्मि । हे स्वामिन् ! तत् सुकुलसंभवां कुमारीं मां परिणय हि अर्थिनां महत्सु प्रार्थना जातु वृथा न जायते । ध्रुवमियं काचिन्नटवद्रूपधारिणी मायाविनी कूटनाटकमुत्पाद्यात्र नो वंचयितुमागादिति चिरं चिन्तयन्तौ बुद्धिसंवादिनौ स्मेराक्षौ रामलक्ष्मणौ अन्योन्यमुखमीक्षांचक्राते । अथ स्मितज्योत्स्नापूरस्तवकिताधरो राम स्तामित्यूचे अहं सभार्योऽस्मि तेनाभार्यं लक्ष्मणं भज । तथैव तयेत्यर्थितो लक्ष्मणोऽप्येव मब्रवीत् आर्यं गतात्वमार्येव तदनया वार्तयाऽलम् । सा याञ्चाखंडनात् पुत्रवधाच्चाधिकं रुपिता सती तत्कृतं तनयक्षयं खरादीनां गत्वाऽऽख्यत् । ततस्ते चतुर्दशभि र्विद्याधरसहस्रै रावृता राममुपद्रोतुं द्विपाः शैलमिवाभ्येयुः । मयि सत्यपि स्वयमार्य ईदृशै र्योत्स्यते किमिति तेषां युद्धाय लक्ष्मणोऽयाचिष्ट । हे वत्स ! त्वं जयाय गच्छ यदि ते संकटं भवेत्तदा ममाहूत्यै सिंहनादं कुर्या इति सः तमन्वशात् । अथ लक्ष्मण उच्चै रामाज्ञां प्रतिपद्य धनुःसखो गत्वा तार्क्ष्य उरगानिव तान् हन्तुं सः प्रवृत्ते । तद्युद्धे प्रवर्धमाने सति स्वभर्तुः पार्ष्णिवृद्धये रावण-

एवञ्च तस्थुषो वल्गुलीस्थानकस्पृशस्तस्य द्वादशवर्षाणि चत्वारि दिवसानि चातीयुः । स्फुर्जत्परिमलः प्रत्याकारतिरोहितः सेध्धुकामः सूर्यहासो व्योम्ना तत्र वंशगह्वरे आगात्। इतस्ततः क्रीडया भ्राम्यन् सौमित्रि स्तत्राययौ सूर्यस्य करोत्करमिव सूर्यहासासिं ददर्श । अथ सः तं खड्गमाददे प्रत्याकाराच्च चकर्ष हि क्षत्रियाणाम पूर्वशस्त्रालोके कुतूहलं भवति । तदा लक्ष्मण स्तत्क्षणं तत्तीक्ष्णत्वपरीक्षार्थ मभ्यर्णस्थां वंशजालीं नाललावं लुलाव । अथ वंशजालान्तरस्थस्य शंबूकस्य कर्तितं मौलिकमलं भूतले पुरः पतितं सोऽपश्यच्च । सौमित्रि र्यावद्वंशगह्वर मग्रतः प्रविवेश तावद्वटशाखावलंबिनं कबंध मैक्षिष्ट । अयुध्यमानोऽशस्त्रश्च कोऽपि पुमान्मया हतोऽमुना कर्मणा मां धिगित्यात्मानं सः निनिंद । ततः सः गत्वा तदशेषं रामभद्राय शशंस, असिं च दर्शयामास रामभद्रोऽप्येवमभाषत । असौ सूर्यहासोऽसि रस्ति त्वयाऽस्य साधको हतो नूनमस्योत्तरसाधकः कश्चित्संभाव्यते । अत्रान्तरे चन्द्रणखाभिधा दशग्रीवस्वसाद्य मत्सूनोः सूर्यहासोऽसिः सेत्स्यतीति कृतत्वरा प्रमुदिता पूजापानान्नसहिता च सती तत्र ययौ लुलितकुंडलं सूनोः शिर च्छिन्नञ्च ददर्श। अथ सा हेवत्स शंबूक ! शंबूक ! क्वासीति रुदती मनोहरां लक्ष्मणस्यांघ्रिन्यासपंक्ति मपश्यत् । येन मत्सूनुर्हतोऽस्ति तस्येयं पदपंक्ति रस्तीति तत्पदपद्धत्या चन्द्रणखा द्रुतं ययौ । यावत्किञ्चिदगात्तावत् पुरः ससीतालक्ष्मणं तरुतले स्थितं नेत्राभिरामं रामं साऽपश्यत् । तदानीं सा रामं निरीक्ष्य सद्यो रिंसाविवशाऽभवत् अहो शोकोद्रेकेऽपि कामिनीनां कोऽपि कामावेशोऽस्ति । अथ सा नागकन्यासहोदरं कन्यारूपं विकृत्य मन्मथार्ता सवेपथुः काकुत्स्थ मुपतस्थे । तदा

[1]रक्तेनाक्तं [2]शकुनिकाऽहरत् । दोर्दंडत्रुद्धया यत्नेन तत्वतो गृहीतमपि पुरंदरयशोदेव्याःपुरोदैवात् सःपपात । ततःसः भ्रातुर्महर्षेर्विपदं विदांचकार हेपाप ! किं पाप मकार्षीरित्याक्रोशच्च । तां शोकमग्ना मुध्घृत्य शासनदेवता मुनिसुव्रत-पादान्तेऽनैषीत् तत्रच सा प्रव्रज्यामाददे । स्कंदकाग्निकुमारोऽपि प्राग्जन्मावधिना विदन् सपालकं सपूर्लोकं दंडकं नृप मदहत् । तदादि दारुणमुद्धमं दंडकाराण्यमिदं दंडकस्याभिधानेन भुवि विश्रुतं बभूव । दंडकोऽपि भवे दुःख-खानिषु योनिषु भ्रान्त्वा स्वकर्मभिरय गंधारूनः पक्ष्यभूत् । अस्यास्मद्दर्शनाज्जातिस्मरणं समजायत अस्मत्स्पर्शौ-षधीलब्ध्या रोगाश्च क्षयमासदन् । तच्छ्रुत्वा मुदितः पक्षो भूयोऽपि मुनिपादयोःपपात धर्मं चाश्रौषीच्छ्रावकत्वञ्च-शिश्रिये । तस्येप्सितं ज्ञात्वा महामुनि र्जीवघातपलाहाररात्रिभोजनकर्मणां प्रत्याख्यानं ददौ । इहैषो वः सा-धर्मिक इति मुनी राममूचे, जिनैः साधर्मिके च वात्सल्यं श्रेयस्कर मुक्तम् । एषो नः परमो बन्धु रित्युक्त्वा राघवेण वंदितौ तौ मुनी नभसोत्पत्यान्यतो जग्मतुः । तं दिव्यं रथमारुह्य सहचारिजटागवो जानकीरामलक्ष्मणाः क्रीडयाऽन्यत्र विजह्रुः । इतः पाताललंकायां खरचन्द्रणखात्मजौ शंबूकसुंदनामानौ नवयौवनावभूताम् । अन्यदा शंबूकः पितृभ्यां वार्यमाणोऽपि सूर्यहासासिसाधनार्थ मुपेयिवान् । अथ सः क्रौञ्चरवातीरे अन्तर्वंशगह्वरं स्थित्वा यो मां वारयिष्यति तं हनिष्यामीत्यवोचत । एकान्तशुचिशुद्धात्मा ब्रह्मचारी जितेन्द्रियो वटशाखानिबद्धचरण-द्वयोऽधोमुखः सप्ताहाग्रद्वादशाब्द्या या विद्या सिद्धि मुपगच्छति तां सूर्यहासासिसाधिनीं विद्यां जपितु मारेभे ।

---

१ रुधिरेण व्याप्तम् २ पक्षिणी

स्तं पराभवं संस्मरन् साधूपयोग्योद्यानेपूर्व्यां शस्त्राण्यखानयत् । स्कंदकाचार्य उद्याने एकस्मिन्समवासरत् तंच सपरिच्छदो दंडको वंदितु मायया । स्कंदको देशनाश्चक्रे वहवो जनाश्च जहृषुः, दंडको नृपः प्रहृष्टो देशनान्ते वेश्मागात् । कुधीः पालको रहसि गत्वा राजानमित्यूचे हे स्वामिन्नेषः खलु स्कंदकः पाखंडी वकाचारश्चास्ति। मुनिवेषधरोमहाशठोऽसौ सहस्रयोधिभिः पुंभिस्त्वां हत्वा राज्यमादातुमिहागात् । अत्रोद्याने स्वस्थाने मुनिवेषै र्महाभटैः शस्त्राणि क्षिप्तानि सन्ति तानिच दृष्ट्वा भूपतिः प्रत्येतु । ततश्च राजा मुनिस्थानानि सर्वतोऽखानय चित्राण्यस्त्राण्यपश्यच्च परं विषादञ्च ययौ । ततो राजाऽप्यविचार्य पालकमादिदेश हे मन्त्रिन् त्वया साधु ज्ञातं हि अहं भवता चक्षुष्मानस्मि । अस्य दुर्मतेश्चोचितं कर्तुं त्वमेव जानासि तत्कुरुष्व हे महामते! भूयोऽप्यहं न प्रष्टव्यः। इत्युक्तःपालकः शीघ्रं गत्वा यन्त्रमकारयत् स्कंदकस्याग्रतश्चैकैकं साधून् न्यपीलयत्। स्कंदकोऽपि निःपील्यमानानेतांस्तु स्वयं देशनापूर्वकं सम्यगाराधनाविधिमकारयत्। परिवारान्तिमे शिशौ मुनावुपयंत्रं नीते सति स्कन्दकाचार्यःकारुण्यात्पालक मित्यभाषत। आदौ मामेव पीलय एतन्ममवचः कुरुष्व यथाह्यमुं बालं मुनिं पील्यमानं नहि पश्यामि । पालकोऽपि हि स्कंदकं तत्पीडापीडितं ज्ञात्वा तत्पीडार्थं तमेव बालमुनि मपीलयत् । सर्वेऽप्युत्पन्नकेवला अव्ययं पदमवापुः स्कंदकस्तु प्रत्याख्यायेति निदानं निर्ममे । अस्य तपसो यदि किमपि फलं स्यात्तर्हि दंडकस्य पालकस्य तथात्र कुलराष्ट्रयो र्व्यापादनाय भूयासमिति । एवं कृतनिदानः सन् पालकेन पीलितः सः स्कंदकस्तत्क्षये कालाग्निरिव वह्निकुमारो देवोऽभूत् । पुरंदरयशोदत्तरत्नकंबलतंतुजं तद्रजोहरणं

सःसमुत्थाय साधुपादेष्वपतत् साधोःस्पर्शौषधीलब्ध्या क्षणान्नीरोगश्चाभवत् पक्षौ हैमावजायेताम् चंचूर्विद्रुमविभ्र-
माजायत पादौ पद्मरागप्रभावजायेताम् वपुश्च नानारत्नप्रभमजायत शिरसि जटा रत्नांकुरश्रेणिनिभाश्चाभवन् ततः
प्रभृति तस्य पक्षिणो जटायु र्नामाऽभूत्। रामस्तौ महर्षी अपृच्छत् क्रव्याद् कुधीरयं गृध्रो वः पादयोःपार्श्वे स्थित्वा
कस्माच्छान्तोऽजायत। हे भदन्तौ ! पुराऽत्यन्तविरूपावयवोऽयमद्य क्षणाध्धेमरत्नोत्करद्युतिःकथं जातः। अथ सुगु-
प्तर्षि राख्यदिह पुरा कुंभकारकटं नामपुरमासीत् तत्रैषो दंडको नाम राजाऽसीत्। तदाच श्रावस्त्यां जितशत्रु
र्नामराजाऽजायत धारिणी नाम तत्पत्नी स्कन्दको नाम तत्सुतश्चासीत्। तयोःपुरंदरयशानाम दुहिताऽभवत् कुंभका-
रकटेशो दण्डकस्तां पर्यणैषीच्च। अन्यदा केनाप्यर्थेन दंडको जितशत्रुनृपान्तिके नामतःपालकं द्विजं दूतं प्राहिणोत्।
तदा जितशत्रुरर्हद्धर्मगोष्ठीपरोऽभवत् कुधीःपालकस्तु तं धर्मं दूषयितु मारेभे। दुराशयोमिथ्यादृष्टिः सः स्कंद-
ककुमारेण युक्त्या सत्यसंवादपूर्वकं निरुत्तरीचक्रे। तदा सः सभ्यैर्हसितः स्कंदकेऽमर्षमदधत् अन्यदा राज्ञा-
विसृष्टः स; कुंभकारकटं ययौ। अन्यदा विरक्तः स्कंदकः पञ्चराजपुत्रशतान्वितः मुनिसुव्रतपादान्ते व्रतमाददे।
सः पुरंदरयशाः कुंभकारकटे पुरे मुख्यलोकं बोधयितुं यामीति प्रभुमापप्रच्छे। प्रभुरप्येवमुवाच तत्र गतस्य
सपरिवारस्य ते मारणान्तिक उपसर्गो भविष्यति। अथ तत्र वय माराधका भाविनो नवेति भूयोऽपि स्कंदको
मुनिसुव्रतं स्वामिन मपृच्छत्। भगवानपि त्वां विना सर्वेऽप्याराधका इत्याख्यत् सर्वमेतर्हि संपूर्ण मित्युक्त्वा स्कंद-
कोऽचलत्। क्रमेण मुनिपंचशतीयुतः स्कंदकाचार्यो गच्छन् कुंभकारकटं पुर मासादयामास। तं दृष्ट्वा क्रूरःपालक

स्मिन्मुनिसुव्रततीर्थे तव पश्चात्कः केवली भविष्यतीति। सोऽप्याख्य न्मम निर्वाणे जाते सति कुलभूषणो देशभुषण इति द्वौ भ्रातरौ भविष्यतः। अनलप्रभ स्तच्च श्रुत्वा निजं स्थानमुपेत्यान्यदा विभंगेनेह कायोत्सर्गे स्थितौ ज्ञात्वा मिथ्यात्वेनानन्तवीर्थस्य वचन मन्यथा कर्तुं सः प्राग्जन्मवैराच्च नौ दारुण मुपद्रुद्राव। दृढ मुपद्रुवत स्तस्य चत्वारि दिनान्यतीयु स्त्वात्र युवा मायातौ युष्मद्भीत्या च सोऽनशत्। आवयोश्च कर्मक्षयात्केवलं समजायत कर्मक्षयेऽय मुपसर्गपरोऽपि सहायोऽभूत्। तदा गरुडाधिपो महालोचनदेवोऽप्यूचे हे काकुत्स्थ ? त्वं साध्वकार्षी स्ते किं प्रत्युपकरोमि। नः कश्चिदप्यर्थो नास्तीति रामेणोक्ते सति सोऽमर स्तथापि क्वाप्युपकरिष्यामीत्युक्त्वा तिरोदधे। अथ वंशस्थलाधीशो नाम्ना सुरप्रभो राजा तत्रागत्य नमश्चक्रे उच्चकैश्च राम मानर्चे सः रामाज्ञया तत्र शैलेऽर्हच्चैत्यान्यकारयत् सः गिरिरपि तदानीं रामनाम्ना रामगिरि रभूत्। अथ रघुपुंगवः सुरप्रभ मापृच्छ्य प्रतस्थे निर्भयः सन्नुद्दंडं दंडकारण्यं प्रविवेश च। तत्र महागिरिगुहागृहे चावासं विधाय काकुत्स्थः सुस्थितः सन् स्वकीये वेश्मनीव तस्थौ। अन्येद्यु स्तत्र भोजनवेळायां नाम्ना त्रिगुप्तसुगुप्तौ चारणौ मुनी नभसासमुपेयतुः। रामसीतासौमित्रय स्त्रयः द्विमासोपोषितौ पारणार्थमुपस्थितौ तौ तु भक्त्या ववंदिरे। सीता यथोचितै रन्नपानै स्तौ प्रत्यलाभयत् तदा देवै रत्नगंधाम्बुवृष्टयो विदधिरे। तदा रत्नजटी कंबुद्वीपविद्याधरः द्वौसुरौ चैत्य प्रीताः सन्तः साश्वं रथं ददुः। तत्र गंधाम्बुवृष्टिगंधेन तद्वास्तव्यो गंधाभिधो रोगी खगः पादपा दुत्तीर्य समाययौ। मुने र्दर्शनमात्रतः संजातजातिस्मरणो मूर्छया भूमौ पपात, सीता तमंभोभिः सिषेच। लब्धसंज्ञः

च रणेपातयित्वा सः जगृहे । अथ रत्नरथेन बहुधा विडम्ब्य सः मुमुचे ततस्तापसोऽभूत् स्त्रीसंगाच्च निजं तपो मोघीचक्रे । सः ततोऽपि मृत्वा भवं भ्रान्त्वा चिरान्मर्त्यो बभूव तापसीभूय भूयोऽप्यज्ञानकं तपश्चकार । मृत्वा सोऽय मनलप्रभो ज्योतिष्कस्त्रिदशोऽभवत्, तौ च रत्नरथचित्ररथौ दीक्षां जगृहतु । अथविपद्याच्युते कल्पे नामधेयेनातिवलो महावल इति प्रवरर्द्धिकौ त्रिदशौ जज्ञाते। च्युत्वा च सिद्धार्थपुरे क्षेमंकरमहीपते र्विमलादेव्या महिष्याः कुक्षौ तावत्वतेरतुः । क्रमाच्च विमलायामेपोऽह कुलभूषण स्तथाऽयं देशभूषण इत्युभौ सुता वजनिषाताम् । ततो भूभुजा पाठाय घोषस्योपाध्यायस्यार्पितौ तत्र द्वादशाब्दी मवस्थितौ सर्वाः कला अपठाव । त्रयोदशेऽब्दे घोषेण सहनृपान्तिके समायातौ राजवेश्मनि वातायनस्थितां कन्या मपश्याव ।तस्यां च सद्यो जातानुरागौ विमनायितौ राज्ञोऽन्तिक मगमावाखिलाः कलाश्चादर्शयाव । राज्ञाऽर्चित उपाध्यायो निजमंदिरं जगाम ततश्चावां राजाज्ञया मातरं नंतुं गतौ । तत्रचावां मातुरन्तिके तां कन्या मपश्याव, अम्बा चाशसदियं युवयो र्घोपोपाध्यायसदने तस्थुषोः सतोः कन्या जाता तेनेमां युवां नोपलक्षयथः । तच्छ्रुत्वाऽज्ञानात्स्वसृकांक्षिणावावां लज्जितौ क्षणाद्वैराग्य मापन्नौ गुरोरन्तिके प्राव्रजाव । तीव्रंतपस्तप्यमानाविह महागिरा वायातौ वपुष्यपि निरपेक्षौ कायोत्सर्गेण चास्थाव । आवयोः पिता वियोगेनानशनं गृहीत्वा मृतः महालोचननामको गरुडेशोऽदेवोभवत् । आसनकंपेन चावयो रुपसर्ग विज्ञाय प्राग्जन्मस्नेहपीडितः संभ्रमयमिहायातोऽस्ति । सः अनलप्रभः केवलिनोऽनंतवीर्यमहामुनेः पार्श्वे कुतूहलादेवैः सहागच्छत् । देशनान्ते केनचिच्छिष्येणानन्तवीर्यः पृष्टः यद्-

ईर्ष्यया तत्सून्वो र्मुदितस्योदितस्य चाख्यत् । तदोदितेन रुपा वसुभूतिः सद्यो निपातित एष मृत्वा नलपल्ल्यां सः म्लेच्छः समुदपद्यत । अन्यदा राजा मतिवर्धनान्महर्षे धर्मं श्रुत्वा प्रव्रज्यामाददे तावुदितो मुदितोऽपि च समेते चैत्यानि वंदितुं पचेलतुः पथि भ्रान्तौ तां पल्लीं च समेयतुः । वसुमतिजीवो म्लेच्छः पूर्ववैरात्तौ निरीक्ष्य हन्तुं दधावे म्लेच्छाधिपतिना च न्यपिध्यत । सः म्लेच्छेशः प्राग्भवे मृगोऽभूत् सच तद्भवे कर्षकाभ्यां मुदितोदित जिवाभ्यां व्याधाच्च मोचित आसीत् । अत स्तेन म्लेच्छाधिपेन संमेत मेत्य त्रातौ, तौ च चैत्यानि ववदाते चिराय विजह्रातेच । ततोऽनशनं[1] विधाय मृत्वा तौ महाशुक्रे सुंदरसुकेशाख्यौ महर्द्धिकौ सुरोत्तमा वजायेताम् । वसुभूतिजीवो म्लेच्छो भवंभ्रान्त्वा कथंचन मानुषं जन्मावाप तत्र च सः तापसोऽभूत् । सः विपद्य ज्योतिष्केपु सुरेपु धूमकेतुर्नाम दुराशयो मिथ्यादृष्टि र्देवः समुत्पेदे । उदितमुदितजीवौ शुक्राच्च्युत्वाऽत्र भारते महापुरेऽरिष्टपुरे प्रियंवदमहीपतेः पद्मावत्यां सधर्मिण्यां नामतो रत्नरथचित्ररथाविति विश्रुता वुभौ सुता वजायेताम् । धूमकेतुरपि च्युत्वा तस्यैव भूपतेः पत्न्यां कनकाभायां नाम्नाऽनुद्धरः सूनुर्बभूव । स च चित्ररथे रत्नरथे च समत्सरोऽभूत् तौ तु तस्योपरि मात्सर्यं न विभरांचक्रतुः। प्रियंवदो रत्नरथे राज्यं न्यस्य द्वयोः पुनर्यौवराज्य दत्वा षड्दिनानि प्रायं कृत्वासुरोऽभवत् । राज्यं पालयतो रत्नरथस्यैकोनृपो ऽनुद्धरे याचमानेऽपि श्रीप्रभां नाम स्वांकन्यां ददौ । अथ क्रुद्धोऽनुद्धरो रत्नरथस्योर्वीमलुंटयत् रत्नरथेन

१ अनशनम्

मुष्मिन्पर्वते रात्रा वुच्छलतो रौद्रस्य ध्वने स्तार्तीयीको वासरोऽस्ति। तद्भयादखिलो जनो रात्रि मन्यत्र गमयति प्रातश्च पुनरायातीयं कष्टा स्थिति र्नित्यं वर्तते। ततश्च कौतुकाल्लक्ष्मणेनप्रेरितो राम स्तत्रारुरोह कायोत्सर्ग स्थितौ मुनी चापश्यत्। जानकीरामलक्ष्मणा भक्त्या तौ ववंदिरे रामस्तु तदग्रे गोकर्णार्पितवल्लकी मवादयत्। सौमित्रिश्च ग्रामरागमनोहरं हृद्यं जगौ सीता देवीच चित्रांगहारकरणं ननर्त च। तदाचार्कोऽस्तं ययौ विभावरीच जजृंभे विकृतानेकवेतालोऽनलप्रभो देवश्चागात्। स्वयं वेतालरूपः अट्टहासै र्नभः स्फोटयन्दुराशयः सः तौ महर्षी उपद्रोतुं प्रावर्तत। तदा वैदेही मुपसाधु मुक्त्वा सन्नद्धौ रामलक्ष्मणौ अकाले कालतां गतौ सन्तौ तं निहन्तु मुत्तस्थाते। सोऽपि देवस्तयो स्तेजप्रसरंसोढु मक्षमो निजं स्थानं ययौ तयोः साध्वोश्च केवलज्ञानमजनि। देवैश्च तयोः केवलज्ञानमहिमां विदधे रामश्च नत्वोपसर्गविधिकारणं पप्रच्छ। तत्राख्यया कूलभूषण एको महर्षि राख्यत् पद्मिन्यां नगर्यां विजयपर्वतो नाम राजाऽऽसीत्। तस्यामृतस्वराख्यो दूतोऽभूत् दूतस्य तस्य उपयोगा नाम्नी भार्याअभूत् उदितो मुदितश्च तत्सुता वभूताम्। तस्य दूतस्याऽमृतस्वराख्यो द्विजो वयस्योऽभूदुपयोगाच तदासक्ताऽमृतस्वरं जिघांसत्। अमृतस्वरोऽन्यदा नृपादेशाद्विदेशायागात् सह गच्छन्वसुभूतिश्च मार्गे छलात्तमवधीत्। वसुभूतिः पुरीमेत्य जनायैवमवोचत, यदमृतस्वरेण कुतोऽपि कार्यादहं निवर्तितोऽस्मि। उपभोगायाश्च शशंस, नौ संभोगविघ्नकृत् सोऽमृतस्वरश्छलं लब्ध्वा मया मार्गे व्यापादितोऽस्ति। साप्यूचे त्वं साध्वकार्षी रिमौ पुत्रावपि जहि तेन निर्मक्षिकमस्तु सोऽपि तत्प्रत्यपद्यत। दैवाच्च वसुभूतिसधर्मिणी तं मंत्रं श्रुत्वा

पृथिवीपतेः शक्तिप्रहारं सहते तस्मैएष परिणयनाय स्वकन्यकां ददाति । तेन चाघोषणाहेतुं पृष्ट एकः पुमा-
नवदत् अत्र महाभुजः शत्रुदमनो नाम राजास्ति । तस्य कनकादेवीकुक्षिजापद्माया एकं सद्म पद्मलोचना जित
पद्मेति कन्याऽस्ति । ततो वरस्योजःपरीक्षार्थं प्रत्यह मनेन क्ष्माभुजा आरभ्यते परं तादृक्षः कोऽपि ना नैति ।
इत्थं श्रुत्वा लक्ष्मणः सभास्थितं तं राजान मगच्छत् कुतो हेतोः कुतस्त्यस्त्वमिति तत्पृष्टश्चैवमब्रवीत् । अहं
भरतदूतोऽस्मि केनचिदर्थेन गच्छन् तवेमां कन्यां श्रुत्वा परिणेतु मिहागमम् । मम शक्तिघातं सहिष्यस इति
महीभुजोक्तः सः लक्ष्मणः किमेकेन, पञ्चाहं सहिष्ये इत्यूचे । तदानीं तत्र राजकन्यका जितपद्माऽगात्,
लक्ष्मणश्च प्रेक्ष्य क्षणाच्च मदनातुराबभूव । अनुरागिण्या तया सद्यो वार्यमाणोऽपि भूपति राशु लक्ष्मणाय दुःसहं
शक्तिपञ्चकं चिक्षेप । लक्ष्मणो द्वे कराभ्यां द्वे कक्षाभ्यां दंतैश्चैकामिति शक्तिपञ्चकं पद्मायाः कन्याया मनसा
सहाग्रहीत् । तत्र जितपद्मा स्वयंवरणमालिकामक्षिपत्पार्थिवोऽपीयं कन्योदुह्यतेति तमब्रवीत् । लक्ष्मणोऽप्यवद
द्बाह्योपवने ममाग्रजो दाशरथी रामोऽस्ति तेन सर्वदा परतंत्रोऽस्मि । सः क्ष्मापति स्तौ रामलक्ष्मणौ ज्ञात्वा
तत्क्षणं गत्वा नमश्चक्रे स्ववेश्मन्यानिनाय च । सः राजा महत्या प्रतिपत्या राम मपूजयत् सामान्योऽप्यतिथिः
पूज्योऽस्ति किं पुनः पुरुषोत्तमः । ततोऽपि रामे चलिते सति सौमित्रि स्तं महीपतिं व्यावृत्तस्त्वत्सुतां परिणे-
ष्यामीत्युवाच । रामो निशायां निर्ययौ वंशशैलाख्याद्रितटस्थितं वंशस्थलं नाम पत्तनं सायं प्राप । रामस्तस्मि
न्सभूपतिं लोकं भयाकुल मालुलोके तेन कंचिन्नरं प्रति तद्भयकारणं प्रपच्छ । सोऽपिपुरुष आचख्यौ अद्या

महामनाः सः प्राव्राजीत् । तत्सूनुर्विजयरथो रतिमालाभिधां निजां जामिं लक्ष्मणाय ददौ तां च लक्ष्मणः प्रती-
येष । रामोऽपि ससैन्यो विजयपुरंपत्तनं ययौ। विजयरथः पुनर्भरतं सेवितु मुयोध्यां ययौ विज्ञाततदुदंतो गरि
माचलो भरतोऽपि आयातं तं सच्चकार हि संतो नतवत्सला भवन्ति सः विजयरथस्तदा रतिमालायाः कनिष्ठां नाम्ना
विजयसुंदरीं स्त्रीसारं स्वसारं भरताय भूभुजे ददौ। तदा विहरन् सः अतिवीर्यो मुनि स्तत्रययौ भरतेन भूभुजा सः वंदि
त्वा क्षमयांचक्रे। सप्रसादेन भर तेन महीभुजा विसृष्टः सानंदो विजयरथो नंद्यावर्तपुरं ययौ। महीधर मनुज्ञाप्य रामे
गंतुं समुद्यते सति यियासु लक्ष्मणोऽथ वनमालामापप्रच्छे। बाष्पपूर्णविलोचना वनमालापि जगाद, हे प्राणेश ? तदा
ममप्राणत्राणं मुधा किं कार्षीः। हे वल्लभ ! तदैव मृत्युः सुखं भवेत्तद्वरं त्वद्विरहोत्थितमर्धवैशसमिदं दुःखं तु न वरम्।
हे प्रभो अद्यैव परिणीय त्वं मां सहैव नय, अपरथात्वद्वियोगाद्वलं प्राप्यान्तको मां नेष्यति। अथ
लक्ष्मणोऽन्ववैषीदहं भ्रातुः शुश्रूषकोऽस्मि तद्धे मनस्विनि सहायान्ती त्वं शुश्रूषाविघ्नकृन्मास्म भूः। हे वर-
वर्णिनि ? ज्यायांस मीप्सितं स्थानं प्रापय्य भूयोऽपि त्वां समेष्यामि त्वं हृदये वास्तव्या ह्यसि। हे मानिनि ?
भूयोऽपि यद्यहं नायामि चेत्तद्रात्रि भोजिनामंहसा गृह्ये इति तया सौमित्रिः शपथं कारितः। ततो रात्रिशेषे रामः ससीतालक्ष्मणोऽचलत् क्रमा-
घोरेभ्यः शपथेभ्योयं त्वं कारयसि पुनरिहागमप्रत्ययहेतवे तं करोमि।
द्वनानि लंघित्वा हेमाञ्जलिं पुरीं प्राप। तद्बहिरुद्याने रामो लक्ष्मणानीतैः जानकीकरसंस्कृतैः फलादिभि
र्वन्याहारै र्बुभुजे। तत्र राममनुज्ञाप्य सौमित्रिःकौतुकात्पुरीं प्राविशत् तत्रोच्चै रितिघोषणामश्रौषीत्। योऽमुष्य

वीर्यःस्त्रीभिर्जित इतितस्यायशस्कृते ससैन्यस्य तव कामिकं स्त्रीरूपं करिष्यामि । स्त्रीराज्यमिव तत्सैन्यं क्षणा-त्स्त्रीरूपमभवत् रामसौमित्री च सुंदराकृतिस्त्रीरूपौ चाभूताम् । ततो रामो महीधरेणेदं स्वंसैन्यं तव साहाय्य-हेतवे प्रैषीति तं नृपं द्वाःस्थेनाज्ञापयत् । अतिवीर्योऽप्येवमुवाच यदि महीधरः स्वयं नागात्तन्मुमूर्षो र्वहुमानि-नोऽस्य सैन्येन कृतम् । एकोऽपि भरतंजेष्यामि ममापि सहायाः किं ? द्रुतमिदमयशस्करं तत्सैन्यं निर्वास्यताम् । अथान्यः कश्चिदप्यूचे सः स्वयं नागात्प्रत्युतेहोपहासाय स्त्रीसैन्यं प्राहिणोत् । तच्छ्रुत्वा नंद्यावर्तेश्वरः सुमहा-क्रोधमकरोत् स्त्रीरूपधारिणस्ते रामाद्या च द्वारमाययुः । अतिवीर्योऽप्यादिक्षदमिकाः स्त्रियोदासीवद्ग्रीवासु-गाढंगृहीत्वा पुराद्बहि र्निर्वास्यताम् । समंतात् सपदातयो महाभुजास्तस्य सामंता उत्थाय तत्स्त्रीसैन्यमुपद्रोतुं प्रावर्तत । अथ रामभद्रो भुजस्तंभेनोच्चकैरिभस्तंभं समुत्पाट्यायुधीकृत्य तान्समंता दपातयत् । तेनसामंतभगेन भृशं कुपितोऽतिवीर्यो भीषणं खड्ग माकृष्य स्वयं रणायोत्तस्थे । अथ लक्ष्मणस्तत्खड्ग माच्छिद्य तत्क्षणादपि केशेषु तमाचकर्ष तद्वस्त्रेण ववंध च । व्याघ्रो मृगमिव सः नृव्याघ्रस्तमादायोत्रासतरलेक्षणैः पौरैर्जनै र्दृश्यमाण श्चचाल । अथ करुणापरा मैथिली तं मोचयामास सौमित्रिश्च सद्यो भरतसेवां प्रत्यपादयत् । अथक्षेत्रदेवता सर्वेषां स्त्रीवेषं संजह्रे, अतिवीर्योऽपि तौ तदा रामलक्ष्मणा वज्ञासीत् । ततोऽतिवीर्यस्तयो र्महतीं पूजां विदधे, मानी सः मानध्वंसेनोच्चकै र्वैराग्यं दध्यौ । अहमप्यन्यं सेविष्ये किम् ? इति हृद्यहंकारभाग् दीक्षार्थी सः वि-जयरथे पुत्रे राज्यं न्यधत्त । त्वं मे द्वितीयो भरतोऽसि क्ष्मां शाधि मास्म प्रव्रजः, इत्थं रामेणनिषिद्धोऽपि

तीर्यं रामं प्रेक्ष्य नमश्चक्रे । उवाच च तव भ्रात्रेऽमुष्मै सौमित्रये स्वयंजातानुरागेति मयेयं पुरापि कल्पिताऽभूत् । इदानीं मद्भाग्येनानयोः समागमो जज्ञे लक्ष्मणो जामाता दुर्लभस्त्वञ्च संबंधी जज्ञे खलु । इत्युक्त्वा महीधरो महत्या प्रतिपत्त्या जानकीरामलक्ष्मणा न्निजवेश्मनि निनाय । तेषु तत्र तिष्ठत्सु सत्सु कदाचन स भास्थितं महीधरंनृप मेत्य अतिवीर्यराड्दूत ऊचे । वीर्यसागरो नंद्यावर्तपुराधीशोऽतिवीर्यो भरतविग्रहे जाते सति साहाय्याय त्वा माह्वयति । तस्य दाशरथे र्बले भूयांसो भूभुजोऽभ्येयुः तत्सुमहाबल स्त्वमप्यतिवीर्येणाहूयसे । अथ लक्ष्मण एव मपृच्छत्, नंद्यावर्तमहीभुजो भरतक्ष्माभुजा सार्धं विरोधनिबंधनं किमस्ति । दूतोऽप्युवाच नः स्वामी भरताद्भक्ति मिच्छति सः तु तां न प्रयच्छति विग्रहकारणमिदमेवास्ति । रामस्तं दूतं पप्रच्छ अतिवीर्यस्य संगरे भरतः समर्थः किं यत्तत्सेवां न मन्यते । दूतोऽप्यूचे एष नोऽतिवीर्यस्तावन्महावीर्योऽस्ति भरतोऽपि सामान्यो नास्ति तदूद्वयोर्जये संशयोऽस्ति । राजा इत्युक्तवंतं तं दूत मेषोऽहं सत्वर मागच्छामीत्युक्त्वा व्यसृजद्रामं चैव मभाषत । अहो अल्पमेधस एतस्यातिवीर्यस्याज्ञत्वम् यदयमस्मानाहूय भरतं योधयिष्यति । तत्सर्वसेनयागत्वाऽनुपलक्षितदौर्हृदा भारताच्छासनादिवामुमेव हनिष्यामः । ततो रामः ऊचे त्वं सबलै स्त्वत्सुतैः सहात्र तिष्ठ, तत्रत्वहमेव यास्यामि यथोचितञ्च करिष्यामि । एवमस्त्विति तेनोक्तस्तत्पुत्रबलसंयुतः ससीतालक्ष्मणो रामो नंद्यावर्तपुरं ययौ । बहिरुद्यान उषितं रामं तत्क्षेत्रदेवता अभाषत, हे महाभाग ? ते किमभीष्टं करोमि । नः किमपि कर्तव्यंनास्तीति राघवेणोक्तेऽपि साभ्यधादेवमेतद्धि तथाप्यद उपकरोमि । अति-

वनमालाऽपि तच्छ्रुत्वा मरणेकृतनिश्चया तस्यां निशि दैवादेकिका तदुद्यानमुपाययौ । तत्रायतने प्रविश्य वनदेवता मपूज्यत. जन्मान्तरेऽपि सौमित्रि र्मे पतिरस्त्वित्युवाच च । ततः सा तं न्यग्रोधं ययौ प्रसुप्तजानकीराम यामिकेन प्रजाग्रता लक्ष्मणेन च ददृशे । सौमित्रिरिदंदध्यौ इयं किं वनदेवताऽस्ति वाऽस्य वटतरो रधिष्ठात्री कापि यक्षिण्यस्ति । एवं चिन्तयतस्तस्य सा वटद्रुममध्यारोहत् एषा किं करिष्यतीति लक्ष्मणोऽपि तमारुरोह । सा प्रांजलिर्भूत्वा प्रोचे हेमातरो, वनदेवताः दिग्देव्यः सर्वा व्योमदेव्यश्च मद्वचः शृणुत । इहभवे तावत्सः लक्ष्मणो मम भर्ता न तर्हि तत्र मे भक्ति रस्ति चेद्भवान्तरेऽपि भूयात्। इत्युदित्वोत्तरवाससा कंठपाशं विधाय बध्वाच द्राक् वटशाखायां साऽत्मानमवलंबयत् हे भद्रे ? साहसं मा कार्षी रहं लक्ष्मणोऽस्मीतिब्रुवन् लक्ष्मण स्तत्पाश मपास्य तामादायोत्ततार च । ततो लक्ष्मणो निशाशेषे प्रबुद्धयो रामसीतयो रशंसत स्तं वनमालाया वृतान्तं शशस । ह्रियाऽवगुंठितमुखी वनमालाऽपि तत्क्षणं जानकीरामचरणारविंदेभ्यो नमोऽकरोत् । इतोऽपि च तदा महीधरनृपप्रिया इन्द्राणी वनमाला मपश्यन्ती करुणस्वरं पूचक्रे । महीधरो वनमालान्वेषणाय निर्ययौ, इतस्ततः परिभ्राम्यंस्तत्रस्थां तां ददर्श । एतान्कुमारीतस्करान् हत, हत, इत्युदस्त्रेषु सैन्येषु भाषिषु सत्सु क्रुधा रामानुज उत्तस्थौ । ततः स भाले भ्रूवमिव धनुषि ज्या मारोपयामास, वैर्यद्दकारहारकं टंकारश्चाकारयच्च । तद्धनुर्ध्वनिना परे चुक्षुभु स्तत्रसुः पेतुश्च महीधरस्तु पुरः स्थित्वा स्वयं सौमित्रि मैक्षत । तत उपलक्ष्या वादीत् हे सौमित्रे ? धन्वनो ज्या मुत्तारय मत्प्रुतापुण्यै रिष्यमाण स्त्व मागतोऽसि । सौमित्रावुत्तारितज्ये सति महीधरः सुस्थितः सन् स्यंदनोत्तमादव-

रर्पितासने अग्रे उपाविशत् । त्वंकृत
तत् प्रार्थयस्व । ततोऽपशंकः कपिलो गत्वा रामाय चाशिषं दत्वा गुणाग्रे रर्पितासने अग्रे उपाविशत् । त्वंकृत
आगतोऽसीति रामेण पृष्टःसोऽवदत्. अरुणग्रामवासिनं तं विप्रं मां किं न वेत्सि । येन यूयमतिथीभूता अपि
दुर्वचसा आक्रुष्टा युष्माभिश्च कृपापरै रस्मान्मोचितोऽस्मि सा सुशर्मा ब्राह्मण्यपि दीनास्या उपसीतं गत्वा प्राग्दु-
ष्टाख्यानपूर्वकं प्रदत्ताशी रुपाविशत् । ततः सः विप्रो भूरिभि र्द्रविणैः कृतार्थीकृत्य राघवेण विसृष्टः सन् पुनः
स्वग्रामगमगत् । प्रबुद्धः सः ब्राह्मणोऽपि यथारुचि दानं दत्वा नंदावतंससूरीणामन्तिके व्रत मग्रहीत् । अथ
प्रावृण्ण्यतीतायां रात्र्यां राघवमियासुं प्रेक्ष्य गोकर्णयक्षो विनयात्कृतांजलिः सन्नेव मूचे । हे स्वामिन् ? यद्यतो
यास्यसि तर्हि त्वयि मे यत्किञ्चिन्मनागपि भक्तिस्खलितं स्यात्तत्क्षमस्व प्रसीद च । हे महाभुज ? तवानुरूपां
पूजां कर्तुं कः क्षम इत्युक्त्वा नाम्ना स्वयंप्रभं हारं रामायादत्त । सौमित्रये दिव्यरत्नविनिर्मिते तारंके सीतायै
चूडामणिं चेप्सितनादिनीं वीणाञ्च ददौ । ततो रामस्तं यक्ष मनुमान्य स्वेच्छया प्रतस्थे सः यक्षोऽपि स्वयं
कृतां तां पुरी मुपसंजह्रे । ते जानकीरामलक्ष्मणाः क्रमेतः सन्तोऽरण्यानि त्यक्त्वा संध्याक्षणे विजयपुरं ययुः
तरिंमश्च ते नगरदिशि बहिरुद्याने वेश्मसन्निभे महीयसो न्यग्रोधवृक्षस्य तलेऽवात्सुः । तस्मिन्पुरे नाम्ना मही-
धरो राजाऽभवत् इन्द्राणी नाम तत्पत्नी वनमालेति तत्सुता चाभवत् । वनमाला च बाल्येऽपि सौमित्रे र्गुण-
संपदं रूपञ्चाकर्ण्य तं मुपत्वा सा नान्यवरमियेप । तदा दशरथनृपं प्रव्रजितं तथा रामसौमित्री च निर्गतौ
श्रुत्वा महीधरो विषण्णोऽभवत् । महीधरस्तेन चन्द्रनगरे वृषभक्ष्मापजन्माने नाम्ना सुरेन्द्ररूपाय वनमाला मदत्त

वीणाधारिणं यक्षं तां महर्द्धिनगरीं चैक्षत । विस्मितं रामं सोऽवोचत् स्वामी त्वं मेऽतिथिश्चासि, गौकर्णोनामाहं यक्ष स्त्वत्कृते पुरी मकार्षम् । हेस्वामिन् ? दिवानिशं सपरिवारेण मया सेव्यमानो यथाकालं यथारुचिइह सुखं तिष्ठ । इति तेनार्थितो यक्षपुंभि र्निषेवितो रामः सीतासौमित्रिसंयुत स्तत्र सुख मवतस्थे ।

इतश्चान्यदा सः कपिलो विप्रः पर्शुपाणिः समिदादिकृते तस्मिन्महारण्ये भ्रमन्समाययौ । सच तां पुरीं ददर्श इयं मायास्ति, गान्धर्वपुर मथवेन्द्रजालं वास्तीति विस्मया च्चेतसि दध्यौ । तत्रच चारुनेपथ्यवाससं मानुपीरूपागेकां यक्षिणीं दृष्ट्वा कस्येयं नूतना पुरीत्यपृच्छत् । सोचे, नाम्नारामपुरीयं नूतनापुरी रामसीतासौमित्रिहेतवे गोकर्णयक्षेण कृतास्ति । अत्र दयानिधी रामो दीनेभ्योऽर्थं ददाति, अत्र च यो यो दुःस्थः समाययौ सः सर्वः कृतार्थीभूतोऽस्ति । सोऽपि समिद्भारं त्यक्त्वा तत्पदाब्जयोः पतित्वा ऊचे, हे अनघे ? मया रामः कथं दृष्टव्यस्तन्मे शंस । साप्यवादीदत्रपुर्या द्वारचतुष्टयमस्ति, नित्यं च यक्षे रक्ष्यतेऽमुत्र प्रवेशो हि दुर्लभोऽस्ति । अत्र पूर्वद्वारे यच्चैत्यमस्ति यथाविधि तद्वंदित्वा श्रावकीभूय यासि चेत्तदाप्रवेशं लभसे । तद्गिराऽर्थार्थी कपिलः साधूनामन्तिके ययौ सः तान् साधूनभ्यवंदत तेभ्यो धर्मञ्चाशृणोत् । तत्र सः लघुकर्मत्वाद्विशुद्धः श्रावकोऽभवत्, ओको गत्वा धर्ममाख्याय भार्याञ्च श्राविकां व्यधात् । आजन्मदौस्थ्यदग्धौ तौ रामाद्धनमर्थयितुं रामपुरी मुपेयतु स्तच्चैत्यं प्रणेमतुश्च । अथ राजवेश्म प्रविश्य मैथिलीरामलक्ष्मणानुपालक्ष्योच्चै र्दत्ताक्रोशान् स्मरन्सः द्विजो बिभाय । तं नंष्टुमनसं ज्ञात्वा सानुक्रोशः सौमित्रि रब्रवीत्, भो द्विज ? मा भैषीः अर्थी चेदेहि

भ्रांतवांतनं मरुग्रामनामानं ग्राम मासदत् । तत्र सीतायां पिपासितायां सत्यां सलक्ष्मणो रामः कोपनस्य कपिलस्याग्निहोत्रिणो गृहे ययौ । सुशर्माख्या ब्राह्मणी च तेभ्यः पृथगासन मदात् स्वयश्च स्वादु शीतलं सलिलं पाययामास ।

तदा दारुणः पिशाच इव कपिल आगात् तानुपविष्टांश्च निरीक्ष्य रुष्टः सन् गेहिनी मभाषिष्ट ।

मम वेश्मनि मलिनानामेतेषां प्रवेशो हे पापीयसि ? त्वया किं दत्तः, अग्निहोत्रमशुचीकृतम् ॥

एवमाक्रोशिनं क्रूरं विप्रं रामानुजः क्रुधोद्धृत्य करीव दिवि परिभ्रमयितु मरमत । रामोप्युवाच अस्मिन्कीट-मात्रके को नाम कोपोऽस्ति हे मानद ? विब्रुवंत मप्यमुं द्विजब्रुवं मुंच । रामाज्ञया च सौमित्रि स्तं द्विजं शनैर्मुमोच । ससीता लक्ष्मणो रामस्तु तद्गृहान्निर्जगाम । गच्छन्तस्ते क्रमादपरं महदरण्यं प्रापुः कज्जलश्यामजलदः कालश्च समुपाययौ । अब्दे वर्षति सति काकुत्स्थो वटतरो रधस्तस्थौ वर्षाकालमत्रैव वटे नयाम इति चावदत् । तद्वच आकर्ण्य तन्न्यग्रोधाधिदैवतमिभकर्णाभिधो यक्षो गोकर्ण स्वप्रभुं ययौ । तं प्रणम्येत्यभाषिष्ट हेस्वामिन् कैश्चिद्दुःसहतेजोभि स्ततो निजावासाद्वटादह मुद्वासितोऽस्मि । तद्धे प्रभो ! अत्राणस्य मम पारत्राणं कुरुष्व, तेहि सकलां प्रावृषं मद्वटद्रुमे स्थास्यन्ति । विचक्षणो गोकर्णोऽप्यवधि ज्ञात्वेति चख्यौ, गृहायाता वेता वष्टमौ रामशार्ङ्गिणा वच्यौं । इत्युक्त्वा तत्रैव निशि नवयोजनविस्तृतां द्वादशयोजनायामां धनधान्यादिपूरितामुत्तुंग-वप्रप्रासादां भांडपूर्णापणावलिं रामपुरीं नाम पुरीं, सोऽमरो रामायाकृत । प्रातर्मंगलशब्देन प्रबुद्धोराम स्तं

तदा लक्ष्मणोरामसुवाच हे आर्य ? यावदह ममून् म्लेच्छान् शुन इव विद्रावयामि तावदिहैवार्यया सह तिष्ठ ।
इत्युक्त्वा लक्ष्मणो धनुरधिज्यं कृत्वाऽनादयत् तन्नादान्म्लेच्छाः सिंहनादाद्द्विपाइवात्रासयन् । शरमोक्षो दूर
तोऽस्ति परं पूर्वं चापनादोऽप्यसह्योऽस्ति, इत्थं विमृश्य सः म्लेच्छराजो राम मुपाययौ । विमुक्तशस्त्रो दीनास्यः
सः स्यन्दनादवतीर्य सौमित्रिणा क्रुधेक्षितो रामभद्रं नमश्चक्रे । सोऽवोचत् हे देव ! कौशाम्ब्यां पुर्यां वैश्वानरो
द्विजोऽस्ति, सावित्री नाम तत्पत्नी तत्सुतो रुद्रदेवोऽस्मि । आजन्मक्रूरकर्मत्वात्तस्करः पारदारिकः पापोऽहं
तत्किमपि कर्म नास्ति यन्नाचरामि । अथैकदाऽहं खात्रमुखे प्राप्तो राजपुरुषै राजशासनाच्छुलां
समारोपितुं नीतश्च । तदा छगः उपशूनमिवोपशूलं नीतो दीनोऽहं श्रावकवणिजा दृष्टः दंडश्च दत्वामोचितः ।
भूय श्चोरिकां मा कार्षी रित्युदीर्य महात्मना तेन वणिजा विसृष्टोऽहं तं देशं त्यक्तवान् । भ्रमन्निमां पल्लीमागा
मिह च काक इत्यनयाऽऽख्यया ख्यातः क्रमात् पल्लीपतित्वमिद मासदम् । इह स्थितश्च लुंटाकैः पुरादिकं
लुंटयामि, स्वयं गत्वा वन्दे धृत्वा नृपानप्यानयामि । हे स्वामिन् ! व्यन्तर इव तव वश्योऽस्मि किंकरोऽह मेपः
किं करोमि ? ममाऽविनयं सहस्व । वालिखिल्यं विमुंचेति रामेणोक्तः सः किराटराट् तं मुमोच वालिखिल्यो-
ऽपि राघवं नमश्चक्रे । रामाज्ञया च काकेन सः पुनः कूवरं निन्ये, पुंवेषां निजां सुतां कल्याणमाला मपश्यच्च ।
अथ तौ कल्याणमालिकावालिखिल्यौ मिथोऽखिलं रामलक्ष्मणवृत्तान्त मकथयताम् । काकोऽपि स्वां पल्लीं
ययौ, ततोनिर्गतो रामोऽपि विन्ध्याटवी मतिक्रम्य तापीं महानदीं प्राप । अथ तापी मुत्तीर्य क्राम न्राम स्तद्देश-

तत्रायं वालो राजाऽस्तु । क्रमेण वर्धमानाहं मूलात्पुंवेपधारिणी मातृमंत्रिजनं मुक्त्वाऽपरै रनुपलक्षिताऽस्मि । कल्याणमालाख्या प्रथितासती राज्यं करोमि मंत्रिणां मंत्रसामर्थ्या दलीकेऽपि सत्यता स्यात् । पितृमुक्तये म्लेच्छानां भुरि द्रविणं यच्छामि, त एते द्रव्यं तु गृह्णन्ति, पितरं तु न मुंचन्ति । तत्प्रसीदत, प्राक् सिंहोदराद्यथा वज्रकर्णो नृपो मोचित स्तथाऽधुना तेभ्यो मे तातं मोचयत ।

रामोऽप्युवाच पुंवेपैव स्वराज्यं प्रशासती तिष्ठ । यावद्गत्वा म्लेच्छेभ्य स्त्वत्पितरं मोचयामः । महाप्रसाद इति पुंवेपधारिणी सा स्त्री ऊचे । सुबुद्धिमंत्री तु लक्ष्मणोऽस्या वरोऽस्त्वित्यूचे । राघवोऽप्यब्रवीत् वयं देशान्तरं यास्यामो निवृत्तेपु सत्सु तातादेशाल्लक्ष्मणः परिणेष्यति । इति प्रतिपद्य काकुत्स्थ स्तत्र दिनत्रयं तस्थौ, निशाशेषे सुप्तजने ससीतालक्ष्मणो ययौ । सापि प्रात जानकीरामलक्ष्मणानपश्यंती विमनाः सती स्वंपुर मगात् तथैव तु राज्यं चक्रे । रामोऽपि क्रमेण नर्मदांप्रापोत्ततार च पथिकैर्वार्यमाणोऽपि विन्ध्याटव्यां विवेश च । तत्रादौ दक्षिणदिशि कंटकिद्रुस्थितो द्विको विरसं ररास, क्षीरद्रुस्थोऽन्यः पुनर्मधुरं ररास । तथापि रामस्य विपादो नाभुत् हर्पश्चवा नाभूत्, शकुनं चाशकुनञ्च दुर्वला गणयन्ति हि । अग्रतो गच्छन् सः आगच्छनुदायुधं देशघाताय निर्गत मसंख्येभरथाश्वीयं म्लेच्छसैन्यं ददर्श । तत्र युवा स्वच्छन्दवृत्तिः सेनापतिः सीतां दृष्ट्वा स्मरातुरः सन् स्वान्म्लेच्छानुच्चकैरेवमादिशत् । अरेरे ! एतौ पथिकौ नाशयित्वा विनाश्य वा एतां वरस्त्रियं हृत्वा मत्कृते समानयत । इत्युक्ता स्ते शितैः शरप्रासप्रायैः प्रहरणैः प्रहरन्त स्तेनैव सह राघवं प्रत्यधावन्त ।

वः सुताः परिणेष्यामि, इदानीं तु वयं मलयाचले गत्वा स्थास्यामः । ओमित्युक्त्वा वज्रकर्णसिंहोदरौ नृपौ स्थितौ, रामभद्रेण विसृष्टौ च निजनिजं पुरं ययौ । राम स्तत्र निशां नीत्वा ससीतालक्ष्मणः प्रगे गच्छन् क्रमेण कमपि निर्जलं देशं संप्राप । सीतायां पिपासितायां तरोस्तले विश्रान्तायाञ्च सत्याम्, अथरामाज्ञया सौमित्रि र्जलमानेतु मभ्यगात् । गच्छन् सः, लक्ष्मणोऽनेकांभोजमंडितं दूरादानंदजननं वयस्यमिव वल्लभ मेकं सरो ददर्श । तदा च कूवरपूराधिभूः कल्याणमालाख्यो नृपः क्रीडितुं तत्रागाल्लक्ष्मणञ्च प्रेक्षांचक्रे । सः भिदुरात्मकैः कामबाणैः सद्योऽपि विभिदे, नत्वा च लक्ष्मण मूचे, मे भोजनातिथि र्भवेति । लक्ष्मणो मान्मथं विकारं देहलक्षणानि च निरीक्ष्य दध्यौ एषा नारी कारणेन पुंवेषाऽस्ति । इति ध्यात्वा सौमित्रि रुवाच इतश्चास्मिन्नदूरदेशे सभार्यो मम प्रभुरस्ति, तेन विना नहि भुंजे । तत स्तेन भद्राकारैः प्रियंवदैः प्रधानपुरुषैः स मभ्यर्थ्य ससीतोऽपि रघूद्वह स्तत्रानिन्ये । भद्रधीः सः कूबरपती रामभद्रं मैथिलीमपि नमस्यत् तयोःकृते तत्कालं पटकुटीश्च न्यवेशयत् । तत्र सः स्त्रीवेषो निःपरिच्छदः सः एकमंत्रिणा सह युक्तः कृतस्नानभोजनं राम मुपाययौ लज्जानतमुखीं तां राघव इति निजगाद हे भद्रे ? पुरुषवेषेण स्त्रीभावं कुतो निह्नुषे । अथ कूबरपति रुचे, अस्मिन्कूबराख्ये महापुरे वालिखिल्यो नाम राजा चास्य प्रिया तु पृथ्वी नामाऽभूत् । सा चापन्नसत्वा जज्ञे, अन्येद्युरवस्कंदागतै र्म्लेच्छमहाभटैः सः वालिखिल्यो नियम्य निन्ये । पश्चाच्च सा पृथिवी देवी, तनयां प्रासूत, सुबुद्धिना सचिवेन च पुत्रोऽजनीति चाघोषि । तत्पुत्रजन्मज्ञापितः सिंहोदरोऽवदत्, वालखिल्यागमावधि

नोन्मूल्य विद्विष स्ताडयामास । अथ महाभुजः सौमित्रि रभिस्थितं सिंहोदरं पशुमिव तद्वाससा कंठेऽवघ्नात्
तत्र दशांगपुरवासिना माश्चर्यं पश्यतां सताम्, लक्ष्मणो गामिवाकृष्य तं रामसंनिधौ निन्ये । सिंहोदरो रामं
दृष्ट्वा नत्वा चेदमभापत, हे रघुकुलोद्वह ? त्व मिहायात इति मया न ज्ञातः । अथवा हे देव ? इदं मत्परीक्षा-
कृते कृतं किम् ? यदि यूयं छलपरा स्तर्हि नः माणितेनापि कृतम् ।
मे अज्ञानदोपं क्षमस्व यत्कर्तव्यं तदादिश, शिश्ये गुरोरिव भृत्ये कोपः शिक्षामात्रकृते भवति । वज्र-
कर्णेन संधेहीति रघूद्वह स्तमादिदेश, सिंहोदरोऽपि तां वाचं तथेति मत्यपद्यत । वज्रकर्णोऽपि रामभद्रस्य शास
नात् तत्रागात् विनयेन पुरोभूय कृतांजलि रुवाच च । स्वामिनौ वृपभस्वामिवंशजौ रामशार्ङ्गिणौ, युवां मया
दिष्ट्या दृष्टौ किन्त्विह चिराज्ज्ञातौ । सर्वस्य भरतार्धस्य महाभुजौ युवां नाथौ अह मन्ये च राजानो युवयो
रेव किंकराः स्मः । हे नाथ ! एन मत्मभुं मुञ्च शाधि च, यथा अतःपरमसौ मेऽन्यप्रणामाभिग्रहं सदा सहते ।
अर्हंतं विना साधुं च विनाऽपरो मया न नमस्य इति मीतिवर्धनान्यहर्षे रभिग्रहोऽग्राहि । रामभ्रूसंज्ञया सिंहोदर
स्तत्मत्यपद्यत, सौमित्रिणा विमुक्तः सन् वज्रकर्णश्च सस्वजे । सिंहोदरोऽपि परया मीत्या सोदरायेव वज्रकर्णाय
राघवसाक्षिकं राज्यार्धं दत्तवान् । ते चावंतिपार्थिवात् श्रीधराकुंडले याचित्वा दशांगपुरपार्थिवो विद्युदंगाया
दत्त । वज्रकर्णः सौमित्रये अष्टौ स्वकन्यकाः ददौ, ससामन्तः सिंहोदरः पुनः कन्याशतत्रयं ददौ । अथलक्ष्मण
ऊचे संप्रति कन्या वः पार्श्वे सन्तु यतो नो भ्राता भरतः पित्रा राज्ये निवेशितोऽस्ति । समये अंगीकृतराज्यो

यन्मया दैववशादेवकल्पस्त्वं दृष्टोऽसि । करुणानिधी रघूद्वह एवमुक्तवतस्तस्य दरिद्रस्य रत्नस्वर्णमयं सूत्र मदत्त । तं विसृज्य ततो रामो दशांगपुर मीयिवान् वहिश्चैत्ये चन्द्रप्रभं नत्वा तत्राप्यवास्थित । सौमित्री रामा देशेन क्षणात्तत्पुरं प्रविश्य वज्रकर्णान्तिकेऽगच्छत्, ह्यलक्ष्याणामियं स्थिति रस्ति । वज्रकर्णः सदाकारं तमुत्तम नरं ज्ञात्वा ऊचे, हे महाभाग ! मम भोजनातिथ्यभाग् भव । रामानुजोऽप्यभिदधे, मम प्रभुः सकलत्रो वहि रुद्याने स्थितोऽस्ति, अहमादौ तं भोजयामि । ततो वज्रकर्णो महीपतिः सौमित्रिणा सार्धं भूयिष्ठव्यंजनं भोज्य मुपराम मनाययत् । भुक्तोत्तरे चानुशिष्य प्रेपितः सौष्ठवी लक्ष्मणो ययौ, अवन्तिनृपति मिति जगाद । दासी कृताशेषमहीपती राजा दाशरथि र्भरतो वज्रकर्णेनसह ते विरोधं निषेधति । सिंहोदरोऽपि प्रत्यूचे भरतोऽपि हि भक्तानां भृत्यानामेव प्रसादं कुरुते अन्यथा पुनः किमपि न कुरुते । दुराशयोऽयं वज्रकर्णो मत्सामंतोऽस्ति माञ्च न नमति तेनास्य कथं प्रसीदामि वद । भूयोऽपि लक्ष्मणोऽवोचदसौ त्वयि नाविनयी, किन्त्वस्या प्रणा- मसंधा हि धर्मानुरोधतो जज्ञे । अयं वज्रकर्णो मा कुप्यो भरतशासन मान्यं यतो भरत आसमुद्रान्तमेदिन्याः शासिताऽस्ति । क्रुद्धः सिंहोदरः स्माह भरतो नृपः कोनाम यो वज्रकर्णगृह्यः सन् वातुलो मा मदो वदति । स्फुरदोष्ठदलः कोपारुणाक्षः सौमित्रि रवदत् रे ! भरतं न जानासि एपोहं मंक्षु तं ज्ञापयामि । युद्धे उत्तिष्ठ- स्व सर्वात्मना संवर्मितो भव, मद्भुजाशनिताडितो गोधेव न भवसि । अथ ससैन्यः सिंहोदरो भस्मच्छन्न- हुताशनं परिस्पष्टुं बाल इव सौमित्रिं हन्तु मुद्यतः । लक्ष्मणोऽप्युदस्तदंडोऽन्तक इव नालवद्गजालान भुजे-

कश्चिदप्यर्थो नास्ति तेनाहं ते एवापहरामि । इति साहसिकोऽहं खात्रेण नृपौकस्यागाम् । तदा श्रीधरा सिंहो-दर मिति पृच्छंती मया शुश्रुवे, यथा—हे नाथ ! उद्विग्न इवेदानीं निद्रां कथं न लभसे । सिंहोदरोऽवदत् हे देवि ! प्रणामविमुखो वज्रकर्णो यावन्न मार्यते तावन्मम निद्रा कुतः । हे प्रिये ? ससुहृत्पुत्रबान्धव ममुं मातर्हनि-ष्यामि तावद्विनिद्रस्यापि मे इयं रजनी यातु, तदाकर्ण्य त्यक्तकुंडलचौरिकोऽहं साधर्मिकवात्सल्यादिह तवा-ख्यातुं त्वरितमागमम् । वज्रकर्ण स्तदाकर्ण्य पुरीं सद्य स्तृणकणाधिकां व्यधत्त, अंबरे परचक्ररजोऽपश्य च । क्षणाच्च सिंहोदरेण सबलै र्बलै रहिमि श्चन्दनद्रुरिव विष्वक् तद्दशांगपुर मावेष्टयत । अथ सिंहोदरो दूतेन वज्रकर्ण मदोऽवदत्, हे मायिन् त्वया प्रणाममायया चिरं वंचितोऽस्मि । तेनांगुलीयेन विना मामागत्य नम-स्कुरु, अन्यथा सकुटुंबस्त्व मद्य यमवेश्म यास्यति । वज्रकर्णोऽपि प्रत्यूचे ममायमभिग्रहोऽस्ति, यदर्हतं साधुं विनाऽपरं नहि प्रणमामि । अत्र पौरुषाभिमानो नास्ति किन्तु धर्माभिमानिताऽस्ति, तस्मान्मम नमस्कारं विना यथारुचि सर्वं मादत्स्व । मह्यं धर्मद्वारं देहि यथा धर्माय कुत्रचिदन्यत्राहं गच्छामि, मे धर्म एव धनमस्तु । वज्रकर्णेन इत्युक्ते सति सः तन्नहि मत्यपादि हि मानिनो जातु धर्ममधर्मं वा नहि गणयन्ति । सवज्रकर्णं तत्पुरं रुद्ध्वा सिंहोदरो मुष्णन् बहिः स्थितोऽस्ति, तद्भयादयं देश उद्वसोऽस्ति । अहं च सकुटुंबोऽपि अस्मिन्नाज-विग्रहे, नष्टोऽस्मि, अद्याम्रसौधानि दग्धानि, मम च जीर्णा सा कुटी च दग्धा । अहं तु शून्येभ्य श्शून्यवेश्म भ्यो वेश्मोपकरणान्यानेतुं क्रूरगेहिन्या प्रेषित स्तन्मुखो यामि । तस्या दुर्वचसोऽप्येतन्नाम शुभफलमभूत्,

प्यूचे खाद्यपेयादिवर्जितेऽत्रारण्ये किं नाम तवात्महितं संपद्यते । मुनि स्तं योग्यं ज्ञात्वा आत्महितं धर्मं जगौ सुधीः सोऽपि तत्पुरः सद्यः श्रावकत्वं मपेदे । स तदग्रे अर्हन्तं देवं विना साधूंश्चविनाऽपरं न नंस्यामीति दृढ मभिग्रहं जग्राह । ततश्च सः तं वंदित्वा दशांगपुरं पुर मगात्, श्रावकत्वञ्च पालयन्निदं चिन्तयामासिवान् । अभिग्रह स्तावन्मयाऽन्यो न नमस्कार्य इति तेनानमस्कृतः सिंहोदरश्च मे वैरी भविष्यति । एवं विमृश्यो[3]त्पन्न-तिभः सः स्वांगुलीये मुनिसुव्रतनाथस्य मणीमयीं मतिमां सन्यवीविशत् । स्वांगुलीयस्थं तद्विंबं नमन् सः सिंहोदरं नरपतिं वंचयतेऽस्म हि वलीयसि मायैवोपायः । तं वज्रकर्णवृत्तान्तं कोऽपि खलः सिंहोदरमहीपते राचचक्षे, खलाः खलु सर्वंकषा भवन्ति । सिंहोदरो महाद्रिरिव निःश्वसन्नकुप्यत्, तत्कोपं वज्रकर्णाय कोऽप्यागत्य शशंस । मयि तस्य कोप स्त्वया स्फुटं कथं ज्ञात इति वज्रकर्णेन पृष्टः सन् स पुमानित्याचख्यौ कुंदपुरे पुरे श्राद्धः समुद्रसंगमोनाम वणिगस्ति यमुना नाम तत्पत्नी चास्ति, अहं तत्सुतो विद्युदंगोऽस्मि । क्रमाच्च यौवनं प्राप्तः क्रयविक्रयहेतवे भांडमादायाह मुज्जयिन्या मागमम् । तत्र नाम्ना कामलतां वेश्यां मृगीदृश मपश्यम्, सद्यश्च कामवाणानामहमास्पद मभूवम् । एकांनिशां वसामीति तया कृतसमागमोऽहं रागेण यथा वागुरया मृग स्तथा वद्धः । आजन्म कष्टेन यन्मतपित्रा वहुधनमर्जितं तत्तु तद्वशेन मया पड्भि र्मासै र्विना-शितम् । सा वेश्या अन्यदा सिंहोदरमहिष्याः श्रीधराया हि ये कुंडले तादृशे मह्यं त्वं देहीति मामूचे । मे

३ उत्पन्ना प्रतिभा यस्य, ४ सर्वं कषति नाशयन्ति.

आसादय त्कतिपयै र्दिवसै रवन्तिदेशैकदेशगवनिस्थितदेवदेश्यः ॥

इत्याचार्य श्रीहेमचन्द्र विरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि अन्वयात्मक गद्य-रचनायां रामलक्ष्मणोत्पत्ति परिणयनवनवासगमनो नाम चतुर्थः सर्गः समाप्तः ॥

## अथ पञ्चमः सर्गः

अथ गुह्यकानामिश्वर इव रामोऽध्वनि श्रांतां जानकीं विश्रमयितुं वटस्य मूले न्यपदत् । रामस्तं देशं सर्वतो वीक्ष्य सौमित्रिमभ्यधात् यदयं देशः कस्यापि भीत्याऽधुनैवोद्वसोऽभवत् । इहाऽशुष्ककुल्यान्युद्यानानि सेक्षव इक्षुवाटाश्च, सान्नानि च खलानि नूतनोद्वसता माहुः । तदा च रामो गच्छन्तमेकं जनं पप्रच्छ, हे अनघ ! अयं देशः किमुच्चचाल त्वं च क्व चलितोऽसि । सोऽप्युचेऽस्मिन्नवन्तिदेशे अवन्त्यां पुरि द्विपां सिंह वहुःसहः सिंहोदरो नाम नरेश्वरोऽस्ति । अस्मिन्विषये तस्य च [1]प्रतिवद्धो महामति र्दशांगपुरनायको वज्रकर्णाख्यः सामंतोऽस्ति । [2]पापर्ध्यां गतः सोऽन्येद्यु र्वनमध्ये नामतः प्रीतिवर्धनं कायोत्सर्गस्थं महामुनि मैक्षिष्ट । अमुत्रारण्ये द्रुम इव किं तिष्ठसीति तेनानुयुक्तः स मुनि रात्महितार्थ मित्यवदत् । वज्रकर्णो भूयोऽ-

---

१ अधीनः, २ मृगयायाम्,

हर । यद्वा निवृत्यायोध्यायां च गत्वा राज्यश्रियं श्रय, हे भ्रातः ? एवमपि मे कौलीनशल्यमपयास्यति । जगत्मित्रं हि सौमित्रि स्तवामात्यो भविष्यति, अयं जनः (भरतः) प्रतीहारो भविष्यति, शत्रुघ्नस्त्वातपत्रभृद्भ विष्यतिः । भरत एवं ब्रुवाणे सति कैकेय्यपीदमब्रवीत्, हे वत्स ! भ्रातृवचः कुरु त्वं सदा मातृवत्सलोऽसि अत्र त्वत्पितु र्दोषो नास्ति भरतस्य च दोषो नास्ति किन्तु स्त्रीस्वभावतः सुलभः कैकेय्या एवायं दोषोऽस्ति । कौलट्यवर्जा ये केऽपि पृथक् पृथक् स्त्रीणां दोषा स्तेसर्वेऽपि दोषखनाविव मयि कृतसंस्थानाः सन्ति । पत्युः सुतानां तन्मातृजनस्य च मया यद्दुःखाकरंकर्म कृतं तत्सुतोऽसीति सहस्व । इत्यादि साश्रुजल्पन्तीं तां लक्ष्मणाग्रज ऊचे, तातस्य सूनु र्भूत्वाऽहं प्रतिज्ञातं किं त्यजामि ? । तातेनैतस्मै राज्यं दत्तं मया चानुमतं तज्जीवतोरपि द्वयो र्वाक् कथकार मन्यथाऽस्तु, तत् द्वयोरपि निदेशतो भरतो राजाऽस्तु, हेऽम्बिके ! मम तात इव अस्याह मनुल्लंघ्योऽस्मि । काकुत्स्थ इत्युक्त्वोत्थाय सीतानीतजलैः स्वयं सर्वसामंतसाक्षिकं भरतं राज्येऽभ्यषिंचत् । ततो रामः कैकेयीं प्रणम्य तथा भरतं संभाष्य विससर्ज दक्षिणां ककुभं प्रति च प्रतस्थे । भरतोऽयोध्यां ययौ तत्र चाखंडशासनः पितु र्भ्रातुश्च शासनात् राज्यभारमुरीचक्रे । अथ दशरथोऽपि महामुनेः सत्यभूतेः पार्श्वे भूयसा परिवारेण समं दीक्षा मुपाददे । स्वभ्रातृवनवासेन हृदि शल्यितः सुधी र्भरतोऽर्हत्पूजोद्यतो राज्य मरक्षत् ।

सौमित्रिमैथिलसुतासहितोऽथ रामो गच्छन्नतीत्य गिरि मध्वनि चित्रकूटम् ।

नामयोग्यानस्मान्धिक् इति भूरिशो रुदन्तो बाष्पांभःस्तिमितांशुकास्ते न्यवर्तन्त। ततः ससीतालक्ष्मणो रामः सास्रै स्तटस्थितै स्तैः प्रेक्षितो दुस्तरां तां तरंगिणी मुत्ततार। अथ रामे दृक्पथातीते सति सामन्ताद्याः कथंचनायोध्यां नगरी मीयु स्तद्राज्ञे च व्याचचक्षिरे। राजाऽपि भरत मुवाच रामलक्ष्मणौ नायातौ तन्मम राज्यं गृहाण, दीक्षाविघ्नाय च मास्म भूः। भरतोऽप्यवददहं कथंचनापि राज्यं नादास्ये स्वयं गत्वा निजमग्रजं प्रसाद्य आनेष्ये। तदा च कैकेयी आगात् राजानं चेत्यब्रवीत् हे सत्यप्रतिश्रव! त्वया भरताय राज्यं दत्तमस्ति परमेषो विनयी ते सुतो राज्यं न गृण्हाति, अन्यासां च मातॄणां ममापि च महद्दुःखं भवति। त्वयि सपुत्रेऽपि सति मयाऽविमृश्य विधायिन्या पापीयस्या इदं राज्य मराजकं कृतम्। कौशल्यायाः सुमित्रायाः सुप्रभायाश्च दुःश्रवं रुदितं शृण्वंत्या मम हृदयं द्विधा भवति। तद्भरतेन समं गत्वा तौ रामलक्ष्मणौ वत्सावनुनीय समानेष्यामि, हे नाथ मामनुजानीहि। अथ प्रहृष्टेन दशरथेन राज्ञाऽऽदिष्टा सा सभरतामात्या कृतत्वरा रामं प्रति ययौ। कैकेयी भरतौ षड्भि र्दिनै स्तद्वनं प्रापतुः, जानकीरामलक्ष्मणांश्चद्रुमूलेऽपश्यताम्। रथादुत्तीर्य हे वत्स! हे वत्स! इति भाषिणी कैकेयी प्रणमन्तं रामभद्रं मूर्धन्योपरि चुचुंबे। पादांबुजयोः प्रणमंतौ वैदेहीलक्ष्मणावपि बाहुभ्यामुपर्याक्रम्य तारंतारं सा रुरोद। उदश्रुदृक् भरतोऽपि रामपादौ नमश्चक्रे, मूर्च्छं त्खेदमहाविषो मूर्च्छांश्च प्रत्यपद्यत। रामभद्रेण बोधितो विनयी भरतोऽवदत्, अभक्तमिव मां त्यक्त्वा त्वमिह कथमागमः। भरतो राज्यार्थी इति मातृदोषेण यो ममाऽपवादोऽभवत्, आत्मना सह मां नयन् तमपवादं

न्यागमत् । विकस्वरमुखांबुजाः सोद्यमा स्त्रयोऽपि विलासोपवनायेव वनवासाय पुर्या निर्ययुः । प्राणै रिव मैथिलीरामलक्ष्मणै विंनिर्यद्भिः सद्भि र्नगर्यां नरा नार्यश्च कष्टां दशां लेभिरे । क्रूरकैकेयीविध्यो राक्रोश-दायिनो नागरा गरीयसाऽनुरागेण वेगात्तानन्वधावन्त । सान्तःपुरपरिच्छदो बाष्पायमाणो राजाऽपि स्नेह रज्जुभि राकृष्टो द्रुतं राम मन्वसरत् । राज्ञि, जने च द्रुतं रामभद्रानुगामिनि सति अयोध्या नगरी समंतत उद्वसेव समभूत् । अथ काकुस्थोऽवस्थाय पितरं जननी रपि विनयसारया गिरा कथमपि न्यवर्तयत् । तथा सः यथोचितालापैः पौरानपि विसृज्य सीतासौमित्रिसहित स्त्वरितं ययौ । ग्रामे ग्रामे ग्रामवृद्धैः पुरे पुरे महे-भ्यैश्चावस्थातुं प्रार्थ्यमानोऽपि काकुत्स्थो न ह्यवास्थित ।

इतश्च भरतो राज्यं नाददे किन्तु प्रत्युत स्वभ्रातृविरहासहः कैकेयीं स्त्रञ्च चुक्रोश । परिव्रज्योत्सुको राजा राज्याय सहलक्ष्मणं राम मानेतुं सामंतान् सचिवानपि प्राहिणोत् । ते च पश्चिमायायिनं रामं त्वरित मिव प्रापु र्भक्त्या राजाज्ञाख्यानपूर्वकं निवृत्यै चाभ्यधुः । दैनै स्तैः प्रार्थ्यमानोऽपि राघवो न न्यवर्तत, महतां हि प्रतिज्ञा त्वद्रिपादवन्न चलति । राघवेण मुहु र्मुहु विसृज्यमाना अपि ते तन्निवर्तने कृताशाः सन्तः सर्वे-ऽपि सहैव चेलुः । अथ ते जानकीरामलक्ष्मणाः उदग्रश्वापदपदं निर्मानुष्यां घनद्रुमां पारियात्राटवीं प्रापुः । ते च पथि गंभीरावर्तभीषणां पृथुप्रवाहां मभिधानेन च गंभीरां नदीं समीक्षांचक्रिरे । तत्र स्थित्वा रामः सामंतादीनिदं वचोऽवदत्, भोः ! सामंता ? इतःस्थानान्निवर्तध्वम् ह्यतःपरमध्वाऽतिकष्टोऽस्ति । रामपादा-

दध्यौ। तातः प्रकृत्यापि ऋजुः स्त्रियस्तु प्रकृत्याऽनृजवः अन्यथा सा इयच्चिरं वरं धृत्वा कथं याचते। एतावता महीभुजा भरताय राज्यं दत्तं, स्वस्य ऋण मपनीतं नश्च पितॄणभी गंता। निर्भयोऽहं साम्प्रतं निजक्रुधो विरामाय कुलपांसना द्भरता द्राज्यं हृत्वा रामे न्यस्यामि किम्? अथवाऽसौ महासत्वो रामस्तृणवदुज्झितं राज्यं नादास्यते तदा तु तातस्य दुःखं भविष्यति। तातस्य दुःखं मास्म भूः, भरतोऽपि हि राजाऽस्तु, अहं तु पदातिवत् रामपादाननुगमिष्यामि सौमित्रि रेवं विचिंत्य भुपतिं नत्वाऽऽपृच्छय च सुमित्रामाप्रष्टुं ययौ, नत्वा चैव मवोचत। रामो वनं गमिष्यति तमहमनुगमिष्यामि, मर्यादाब्धि मार्यं विना लक्ष्मणः स्थातुं न क्षमः। सुमित्रापि कथंचिद्धैर्य मालम्ब्येदमब्रवीत्, हे वत्स! त्वं मे वत्सोऽसि, यज्ज्येष्ठ मनुगच्छसि तत्साधु। अथ मां नमस्कृत्य वत्सो रामभद्रश्चिरं गतस्तेऽतिदूरे भवति, तद्वत्स! मा विलंवस्व। हे ऽम्ब! इदं साधु, मदंवासीति तामुदीर्य नत्वा च लक्ष्मणोऽपराजितां प्रणंतु मगच्छत्। तां नत्वा सौमित्रि रुवाच, आर्यएकाकी चिर मगात्, अहं त्वार्यानुगमनोत्सुकस्त्वामाप्रष्टु मागाम्। उदश्रुः कौशल्या ऊचे मंदभाग्यास्मि, हा! हताऽस्मि, हे वत्स! यत्त्वमपि मां मुक्त्वा प्रस्थितोऽसि। हे लक्ष्मण! रामविरहार्दितचेतसो ममाश्वासनकृते त्वमेकोऽत्रावतिष्ठस्व, मा प्रतिष्ठस्वः। लक्ष्मणोऽप्येवं प्रत्यूचे, ननु रामस्य माताऽसि, ततो हे मातः? सामान्ययोषितामर्हेणाऽधैर्येण कृतम्। मे वन्धु दुरे गच्छति तमहं द्रुत मनुयास्यामि, तद्देवि! विघ्नं मा कृथाः, सदाप्यहं रामनिघ्नोऽस्मि। अथ सौमित्रि स्तामित्युक्त्वा नत्वा च कार्मुकतूणभृत् सत्वरं सीतारामा वनुधा

हे मातः ! मत्पितुः पत्न्यसि ततःकातरस्त्रीजनोचितं किमिद मारब्धम् । एकाकी केसरिणीसुतो वनान्य-टितुं याति केसरिणीतु स्वस्थाऽस्ते मनागपि न ताम्यति । तातस्योच्चै र्ऋणमस्ति, अहं हि प्रतिपन्नवरोऽस्मि, मय्यत्रस्थिते च हे ऽम्ब तस्यानृण्यं कथं भवेत् । इत्यादियुक्तिवचनै रपराजितां बोधयित्वा तामन्याश्चजननी र्बोधयित्वा लक्ष्मणाग्रजो निर्ययौ । सीताऽपि दूराद्दशरथं नत्वा ऽपराजिता मुपेत्य नत्वा च रामानुगमनं प्रत्या देश मयाचत । अपराजिता देवी जानकीं क्रोड मारोप्य कवोष्णै र्नयनोदकै र्बालामिव स्नपयन्तीऊचे । हे वत्से ! विनयी वत्सो रामभद्रः पित्रनुज्ञया वनं प्रयाति नृसिंहस्य तस्यैतन्न दुष्करम् । त्वं त्वाजन्मोत्तमवाहनै र्देवीव लालिताऽसि, तद्धे वत्से ! पादचंक्रमणव्यथां कथं सहिष्यसे । सौकुमार्येण कमलोदरसोदरं तवांगं तापादिना क्लिष्टं सद्दाशरथे रपि क्लेशं कुर्यात् । स्वभर्तु रनुयानेनानिष्टकष्टागमेन च यान्त्या स्ते निषेधं कर्तुं नोत्सहे, अनुज्ञाञ्च कर्तुं नोत्सहे । मात रुत्फुल्लसरोरुहमिवाननं दधती निःशोका सीतापि अपराजितां नमस्कृत्योवाच । नित्यं पथि क्षेमंकरा मे भक्ति रथित्वदस्तु, एषाहं विद्युदंबुदमिव राम मनुयास्यामि । जनकात्मजा इत्युक्त्वा तां पुन र्नत्वा, आत्मारामा, आत्मानमिव लक्ष्मणाग्रजं ध्यायन्ती निर्ययौ । अहो, अद्य जानकी, अनया पतिभक्त्या पतिदेवतयोपितामत्यन्तमाद्योदाहरणं जज्ञे । अहो ! इयं सतीजनमतल्लिका सीता कष्टादभीता महता शीलेन स्वं कुलद्वयं पुनाति । इति शोकगद्गदया गिरा व्यावर्णयन्तीभिः पौरीभिः र्वनं यान्ती सीता कथमप्यैक्षि । रामं वनाय निर्यान्तं श्रुत्वा सपदि सद्यः संधुक्षितक्रोधवह्नि र्लक्ष्मणो हृदीदं

तद्धे तात ! कस्यापि वचसाऽन्यथा कर्तुं नार्हसि । राजाप्युवाच हे वत्स ! मत्प्रतिज्ञां मुधा मा कुरु, मया त्वन्मातु र्हि वरो दत्तश्चिरं च न्यासीकृतः । हे अनघ ! सोऽद्य कैकेय्या ते राज्यदानेन याचित स्तस्मा न्मम मातुश्चाज्ञामन्यथा कर्तुं नार्हसि । रामो भरतमित्यूचे यद्यपि ते गर्वो नास्ति तथापि तातं सत्यापयितुं त्वं राज्य मुद्वह, अथ कृतांजलि रश्रुभरितदृष्टि र्भरतः पादयोः पतित्वा गद्गदाक्षरं राममित्युवाच । महेच्छानां तातपादार्यपादानां राज्यं ददतामदः खलूचितं राज्यमाददानस्य मे तु नोचितम् । अहं तातस्य सूनु र्न किं वा आर्यस्यानुजो नास्मि किं सत्य मेवं गर्वं करोमि चेदेपो हं मातृमुखोऽस्मि । ततो रामो राजान मित्यूचे असौ भरतो मयि सति राज्यं नाऽऽदास्यते तस्मादहं वनवासाय यामि । इति रामो राजानमनुज्ञाप्य भक्तितश्च नत्वा भरते चोच्चै रुदति सति चापतूणवा न्निर्ययौ । दशरथो वनवासायगच्छन्तं सुतं दृष्ट्वा स्नेहकातरो भूयो भूयोऽतुच्छां मूर्छां ययौ । अथ रामोऽपराजितां देवीं नत्वा हे मातः ! यथाहं ते तनयस्तथैव भरतोऽपि ते तनयोऽस्तीत्यभ्यधात् । पिता स्वां संधां सत्यापयितुं तस्मै राज्यमदा तथापि मयि सत्येप नादत्ते तन्मया वने गन्तव्यम् । तत्सविशेपप्रसादया दृशा भरतं पश्येः, कदाचिदपि त्वं मद्वियोगेन कातरा मा भूः । तां गिर माकर्ण्य देवी मूर्च्छिता सती भुवि पपात, चेटीभि श्चन्दनांभोभिःसिक्तोत्तस्थावुवाच च । आः केनाहमेपा जीविताऽस्मि, मूर्छा हि सुखमृत्यवेऽस्ति जीवन्त्यहंरामविरहदुःखं कथं सहिष्ये । सुतो वनं व्रजिष्यति पतिश्च प्रव्रजिष्यति, एतच्छ्रुत्वाऽपियन्नदीर्णा कौशल्या त्वं वज्रमय्यसि । भूयोऽपि रामो जगाद,

जातसंवेगोऽनरण्यज स्तं वंदित्वा प्रविव्रजिषू रामे राज्य माधातुं गृहं ययौ । अथ दत्तालापसुधारसः पार्थिवो राज्ञीः, सुतान्, मंत्रिमुख्यां श्चाहूय, यथोचित्य मापप्रच्छे । तदा भरतो नत्वाऽऽबभाषे, हे प्रभो ! अहं त्वया समं सर्वविरति मुपादास्ये त्वां विना नहि अवस्थास्ये । अन्यथा हे स्वामिन् ! मम ह्यत्यन्तदुःसहे द्वे कष्टे, एकं न्वत्पादविरहोऽपरं संसारतर्पणम् । अथ तच्छ्रुत्वा कैकेयी अतःपरमिदं निश्चितं भावि, मे पति र्न सूनुश्च नेति ध्यात्वेदमब्रवीत् । हे स्वामिन् ! तत्र स्वयंवरोत्सवे तेन सारथ्यकर्मणा मह्यं त्वया स्वयं यो वरो दत्तः स्मरसि किम् ? । हे सत्यप्रतिश्रव नाथ ! मह्यं तमधुना प्रयच्छ, हि महात्मनां प्रतिज्ञा प्रस्तारोत्कीर्णरेखेव भवति । अथ दशरथोऽवददहं प्रतिपन्नं स्मरामि तस्मात् व्रतनिषेधनं विना यन्ममाधीनं तद्याचस्व । ततः कैकेयी ययाचे त्वं चेत्स्वयंप्रव्रजसि तर्हि स्वामिन् ! एतां विश्वंभरां भरताय प्रयच्छ । अद्यैवैषा मह्यं गृह्यता मिति तामभिधाय सलक्ष्मणं रामं समाहूय दशरथोऽवदत् । अस्याः सारथ्यतुष्टेन पूर्वं मया वरो दत्तः सोऽयं कैकेय्याऽधुना भरतराज्येन याचितः । तदा हृष्टो रामोऽप्यभाषिष्ट, यन्महौजसे मद्भ्रात्रे भरताय राज्यदानं मात्रा याचितं तत्साधु याचितम् । तातः प्रसादा न्मामिद मापप्रच्छे तथाप्यदो जनेऽविनयसूचनाकारणं दुनो ति । तुष्ट स्तातोऽप्येकवंदिनेऽदो राज्यं ददातु, निषेधेऽनुमतौ वा पत्तिमानिनो मे न स्वाम्यम् । भरतोऽप्यह मेवास्मि तवावा मुभावपि निर्विशेषौ, अतः परया मुदा राज्ये भरतोऽभिषिच्यताम् । इति रामवचःश्रुत्वा प्रीतिविस्मितो भूपति र्यावन्मंत्रिण आदिक्षत्तावद्भरतोऽब्रवीत् । हे स्वामिन्नादावपि मया सहव्रतादान मर्थितं

रत्नमालिनः खेचरेशितु विंद्युल्लताभिधानायां सधर्मिण्यां महाभुजः सूनुः सूर्यंजय इति नाम्ना त्वं तनयोऽभवः। अन्यदा सः रत्नमाली दृप्तं विद्याधरेश्वरं वज्रनयनं विजेतुं सिंहपुरं पुरं ययौ। ततः सः हठात् सवाल वृद्धं सस्त्रैणं सपशूपवन सिंहपुरं पुरं ज्वालयितु मारेभे। तदाऽभिधानेनोपमन्योः पूर्वजन्मपुरोधसो जीवो देव एत्यैवमब्रवीत्। भो! भो! महानुभाव! एव मुत्कटं पापं मा कृथाः त्वं पूर्वजन्मनि भुरिनंदनो नाम राजाऽभूः। तदा विवेकतस्त्वं मांसनिवृत्तिं प्रत्यज्ञासीः तेनोपमन्युना पुरोहितेनोक्तश्च भग्नवान्। सः पुरोधा अन्यदा स्कंदनाम्ना पुंसा निपातितो गजश्चाभूत्, भूरिनंदनभूभुजा गृहीतश्च। अथ रणे हतश्च स इभो भूरिनंदनभूपते र्गन्धाराया पत्न्यां नाम्ना अरिसूदनः सूनु रभूत्। संजातजातिस्मरणः प्रव्रज्य विपद्य च सोऽहं सहस्रारे कल्पे देवो जातोऽस्मि मां विद्धि। भूरिनंदनराजो विपद्य वनेऽजगरोऽभूत् दावेन दग्धः सः द्वितीयां नरकावनि मयासीत्। नरकेऽपि गत्वा मया सः प्राक्स्नेहात्प्रबोधितः तस्मादुद्धृत्य सः त्वमिह रत्नमाली पार्थिवोऽभूः। तदानीमिव संप्रति मां समत्याख्यानभंग मनन्तदुःखोदर्कं तत्पुरदाहं च मा स्म कृथाः। तद्वच आकर्ण्य रत्नमाली युद्धान्न्यवर्तत, राज्ये च [1]सूर्यनंदनं कुलनंदनं न्यधत्त। तत्कालमेव तिलकसुंदराचार्यसन्निधौ सूर्यंजयेन पुत्रेण सहैव व्रत माददे। तौ द्वावपि मृत्वा महाशुक्रेऽमरोत्तमा वभूताम्, ततश्च्युत्वा सूर्यंजय स्त्वं, भोः! दशरथोऽभवः। रत्नमाली तु प्रच्युत्यायं जनकोऽजायत, उपमन्यु स्तु च्युत्वा जनकानुजः कनकोऽभूत्। नंदिवर्धनजन्मनि यस्ते पिता नंदिघोषः सोऽहं ग्रैवेयकाच्च्युत्वा इह सत्यभुति रभवम्। तच्छ्रुत्वा

नमश्चकार । ततश्चन्द्रगति र्नृपो विदेहया देव्या समं जनकं भूपतिं विद्याधरोत्तमान्प्रेष्य तत्रानैषीत् । जातमात्रा पहारादिवृत्तांताख्यानपूर्वकं भामंडलसुतोऽसौ तेऽस्ति इति सः तस्मै शशंस । तेन वचसा वाहण स्तनितेनेव जनको जहर्ष सा विदेहा जननी च स्तन्य मक्षरत् । ताभ्यां मूर्ध्नि चुम्ब्यमानोऽश्रुवारिभिः स्नाप्यमानो भामंडलस्तौ पितरा वुपलक्ष्य नमश्चक्रे । अथ भवोद्विग्न श्चन्द्रगती राज्यं भामंडले सुते न्यस्य सत्यभूतिमुनेः पुरः प्रवव्राज । भामंडलः सत्यभूति मनरण्यजं चन्द्रगतिं पितरौ सीतारामौ च नत्वा निजं पुरमगात् । अथ दशरथो नृप स्तं सत्यभूतिं महर्षिं नत्वा सः आत्मनः पूर्वभवानपृच्छत्, सः मुनिश्चाख्यत् । भो दशरथ ! त्वं सेनापुरे महात्मनो भावनस्य वणिजो दीपिकायां पत्न्या मुपास्ति र्नामकन्यकाऽभूत् । तत्रभवे सा साधूनां प्रत्यनीका भूत्वा कष्टात्तु तिर्यगादिषु योनिषु परिबभ्राम । तज्जीवस्त्वं भवं भ्रान्त्वा ततश्च न्द्रपुरे पुरे धनस्य सुदर्यां पत्न्यां वरुणाभिधः सुतोऽभूत् । तदा प्रकृत्योदारस्त्वं निरंतरं श्रद्धयाधिकं साधुभ्यो दान मदाः, अथ कालधर्म मासदः । अथ धातकीखंडे द्वीपे युग्म्युत्तरकुरुष्वभूः मृत्वा च देवभूय मागा स्ततोऽपि हि परिच्युत्य विजये पुष्कलावत्यां पुष्कलायां पुरि नंदिघोषनृपपृथ्वीदेव्यो र्नन्दिवर्धन स्तुङ्[1]भूः । नंदिघोषो नंदिवर्धनं त्वां सुतं राज्ये न्यस्य यशोधरमुने रात्तदीक्षो ग्रैवेयके ययौ । नंदिवर्धन स्त्वं श्रावकत्वं पालयित्वा मृत्वा ब्रह्मलोके त्रिदशोऽभूत् ततोऽपि हि परिच्युत्य प्रत्यग्विदेहे चोत्तरश्रेणिभूषणे वैताढ्ये शशिपुरे पुरे

---

[1] पुत्रः

राज्ञाऽपृच्छयत् । कञ्चुक्यप्येवं जगाद, हे स्वामिन् ! सर्वकार्याक्षमं वाधक मेऽपराध्यति, स्वयमप्यमुं मां पश्य । ततो मुमुर्पुमिव पदेपदे प्रस्खलन्तं घंटान्तर्लोलिकालोलदशनं वलिभाजनं श्वेतसर्वांगरोमाणं भ्रूलोमच्छन्न लो॰ नं शुष्कमांसासृजं प्रादुर्भूतसर्वांगवेपथुं तं विलोक्य राजाऽचिन्तयत् यावद्वय मीदृशा न स्म स्तावच्चतुर्थं पुरुपार्थाय प्रयतामहे । एवं मनोरथो विपयेभ्यः पराङ्मुखो राजा भवे वैराग्यतन्मयः कमपि समय मनैपीत् । अन्येद्यु स्तस्यां नगर्यां चतुर्ज्ञानी महामुनिः संघप्रावृतः सत्यभूतिरिति समवासरत् । सपुत्रादिपरीवारो राजा दशरथोऽपि गत्वा ववंदे देशनां शुश्रुपु निपसाद च । तदानीमेव सीताभिलापसंतप्तभामंडलसमन्वितो विद्याधरेन्द्रै रन्वीतो वैताढ्यगिरे नृंपचन्द्रगती रथावर्ताचले ऽर्हतो वंदित्वा विनिवृत्तः सन् नभःस्थित स्तत्रा-यातः । समवसृतं तं मुनिं वीक्षांचक्रे अवतीर्य च ववंदे अथ धर्मं शुश्रुपु रग्रतो निपसाद च । भामंडलस्य सीताभिलापजं तापं ज्ञात्वा सत्यवादी सत्यभूतिः सूरि देशनां प्रस्तुत्य सभामंडलसीतयोश्चन्द्रगतिपुष्पवत्योः पापान्निवृत्तये तेपां पूर्वभवाः समाचख्यौ । अस्मि न्सीताभामंडलयोश्च भवे युग्मजाततां भामंडलापहारञ्च मुनि र्यथावदवदत् । भामंडलकुमारोऽपि मुने स्तद्वच आकर्ण्य संजातजातिस्मरणो मूर्छितो भुवि न्यपतत् । लब्धसंज्ञो भामंडलःसत्यभूतिना कथितं स्वपूर्वभववृत्तान्तमथ स्वयमपि शशंस । अथ चन्द्रगत्यादयोऽपि परमसंवेगं ययुः, सुधी भामंडलश्च सीतां स्वसेति ज्ञात्वा नमश्चक्रे । यो जातमात्रोऽपजह्रे सोऽयं मम सहोदरोऽस्तीति हृष्टा महासती सीता तस्मा आशीषं ददौ । ततः सद्यः संजातसौहृदो विनयवान् भामंडलो ललाटस्पृष्टभूतलो रामं

विदधे । ततः सौमित्रि र्नादबधिरीकृतदिङ्मुखं तदास्फालयंश्च मौर्वी श्चोत्तार्य पुनः स्थाने मुमोच च । ततश्चकि-
तविस्मिता विद्याधराः सौमित्रये सुरकन्या इवाद्भूता निजा अष्टादश कन्या ददुः । तत स्ताम्यद्धामंडलान्वि
ताश्चन्द्रगत्याद्या विद्याधरेन्द्रा विलक्षाः सन्तो निजनिजं पुरं भययुः । अथ मैथिलसंदेशाद्दशरथो द्रुत मागात्
महोत्सवेन रामसीतयोश्च विवाहो जज्ञे । तदा च जनकभ्राता जनकोऽपि सुमभाकुक्षिसंभवां भद्रां नाम निजां
सुतां भरताय ददौ राजादशरथोऽपि हि सुतैः स्नुपाभिश्च समं नागरैः भकृतोत्सवामयोध्यां नगरीं ययौ ।
अपरेद्यु र्दशरथो राजा महत्या ऋद्ध्या चैत्यमहोत्सवं विदधे शान्तिस्नात्रञ्च चकार । नृपः भथमं स्नांनांभः
सौविदल्लेन महिष्यै भाहिण्णोत् पश्चाद्दासीभि स्त्वपरपत्नीभ्यः भाहिणोत् । यौवनाच्छीघ्रगामिन्य स्ता दास्यः
भथममेव राज्ञीनां स्नानपय आर्पयन् ताश्च ववंदिरे, सौविदल्ले तु वृद्धत्वाच्छनिवन्मंदगामिनि सति, महादेवी
त्वसंभाप्तस्नानजलेत्यचिन्तयत् । राज्ञा सर्वासामेव राज्ञीनां जिनेन्द्रस्नानवारिणा भसादो विदधे महिष्या
अपि मे न विदधे । इति विमृश्यान्तः भविश्य मरणेकृतनिश्चया सा मनःस्विनी वस्त्रेणात्मान मुद्धध्धु मारेभे ।
तदैव नरेन्द्र आगात् तां तदवस्थाञ्च ददर्श, तन्मृत्युभीतः स्वोत्संगे निवेश्यैव मुवाच । हे राज्ञि ! त्वया कुतोऽ-
पमानादिदं दुःसाहसमारब्धं किं नाम मया काप्यवमानना दैवाद्विदधे । गद्गदवाक् सापि, भवता सर्वासां
राज्ञीनां पृथक् जिनस्नानपयः भैपि मम पुन र्न भैपीत्यूचे । यावत्सा इत्यवोचत्तावद्राज्ञेदमर्हत्स्नात्रवारि भस्था-
पितमिति ब्रुवन्कंचुक्यागात् । स तेन पुण्येन वारिणा मूर्ध्नि तामभ्यषिंचत्, त्वं विलंबेन किमागा रेवं

स्ति, तस्यतद्धनु र्लेतावदस्ति । विदेहामिति संबोध्य जनकः प्रभाते ते चापरत्ने अर्चित्वा मंचमंडिते मंडपे ऽमुचत् । अथ जनकाहूता विद्याधरनरेश्वराः सीतास्वयंवराय तत्रैत्याधिमंच मुपाविशन् । ततः सखीपरिवृता दिव्यालंकारधारिणी भूचारिणी त्रिदशीव जानकी तत्रोपेयाय । तत्र धनुःपूजां कृत्वा रामं च मनसिकृत्य जननेत्रसुधासरिज्जानकी तत्रातिष्ठत् । तदा नारदोदितसंवादिसीतारूपेक्षणात् भामंडलकुमारस्य मारो मारकात्मकोऽभूत् । अथ द्वास्थो जनक ऊचे भो भो सर्वेऽपि खेचराः महीधराश्च राजानः ! अयंजनकोऽदो वदति । यः कश्चिदनयोश्चापदंडयो रेकतरमप्यारोपति सः नः सुता मद्यैवोद्वहतु । अथ दोष्मन्तः खेचरा भूभुजोऽपि चैकैकश स्तदारोपणकाम्ययोपधन्वं समाजग्मुः । रौद्रैः पन्नगै र्वेष्ठिते तीव्रतेजसी ते चापे स्प्रष्टुमपि ते नालं बभूवु रादातुं तु का कथा । अनेकशो निर्यान्तीभि र्धनुःस्फुलिंगज्वालाभिः प्लुष्यमाणा स्ते निवृत्य ह्रिया ऽधोमुखाः सन्तो ऽन्योऽन्यत इयुः । अथ चलत्कांचनकुंडलो गजेन्द्रलीलागमनो दाशरथी राम श्चापोपान्त मुपासरत् । चन्द्रगत्यादिभिः नृपैः सोपहासं वीक्ष्यमाणो जनकेन च साशंकं वीक्ष्यमाणो निःशंको लक्ष्मणाग्रजो वज्रपाणि र्वज्रमिव शान्तोरगानलां वज्रावर्तं महाधनुः पाणिना सद्यः परिपस्पर्श । धन्विनां वरो राम स्तदाऽध्ययःपीठं स्थापयित्वा वेत्रवन्नमयित्वा च तद्धनुरधिज्यं विदधे । आकर्णान्तमाकृष्य रोदःकुक्षिं भरिध्वनि स्वयशःपटहोपमं तद्धनु रास्फालयामास । तदा मैथिली स्वयं स्वयंवरस्रजं रामे चिक्षेप रामभद्रोऽपि चापात् शिंजिनीं चोत्तारयामास । लक्ष्मणोऽपि विस्मितै र्जनैः प्रेक्षितः सद्यो रामशासनादर्णवावर्तकार्मुकमधिज्यं

पहृत्य द्रुतमानयेति । अथ सः रजन्या मनुपलक्षित एव जनकं हृत्वा समानीय चन्द्रगते राज्ञोऽर्पयामास । रथनूपुरपार्थिवो जनकं बन्धुवत्स्नेहात्समाश्लिष्यासयित्वाच ससौहार्दं मदोऽवदत् । तव पुत्री सीता लोकोत्तर-गुणेति विद्यते मे सूनु र्भामंडलश्च रूपसंपदाऽनूनोऽस्ति, तदधुना द्वयो र्वधूवरत्वेन संयोग उचितोऽस्तु संबन्धा दावयोश्चापि मिथः सौहृदं भवतु । जनक इत्यूचे, मया स्वसुता रामाय दत्तेति, अन्यस्यकथं यच्छामि, कन्यकाः सकृद्दीयन्ते । अथ चन्द्रगतिः प्रोचे, मया स्नेहवृद्धिकृते, आनीय त्वं याचितोऽसि, अहं तु तां हर्तुमपि क्षमोऽस्मि । यद्यपि त्वया स्वसुता सीता रामाय परिकल्पिता, तथापि रामो नः पराजित्य तां परिणेष्यति । देवताज्ञया सदा यक्षसहस्राधिष्ठिते दुःसहतेजसी वज्रावर्तार्णवावर्तें नाम धनुषी स्तः, ते च नः, गोत्रदेवतावश्चिकेतने सदा पूज्ये स्तः, ते रामशार्ङ्गिणोःकृते भविष्यत स्तद्गृहाण, सः दाशरथिराभ्यामेकमपि चेदारोपयति, तदा तेन वयं जिताः, सच ते सुता मुद्वहतु । सनंदनः सः मैथिलमिति प्रतिज्ञां बलादप्यनुशाय्य तेच चापे मिथिलाया मनैपीच्च । चन्द्रगतिर्नृपो जनकं राजोकसि मुमोच, सपरीवारः स्वयं तु पुर्याः बहि र्शुभ्यवात्सीत् । तदैव हि जनको निशि महादेव्या विदेहायाः सद्यो हृदयशल्यदं तच्च वृत्त माचख्यौ । विदेहाप्येवं रुरोद हे देवात्यन्तनिर्घृण ! मे पुत्रं हत्वानतृप्तस्त्वं पुत्रीमपि हरिष्यसि । लोकेहि वरादानं स्वेच्छया भवति परेच्छया तु न भवति, ममतु दैवात्परेच्छया वरादान मापतितम् । परेच्छया प्रतिज्ञातं कोदंडारोपणं यदि रामो न कुर्या दन्यश्चेत्कुर्यात्तदाऽनिष्टो वरो भवेत् । अथ जनक इत्थमवोचत् हे देवि ? मा भैषीः एष राघवो मया दृष्टसारो-

सीतारूपं भामंडलकुमारस्यादर्शयत् । विंध्याकृष्टो द्वीप इव भामंडलः सद्यो भूतेनेव मनोभुवाक्रामि जातुचिन्नि द्राञ्च न लेभे । सः भोज्यान्यपि न वुभुजे पेयान्यपि न पपौ मौनेन योगीव ध्यानतत्परोऽवतस्थे । तं तथा विधुरं वीक्ष्य चन्द्रगति र्नृपोऽवोचत् हे पुत्र ? त्वां किमाधि र्वाधते अथ कोप्युद्धतो व्याधि र्वाधते किम् ? । अथवा केनापि भवत आज्ञाखंडनमकारि किम् ? अथवा हे वत्स ? अन्यद्वादुःखस्यकारणं ब्रूहि । भामंडलकुमारो ह्रिया द्वेधाप्यवाङ्मुखोऽभूत् , हि कुलीना गुरूणां तादृगाख्यातुं कथ मीशते अथवयस्या भामंडलस्यार्तिकारणं नारदानीतपटालिखितयोषिति कामना मूचुः । अथ स राजपुंगवो नारदं भक्त्या वेश्मन्याश्वानीय सा, का, कस्यात्मजेत्यादि पटयोषितः पप्रच्छ, नारदोऽप्येवमाचख्यौ, हे राजन् ! या, मया पटे दर्शिता सा विदेहा जनकात्मजा नामधेयेन सीताऽस्ति । सा रूपेण यादृशी अस्ति तादृशीं पुनर्लिखितुं नाहमभिज्ञोऽन्योवानाभिज्ञः सा हि मूर्त्या लोकोत्तरैवास्ति । यादृशं सीताया रूपं तादृश ममरीषु न, नागीषु न, गंधर्वीष्वपि न, मानवीषु तु का कथा । यादृग्रूपं यथावस्थं तादृग्विकर्तुं सुरा अपि नेश्वराः अनुकर्तुं सुरनरा अपि नेश्वराः कर्तुंञ्च प्रजापति रपि नेश्वरः । तस्या आकृतौ वचनेऽपि च काचि न्मधुरताऽस्ति कंठे पाणिपादेच काचिदुच्चकै रक्तताऽस्ति । अथवा तां यथावस्थां यथा आलेखितुं न क्षमोऽस्मि परमार्थतो वक्तुमपि नालमतो वच्मि । हे नृप ! भामंडलस्य योग्येति मनसा विचार्य यथाप्रज्ञं समालिख्य मया पटे दर्शिता । एषा तवैव पत्नी भविष्यति ततो मा खि-द्स्वेति सुत माश्वास्य राजा नारदं मुनिं व्यसृजत् । ततश्च नृपश्चपलगतिं नाम विद्याधर मादिदेश, जनकम-

स्वं धनुरधिज्यं विदधे, रणनाटकडिंडिमं यन्मौर्वीमवादयच्च । भूगतो गीर्वाण इवभ्रूभंगमप्यकुर्वाणो राम स्तान् कोटिशोऽप्यस्त्रै र्मृगान्व्याधवद्विव्याध । अयं जनकस्तुवराक स्तत्सैन्यं मशकोपमं तत्साहाय्यागतं सैन्य मादितोऽपि दैन्यभागभूत् अरे ! नभस्तलं छादयन्त इमे वाणाः पक्षिराजा इव कुत आयान्तीत्यभिभाषिणः कुपितविस्मिता आतरंगादयो म्लेच्छाधिपा युगपत्प्रतिराम मस्त्राणि वर्षन्तो डुढौकिरे । शरभः कुंजरानिव दूरा-पाती दृढाघाती शीघ्रवेधी च राघव स्तान्म्लेच्छान् हेलयाऽभांक्षीत् । ते म्लेच्छाः काका इव प्रणश्य दिशो दिशि जग्मु र्जनकश्च जनै र्जानपदैश्च समं स्वस्थो वभूव । अथ हृष्टो जनकः स्वसुतां सीतां रामाय ददौ, रामागमा त्तस्य वरप्राप्ति र्जयश्च द्वयमप्यभूत् । तदा च जनाज्जानकीरूपमाकर्ण्य नारदस्तत्रकौतुकाद्द्रष्टु मागात्, कन्यावेश्म च विवेश । पिंगकेशं पिंगनेत्रं तुंदिलं छत्रिकाधरं दंडपाणिं सकौपीन मपीनांगं स्फुरच्छिखं भीषणं नारदं प्रेक्ष्य भीता सीता सवेपथुः, हा मात रित्यारटंती सती गर्भागारान्तरेऽविशत् । ततस्तुमुलकारिभि र्दासिकाद्वारपालाद्यैः कंठे, शिखायां, वाह्वोश्च धृत्वा नारदो रुरुधे । तेषां कलकला च्छस्त्रिणो राजपुरुषाः क्रुद्धा एनं हतेति भाषिणो यमदूता इवैयुः । क्षुभितो नारदः कथंचन तेभ्यः स्वं विमोच्योत्पत्य वैताढ्यं ययौ तत्रचैवमचिन्तयत् । व्याघ्रीभ्यो गौरिव दासीभ्योऽहं जीवन्निरगाम् वहुविद्याधरेश्वरं वैताढ्यश्च दिष्ट्या प्राप्तो-ऽस्मि । इह दक्षिणश्रेणौ चन्द्रगत्यात्मजो युवा दोष्मानाखंडलपराक्रमो भामंडलोनामास्ति । तदस्य सीतां पट्टे लिखित्वा दर्शयामि येनैपस्तां हठादपहरति, अदः कृते प्रतिकरोमि । नारदस्तथैव कृत्वा जगत्त्रयेऽदृष्टपूर्वं

हृदय मात्मा वा त्वमेवासि । यत् जनकस्य सुखै र्दुखैः सदा गृह्यसे, ततोऽद्य विधुरे यथा कुलदेवता तथा त्वं
तेन स्मृतोऽसि । वैताढ्याद्रे र्दक्षिणतः कैलासस्योत्तरेणच भीषणमजा भूयांसोऽनार्या जनपदाः सन्ति । तेषु
वर्वरकूलवदर्धवर्वरोनामदेशो दारुणाचारै र्नरै रत्यन्तदारुणो विद्यते । तस्य देशस्य भूषणे मयूरमालनगरे
आतरंगतमोनाम दारुणो म्लेच्छराजोऽस्ति । तस्य सहस्रशस्तनया नृपीभूय शुकमंकनकांबोजमभृतीन् विषयानपि
भुंजते । इदानी मातरंगस्तैः परितः अक्षय्याक्षौहिणीनाथैः परिवारितो जनकक्षितिमभांक्षीत् । दुराशयास्ते
मतिस्थानं चैत्यानि वभंजु स्तेषां ह्याजन्म संपद्द्वयोऽपि धर्मविप्लवोऽभीष्टः । तदनारतमभीष्टस्य धर्मस्य जन-
कस्य च परित्राणं कुरुष्व यतस्त्वं तयोः प्राणभूतोऽसि । एवमाकर्ण्य दशरथो यात्राभेरीमवादयत् संतः सतां
परित्राणे जातुचिन्न विलंबंते । अथरामो दशरथ मूचे, म्लेच्छोच्छेदाय तातः स्वयं यास्यति चेत्सानुजो रामः
किं करष्यति । पुनरनेहाच तातेनाक्षमो वा तर्कितोऽस्म्यहम्, नन्विक्ष्वाकुषु पौरुषगाभरताज्जन्मासिद्धमस्ति ।
प्रसीद, विरम, म्लेच्छानुच्छेत्तुं मां समादिश, हे स्वामिन्? अचिरात्स्वजन्मनो जयवार्ता श्रोष्यसि । इत्थं कथं
चिद्राजान मनुज्ञाप्य सहानुजः सेनापरिवृतो रामो मिथिलांपुरीं जगाम । तत्र रामो महावने चमूरुद्वीपशार्दुल
सिंहानिव पुरीपरिसरे म्लेच्छमहाभटानद्राक्षीत् । रणकंडूलदोर्दंडा जितकाशिनो महौजसस्ते म्लेच्छा, रामं
द्रुतमुपद्रोतुं माववंत । उत्क्षिप्तरेणुभि रुद्भ्रान्तै र्महावातै र्जगदिव तैरस्त्रै र्युगपद्रामसैन्यं क्षणादन्धीकृतम् । सैन्येषु
जितमानिषु सत्सु परेषु जयमानिषु सत्सु जनके मृतमानिनि सति लोके च संहृतमानिनि सति हसितमानी राम

ददर्श, अपुत्रः सः विद्याधरः स्वयंपुत्रीयन्नादृदे । तमर्भकं पुष्पवत्याः प्रेयस्याश्चार्पयामास, देवी अद्य पुत्रं सुषुवे इति च पुरि आघोषयत् । तदा राजा पौराश्च तस्योच्चैर्जन्ममहोत्सवं चक्रिरे, सः भामंडलसंबंधान्नाम्नाऽपिभामं डलोऽभवत् । पुष्पवतीचन्द्रगत्यो नेत्रकैरवचन्द्रमाः सः खेचरीकरलालितो वर्धितुं प्रवद्वृते । इतश्च पुत्रेऽपहृते सति, करुणस्वरा विदेहा रुदती सती बन्धून् शोकमहार्णवे पातयामास । जनकः प्रतिदिशं नरान्प्रेष्यान्वेष-यामास । पुनस्तत्प्रवृत्तिं सुचिरादपि क्वापि न प्राप । मैथिलोऽत्र, अनेकगुणसस्यानां प्ररोह इति मत्वा युग्म जाताया दुहितुः सीतेत्यभिधांविदधे । गच्छताकालेन तयोः शोको मंदीवभूव, हि शोको हर्षश्च संसारे नर मायाति याति च । सीता च रूपलावण्यसंपदा सार्धं ववृधे, शनकै रिन्दुलेखेव कलापूर्णा च बभूव । क्रमादु-द्यौवना पुण्यलावण्यलहरीसरित् कमलेक्षणा सा सरित्पतितनूजा इवालक्षि । अस्या अनुरूपः को वरो भवेदिति तज्जनको जनकः पृथिवीपति र्दिवानिश मचिंतयत् । स चरचक्षुपा प्रत्येकं राज्ञां कुमारा न्वीक्ष्य महामात्यै र्व्यचारयन् पुनःकोऽपि न रुरुचे । तदाअर्ध वर्वरै दैत्यकल्पै रनल्पै रातरंगतमादिपार्थिवै र्जनकस्यभू रुपदुद्रुवे । कल्पान्तवार्धिवारामिव तेषां रोधायाक्षमो-मिथिलेश्वरो दशरथाहूत्यै दूतं प्राहिणात् । ऐक्ष्वाकः ससंभ्रम मायातं तं दूत माहूय समसादमग्रे निपद्य महामना एवं जगाद । दूरस्थितस्या पितस्याऽस्मत्सुहृदस्त्वदागमा न्मयि वारिधे रिन्दाविवाद्वैतं सौहार्दं मन्ये । मिथिलाभर्तू राष्ट्रे, पुरे, गोत्रे, सैन्ये, स्वांगे, अन्यतोऽपि च कुशल मस्ति कच्चित्, आगमनकारणञ्च ब्रूहि । दूतोऽप्यवादीद्धे महाभुज ? मद्भर्तु रनेकश आप्तेषु सत्स्वपि सुहृद्

कुंडलमंडित स्तां चापजह्रे पितुर्भिया दुर्गदेशेच पल्लीं कृत्वा संस्थितः । पिंगलोऽप्यतिसुंदर्या विरहादुन्मत्त इव क्ष्मां भ्रमन्नेकदाऽऽर्यगुप्ताख्यमाचार्य मैक्षत । धर्म श्रुत्वा पिंगलस्तत्पार्श्वेव्रतं जग्राह परमतिसुंदर्या कदाचन प्रेम न मुमोच, पल्लीस्थितः कुंडलमंडितः सर्वदा दशरथभुवं छलात्सारमेय इव लुंटयामास । ततो वालचन्द्राख्यः सामन्तो दशरथाज्ञया सौप्तिकं प्रदाय बद्ध्वा च तं तदंतिक आनैषीत् । दशरथः कालेन तं कुंडलमंडित ममुचत् हि दीने क्षोणेऽरावपि महतां कोपः शाम्यति । सः कुंडलमंडितः पितृराज्याय महीं भ्राम्यन् मुनिचन्द्रान्मुने धर्म माकर्ण्य श्रावकोऽभवत् । अथ राज्येच्छुः स मृत्वा महापुरि मिथिलायां जनकभार्याया विदेहाया गर्भे सुतोऽभवत् । सरसापि भवं भ्रान्त्वा नाम्ना वेगवती पुरोहितसुताऽभवत् तत्र प्रव्रज्य विपद्य च ब्रह्मलोकेऽगम च्युत्वा तदा विदेहाया उदरे कुंडलमंडितजीवयुग्मत्वेन सुताऽभवत् । विदेहा समये युगपत्पुत्रकन्यके असूत तदा पिंगलर्षि र्मृत्वा सौधर्मे त्रिदशोऽभवत् । स च प्राग्जन्मावधिना जनकपुत्रत्वेनोत्पन्नं द्विषं कुंडलमंडित मुदैक्षत । प्राग्वैराज्जातरोषः सः तं जातमात्रं जहार दध्यो च किमेनं शिलातल आस्फाल्याशु निहन्मि । अथवा यत्पूर्वे भवे मया दुष्कर्मो चरितं तस्यापिफलं भूयस्तु भवेषु चिरमन्वभवम् । दैवाच्छ्रामण्यमासाद्याह मियतीं भुवं प्राप्तो भूयोऽमुं भ्रूणं हत्वाऽनंतभवः कथं स्याम् । इत्थं विमृश्य सः सुरः कुंडलादिभि भूषणै स्तं वाल भूषयित्वा पतज्ज्योतिर्भ्रमप्रदं तं वैताढ्यदक्षिणश्रेणौ रथनूपुरपत्तने नंदनोद्याने शनकै स्तूलिकायामिवामुचत् । चन्द्रगतिश्च किमेतदिति संभ्रान्त स्तं दृष्ट्वा तन्निपातानुसारेणनंदनोपवनं ययौ । तत्र दिव्यालंकारभूपितं तं वालं

सुतस्नुपार्थे च चरेतुः । अथान्यदा पर्यटन्तौ सुतस्नुषे चापश्यन्तौ ता वेकं साधुं ददृशतु र्भक्तितोववंदातेच । तत्पार्श्वे श्रुतधर्मौ चतौ द्वौ व्रतंजगृहतु र्गुर्वादिष्टाऽनुकोशा तु कमलश्रिय मार्यिका मगात् । विपद्य च तौ सौधर्मे कल्पे देवौ बभूवतुः यदेकाहमात्रेऽपिव्रते स्वर्गादन्यतो गति र्न भवति । ततश्च्युत्वा वसुभूति रत्रैव वैताढ्यपर्वते रथनूपुरनाथो नाम्ना चन्द्रगतिर्नृपोऽभूत् । ततश्च्युत्वाऽनुकोशापि आर्यचरिता सती तस्यविद्याधरप्रभो र्भार्या पुष्पवती नामाऽभूत् ।

तदा सा सरसापि कामपि संयतां प्रेक्ष्य प्रव्रज्य मृत्वा चेशाने देवी समुदपद्यत । सः अतिभूतिश्च सरसाविरहादार्तो विपद्य च चिरं संसारं भ्रान्त्वा कदापिहंसपोतोऽभूत् । अन्यदासेनेन भक्ष्यमाणः स उपसाधु पपात, सच साधुः कंठस्थासो स्तस्य नमस्कारं ददौ । विपन्नः स अतिभूयसा नमस्कारप्रभावेण किन्नरेषु दशवर्षसहस्रायुः सुरोऽभवत् । ततश्च्युत्वा विदग्धेपुरे प्रकाशसिंहभूपतेः प्रवरावल्यां पत्न्यां कुंडलमंडितः सः सुतोऽभूत् । भोगासक्तः कयानोऽपि चिरं भवाटवीं भ्रान्त्वा चक्रपुरे पुरे धूमकेशाभिधानस्य चक्रध्वज राजपुरोधसः सधर्मचारिण्यां स्वाहानाम्न्यां नामधेयेन पिंगलः सूनु रजायत । स पिंगल स्तु चक्रध्वजस्य राज्ञोऽतिसुंदरीनामयापुत्र्या सहैकगुरोरन्तिके पपाठ । गच्छता कालेन परस्पर मनुरागे जाते सति तां छलात् हृत्वा पिंगलो विदग्धनगरे ययौ । विज्ञानरहितः स तत्र तृणकाष्ठादिविक्रयादात्मानमजिजीवत् हि निर्गुणस्याद एवोचितम् । कुंडलमंडित स्तत्र तां चातिसुंदरी मद्राक्षीत् ततश्चतयो स्तत्कालमन्योन्य मनुराग श्चाभूत् । राजपुत्रः

तौ अपरौ स्वदोर्दंडाविव मुहु र्मुहुर्मुदाऽपश्यत् । तौ सदस्थानां महीभुजां तेषा मंगेपु स्पर्शेन सुधां वर्षन्ताविवांकादंकं संचेरतुः । नीलपीताम्वरौ तौ क्रमेणवर्धमानौ पादपातै र्महीतलं कम्पयन्तौ सदा विजहृतुः । तौतु अंगिनौ पुण्यराशीव साक्षीकृतकलाचार्यौ क्रमेण सकलाः कलाः कलयामासतुः । महौजसौ तौ तु लीलामुष्टिप्रहारेण हिमकर्परलीलयागिरीनपि दलयामासतुः । श्रमस्थानेऽपि हि अधिज्यीकृतचापयो स्तयो र्वैधाभिशंकया तपनोऽपि चकंपे उच्चै स्तस्थौ च । दोः स्थाम्नापि द्विषां वलं तृणाय मन्यमानौ तौ आत्मनः शास्त्रकौशलं कौतुकायेव मेनाते । तदा नृपस्तयो र्दोः स्थाम्नाउच्चैः शस्त्रास्त्रकौशलेन च देवासुरादीनामप्यजय्यं स्वममन्यत· अन्यदा नृपतिः कुमारयो र्विक्रमेण धैर्यं मालम्ब्येक्ष्वाकूणां राजधानी मयोध्यां ययौ । अभ्रात्यय आदित्य इव दुर्दशातिक्रमे भृशं द्योतमानो दशरथः प्रतापेन मही मन्वशात् । तत्रापरेद्युः कैकेयी शुभस्वप्नाभिसूचितं भरतभूषणं भरतं नाम सुत मसूत । सुप्रभाऽपि शत्रुघ्नभुजविक्रम मभिधानेन शत्रुघ्नं कुलनंदनं नंदन मजीजनत् । अपरौवलदेववासुदेवाविव भरतशत्रुघ्नौ दिवानिशं स्नेहादवियुक्ता वभाताम् । मेरुमहीधरो गजदंतइति नगैरिव तैश्चतुर्भिः सुतै राजा दशरथोऽपि रेजे ।

इतश्चास्मि जंबुद्वीपेऽत्रैव भारतेक्षेत्रे दारुग्रामे नाम्ना वसुभूति रिति द्विजोऽभवत् । तस्य अनुकोशायां पन्या मतिभूति र्नाम सुतोऽभूत् । अतिभूतेरपि सरसानाम्नी पत्नी वभूव । एकदा जातरागेण कयाननाम्ना विप्रेण छलेन साऽपजह्रे हि स्मरातुरः किं न कुर्यात् । अतिभूतिस्तामन्वेष्टु भूतवन्मही माट, अनुकोशावसुभूतिच

नृपस्तस्य प्रथमापत्यरत्नस्यास्यकमलेक्षणादति मुमुदे। तदा नृपश्चिन्तामणिरिवार्थिनां दानं ददौ, नंदने जाते सति यद्दानं तदक्षय मितीयं लोकस्थिति रस्ति। तथा स्वयं लोकाश्च तदा दशरथादपि राज्ञो यथातिमुदोऽभूवन्निति महान्त मुत्सवं चक्रुः। नागरा स्तदा नृपौकसि दुर्वापुष्पफलादिभिः सनाथानि कल्याणपात्राणि पूर्णपात्राणि निन्युः तदा सर्वत्रपुरि कलगीतानि घुसृणच्छटाः सर्वत्र तोरणश्रेण्यश्च व्यधीयन्त। तस्यसूनोः प्रभावतस्तदा राज्ञे महीभृता मचिन्तितोपनितानि प्राभृतानि समाजग्मुः। तदा नृपः पद्मानिवासपद्मस्य तस्यसूनोः पद्म इत्यभिधा मकरोत् सः पुना राम इत्यपि प्रथितोऽभूत्। ततः सुमित्रापि निशात्यये स्वप्ने विष्णुजन्माभि सूचकान्गजसिंहार्कचन्द्राग्निश्रीसमुद्रानपश्यत्। परमर्द्धिकः कश्चित्रिदशो देवलोकात्परिच्युत्य सुमित्राया देव्याउदरे समवातरत्। सुमित्रापि समये सति प्रावृडंभोदवर्णं संपूर्णलक्षणं जगन्मित्रं पुत्ररत्न मजीजनत् तदानृपः सर्वेषु पुरचैत्येषु श्रीमता मर्हतां विशेषेण स्नात्रपूर्वं मष्टधा पूजां व्यधात् नृपति धृतान्वन्दिरिपूनपि मोचयामास, पुरुषोत्तमजन्मनि सति को वा सुखं न जीवति। तदासमजो राजा केवलं सोच्छ्वासो नाभूत् किन्तु देवीवसुमत्यपि द्रागुच्छ्वासं प्रत्यपद्यत भूपालो रामजन्मनि यथा महोत्सव मकृत तथा तं महोत्सव मधिकं चक्रे हि हर्षे को नाम तृप्यति।

पार्थिव स्तस्य नाम नारायण इति विदधे भुवि सः अपरनाम्ना लक्ष्मण इति ख्यातोऽभूत्। क्षीरपायिणो तौ द्वावपि क्रमेण पितुः कूर्चकचापकर्षणशिक्षकं विशिष्टं वाल्यं प्रापतुः। महीपालस्तदा धात्रीभिः पाल्यमानौ

मंहीपति मंहोत्साह श्चतुरंगया सेनया दशरथस्यपक्षे सन्ननाह । तदा राघव एकाक्येवहि हे प्रिये ! सारथित्वं कुरु यथाऽमून्द्विषो मथ्नामीति कैकेयी मवोचत। द्वासप्ततावपिकलास्वभिज्ञा सा धीमती कैकेयी रश्मि मादाय तं महारथ मध्यारुरोह । धन्वी निषंगी सन्नाही राजा दशरथोऽपि एकोऽपि परानतृणवद्गणयन् तं रथ मध्यास्त हरिवाहणमुख्यानां रथै निंजरथं रयात्प्रत्येकं युगपदिव त्वेका कैकेय्ययोजयत् । अपर आखंडल इव शीघ्र- वेधी दशरथोऽ प्यखंडौजा एकैकमपितान्तथा नखंडयत् । इत्थं सः सर्वानपि भूपतीन् विद्रावयामास जंगमां जगतीमिव तां कैकेयी मुपयेमेच । रथी दशरथो राजा नवोढां ता मुवाच हे देवि ! त्वत्सारथ्येन रंजितोऽस्मि तेन वरं याचस्व । हे स्वामिन् समये याचिष्येऽधुना मे वरो न्यासीभूतोऽस्तु, कैकेयीत्वभाषत राजापि तत्पत्य- पादि । श्रियेव तथा कैकेय्या हठाहृतैः परसैन्यैश्चसम मसंख्यातपरीवारो राजा राजगृहं ययौ । अथ जनको राजाप्यात्मीयां नगरीं जगाम, हि समयज्ञा धीमन्तो यथा तथा नहि तिष्ठन्ति । तत्र दशरथो राजा मगधेश्वरं विजित्य तत्रैवास्थात् किन्तु तथैव शंकया अयोध्यां तु न ययौ । इलापति स्तत्रैवनिजमपराजितामुख्यमन्तः पुरमानाययामास, हि दोष्मतां सर्वत्रैव राज्यमस्ति । तत्रपुरे नृपो राज्ञीभिःसह रममाणश्चिर मस्थात् हि राज्ञां स्वयमर्जिताभू र्विशेषतः प्रीत्यै भवति । अथान्येद्युरपराजिता बलजन्माभिसूचकान् गजसिंहेन्दुभास्करान्निशा शेषे स्वप्नेऽपश्यत् । तदा महर्द्धिकः कश्चिद्देवो ब्रह्मलोकात्परिच्युत्य पुष्करिण्या मरालवत्तस्याः कुक्षा ववातरत् अथापराजिता नृपुंडरीकं वर्णेन पुंडरीकविडंबिनं संपूर्णलक्षणं सूनुं सुषुवे । राकेन्दुदर्शना दग्धिरिव दशरथो

विद्विषन्मोहहेतवे ध्वान्ते लेप्यमयीं दाशरथीं मूर्तिं न्यधुः । जनकोऽपि तथाचक्रे तन्मंत्रिणोऽपिहि तथैव चक्रुः, तौ दशरथजनकौ त्वलक्षौ महीं भ्रेमतुः । विभीषणश्च संरंभादेत्य संतमसेऽसिना लेप्यमय्या दशरथमूर्तेर्मस्तकं चिच्छेद । तत्र सकले नगरेऽपि कलकलोजज्ञे अन्तःपुरपुरं महानाक्रंदध्वनिश्चोत्तस्थौ । सांगरक्षकाः सामंताश्च सन्नह्य समधावन्त शुद्धमंत्राश्च मंत्रिणो मृतकार्याणि विदधुः । विभीषणस्तु दशरथं मृतंज्ञात्वा लंकां ययौ मिथिलेश्वरमेकं त्वकिञ्चित्करं ज्ञात्वा नावधीत् । मैथिलेक्ष्वाकौ भ्राम्यन्तौ मिथ उभौ मिलितौ एकावस्थौ तौ सुहृदौ तूत्तरापथमीयतुः तत्र कौतुलमंगलेपुरे शुभमते राज्ञः पृथ्वी श्रीकुक्षिजन्मनः कैकेयीनाम्न्यादुहितु र्द्वासप्ततिकलानिधे द्रोणमेघसोदरायाः स्वयंवर माकर्ण्य तौ तन्मंडप मुपेयतुः । हरिवाहणमुख्यानां पृथिवी भुजाम्मध्येतावधिपाथोजं हंसाविवाधिमंचं निषीदतुः ।

सर्वालंकारभूषिता कन्यकारत्नं कैकेयी साक्षाल्लक्ष्मीरिव तं स्वयंवरमंडप मभ्यागात् । प्रतीहार्या दत्तहस्ता क्रमान्नृपान्पश्यन्ती सा इन्द्रलेखा भूयसो नक्षत्राणीव भूयसो नृपान्व्यतिचक्राम । साक्रमेण गंगा सागरमिव दशरथं प्राप अंभसा निर्मुक्तनांगरा नौरिव तत्रैव तस्थौ । ततो रोमांचिततनुः कैकेयी अतनुसंमुदानिजां भुजलतामिव तत्रैव वरमाला प्रक्षिपत् । हरिवाहणमुख्याश्च मानिनो नृपा न्यक्कृतमानिनः क्रोधाज्ज्वलनसंनिभा जज्वलुः । अयं वराक एकाकी कर्पटिकोऽनया वव्रे, अस्माभिराच्छिद्यमाना मिमिकां कथं त्रास्यते । साटोपमित्यनल्पं जल्पन्तस्ते सर्वे स्वशिविरेषु गत्वा सर्वात्मनापि हि संवर्मयामासुः । सः शुभमति

इतश्च भरतस्यार्धं भुजानो दशकन्धरः सभायामास्थितो नैमित्तिकोत्तममित्यपृच्छत् । यदमरा अपि नाम्नैवामराः परमार्थतस्तु नामराः हि संसारवर्तिनः सर्वस्यावश्यं मृत्यु र्भाव्येव । तत् किं मे स्वपरिणामाद्विपत्ति रथवा परतो विपत्ति स्तन्निशंक माचक्ष्व हि आप्ताः स्फुटभाषिणः सन्ति । सोप्याचख्यौ भविष्यन्त्या जानक्याः कारणेन भविष्यतो दशरथपुत्रा त्ते मृत्यु र्भविष्यति । अथ विभीषणो बभाषे यदप्यस्य वचः सदा ऋतम् तथाप्यहमाशु अनृतीकरिष्यामि । तयोः कन्यातनययो रनर्थयो र्बीजभूतं जनकं दशरथञ्च हनिष्यामि नः शिवमस्तु । बीजनाशतस्तयो रुत्पत्तिरेव निषिद्धा, अतोनैमित्तिकस्य वचो मिथ्यैव हि भविष्यति । रावणेन आमित्युक्तेसति विभीषणः स्ववेश्म अगात् तत्रस्थो नारदस्तु तद्वचः श्रुत्वा दशरथं ययौ । दशरथोऽपि दूरतस्तं देवर्षिं मभ्युत्तस्थौ गुरुवद्गौरवेण च नमस्कृत्यासयामास । त्वंकुतः स्थानादायासी रिति तेन पृष्ठो नारदआख्यत् यदहं पूर्वविदेहेषु पुंडरीकिणीं श्रीसीमन्धरनाथस्य सुरासुरकृतं निष्क्रमणोत्सवं द्रष्टुंगत स्तश्च दृष्ट्वाहं मेरुमगाम् । तत्र तीर्थेशानभिवन्ध्याहं लंकायां गतवान् तस्यां शान्तिगृहे शान्तिंनत्वा रावणालयमगाम् । तत्रकेनापि नैमित्तिकेन कथ्यमानो जानक्यर्थे त्वदात्मजा द्रावणस्य वधो मयाश्रुतः । तच्चश्रुत्वा महाभुजो विभीषणस्त्वां तथा जनकं हन्तुं कृतप्रतिज्ञो न चिरादिहैष्यति । एतत्सर्वं परिज्ञाय लंकापुर्यां ससंभ्रमोहं त्वं साधर्मिक इति प्रीत्या तवशंसितु मागमम् । तच्छ्रुत्वा भूभुजाऽभ्यर्च्य विसृष्टो नारदो द्रुतं तथैव जनकायापि भूभुजे कथयामास । राजा मंत्रिणां तत् समाख्याय राज्यं च समर्प्य योगविदिव कालवंचनां चिकीर्षु र्निययौ । मंत्रिणोऽपि नृपालयं प्रति

ककुत्स्थ स्ततो रघ एवं केषुचिन्नृपेषु मोक्षमाप्तेषु केषुचित्स्वर्गमाप्तेषु साकेतपत्तने प्रणयिनामानृण्यकृच्छर-णार्थिनां शरण्योऽनरण्यो नाम राजाऽभूत् । तस्य पृथ्वीदेव्याश्च कुक्षिजौ एकोऽनंतरथ स्तथाऽपरो दशरथ इत्युभौ पुत्रावभूताम्

इतोऽनरण्यस्य सुहृत्सहस्रकिरणो नृपो रावणेन युध्धे जितो वैराग्याद्व्रतमाददे तत्सख्यादनरण्योऽपि मासजाते लघौ सुते श्रियं न्यस्यानंतरथसहितो व्रतमाददे । अनरण्यो मोक्ष मगमदथानंतरथो मुनि रतीव्र तपस्तप्यमानो वसुंधरां विजहार । राज्यभृत् दशरथो राजा पुनः क्षीरकंठोऽपि वयसाविक्रमेणैव वृध्धि मासादयत । उडुषु द्विजराज इव ग्रहेषु ग्रहराज इव पर्वतेषु सुमेरुरिव स राजा राजस्वराजत् तत्र स्वामिनि सति परचक्रादिसंभव उपद्रवो लोकस्य खपुष्पव ददृष्ट एवासीत्। अर्थिनां वित्ताभरणादिनि यथेच्छं ददन्सः मद्यांगादीनां कल्पवृक्षाऽणा मेकादशोऽभवत् । सच निजवंशक्रमायातमनघं तत्साम्राज्यमिव सर्वदा प्यप्रमद्वर आर्हतं धर्मं दधौ । दभ्रस्थलपुरेशस्य सुकोशलमहीपते रमृतप्रभाकुक्षिसमुद्भवाम् पवित्रां चारुरूपलावण्यशालिनीं नाम्ना अपराजितां कन्या माहवे जयश्रिय मिव स भूपाल उदुवाह । अथ स दशरथः शशांको रोहिणी मिव कमलसंकुले पुरे सुबन्धुतिलकस्य मित्रादेवीकुक्षिजाता मादिनामतः कैकेयीं मित्राभू सुशिला चेति सुमित्रेत्यपराभिधां पर्यणैपीत्। सः दशरथः पुण्यलावण्यसौन्दर्यवर्यांगीसुप्रभामिधामनिंदिता मन्यामपि राजपुत्री मुपयेमे। विवेकचूडामणिः सः भूभुजांवरो धर्मार्थी वबाधमान स्ताभि वैषयिकं सुखं बुभुजे।

मम जन्मापूर्वमिदं कस्य जीवविशेषस्य मासं तत्सर्वथाख्याहि । नृमांसमिति सोऽप्याख्यत्, राजावोचदतः परमद्येव मत्यहं मम नृपलं संस्कृत्य दद्याः । अथ सूदोऽपि तदर्थं मत्यहं पुरे डिंमानहार्षीत्, हि राज्ञा माज्ञयाऽन्यायकरणे भीर्नास्ति । ततो मंत्रिण इति दारुणकर्माणं नृपं विज्ञाय गृहोत्पन्नमुरगमिव धृत्वाऽरण्यान्तरत्यजन्। तैश्च सोदासूः सिंहरथो राज्येऽभ्यपिच्यत, सोदासोऽपि निरर्गलोमांसं खादन्वसुधा माट । अन्येद्यु र्दक्षिणाऽपथे भ्रमता सोदासेनाऽपि कोऽपि महर्षिं र्ददृशे अथ स धर्ममपृच्छयत । वोधार्हं इति तं ज्ञात्वा महामुनि स्तस्मै मद्यमांसपरिहारमधान मार्हतं धर्मंजगौ । सोदासोऽपि तं धर्म माकर्ण्यचकितोऽभवत् मसन्नहृदयश्चभूत्वा परमः श्रावकोभवत् । इतश्च महापुरपुरे कोऽपि नृपोऽपुत्रोमृतः अथ पञ्चदिव्याभिषिक्तः सोदासस्तत्र राजाऽभूत् । अथ सोदासः सिंहरथं मति दूतं माहिणोत्, दूतोऽपि सोदासस्याज्ञां कुरुष्वेति तमुवाच । अथसिंहरथेनोच्चैस्तिरस्कृत्य दूतो विसृज्यत, सचागत्य सोदास-भूभुजे यथातथ माख्यच्च अथ सोदासः सिहरथं सोऽपि सोदासपार्थिवं योध्धु मभ्यपेणयतां मिथश्च तौ युयुधाते च सोदासोऽपि सिंहरथं जित्वा पाणिनाजग्राह तस्मै राज्यद्वयश्चादात् स्वयं पुनः मवव्राज । ततः सिंहरथस्य सूनु ब्रह्मरथो राजा अभूत् । ततो हेमरथ स्ततः शतरथ, अथोदयपृथु स्तत इन्दुरथ स्ततः क्रमादादित्यरथ मान्धातृवीरसेनास्ततः मतिमन्युर्नृप स्तस्मात्मतिवन्धुस्ततो रविमन्युनृपस्तस्माद्वसंततिलक स्ततः कुवेरदत्तः अथ क्रमात् कुंथुशरभद्विरदा स्ततश्च सिंहदशनस्ततो हिरण्यकशिपु स्ततः पुजस्थलोऽथ

कुर्युः । इति चेतसि निश्चित्य प्रेयसीमपि सिंहिकां [1]न्यगितप्रतिमामिव तां राजाऽशु परिजहार । अन्यदा नघुषस्य दाहज्वरः समुदपद्यत सचोपचारशतैरपि दुष्टारिवन्नोपशाम्यच्च । तदा स्वसतीत्वं ज्ञापनाय भर्तुरर्तिंच्छिदेऽपिच सिंहिका तोयमादाय तत्समीप मियाय । सा सत्यश्रावणं चक्रे यथा हे नाथ ? त्वां विना मया कदाप्यन्यः पुमान्नैक्षि चेत्तर्हि ते ज्वरोऽपयातु ततश्चसा तेनांभसा निजंपति मभिषिषेच तदैवज्वरोन्मुक्तः स सुधाधौत इवाभवत् । तदा सुराः सिंहिकाया उपरिष्ठात्पुष्पवृष्टिं व्यधु स्ततः प्रभृति राजापि पूर्ववत्तां वहु मेने । काले गच्छति सति नघुषस्य महीपतेः सिंहिकायां महादेव्यां सोदासो नाम नंदनोजज्ञे । अपरेद्युर्नघुपोनृपः सोदासे राज्यमारोप्य सिद्धे रेकमौपयिकं परिव्रज्या मुपाददे । सोदासनृपते राज्येऽर्हतामष्टाहिकोत्सवे मंत्रिणः पूर्वराज्यवदमारि माघोपयामासुः । ते च सोदासमपि मोचु स्त्वत्पूर्वै र्मांसं नाखादि त्वमपि तन्मास्म खादीः । सदा मांसादनप्रियः सोदासोऽपि सूदमवदत् त्वयाऽतःपरंमवश्यं प्रच्छन्नं मांसमादेयमिति । सूदोऽप्यमार्यां घुष्टायां सत्यां कुत्रचिदपि मांसं न प्राप हि असद्वस्तु केनापि क्वापि आकाशपुष्पवन्न प्राप्यते । इतो मांसाप्राप्तिः इतो राजाज्ञा च मां वाधते, तत्र किंकरोमीति विमृशन्सूदो मृतार्भकमपश्यत् । स वल्लव स्तस्यैव मृतार्भकस्य मांसमादाय तै स्तैर्विज्ञानैः संस्कृतस्य सोदासाय तदा ददौ । सोदासोऽपि हि तन्मांसमश्नन्नेवमवर्णयत् : अहोऽमुष्य मांसस्य कोऽप्यतिप्रीणको रसोस्ति । सूपकारं च पप्रच्छ

---

१ खंडितप्रतिमामिव

त्रटत्रटिति त्रोटयित्वा त्रोटयित्वा रंकिका वालुकमिव मांसमपि जग्रसे । मतंगजीइक्षूनिव सा कर्कशा कटत्क-टिदिति कुर्वन्ती कीकसान्यपि दंतयंत्रातिथी चक्रे । सःमुनिस्तु इयं कर्मक्षयसहायेतिध्यात्वा न मम्लौ किन्तु विशेषतः उच्चावचरोमांचकंचुकोऽभूत्। व्याघ्र्यैवं खाद्यमानोऽपि सुकोशलमुनि स्तत्कालोत्केवलः शुक्लध्यानमुपेयिवान् मोक्षञ्च ययौ। सः कीर्तिधरो मुनिरपि समुत्पादितकेवलः क्रमात्सुखाद्वैतारपदं पद माससाद । इतश्च सुकोशलनृपप्रिया चित्रमालापि कुलनंदनं हिरण्यगर्भं नंदनं सुषुवे। यौवनं प्राप्तस्य तस्य नृपते रागभैवासं मृगनेत्रा मृगावती सधर्मचारिण्यभवत् । हिरण्यगर्भस्य राज्ञो मृगावत्यां वपुषाऽपरः स्इव नघुषो नाम तनयोऽजायत। हिरण्यगर्भोऽन्यदोपसर्पत स्तृतीयवयसः सत्यंकाराभं स्वे मौलौ पलित मपश्यत् । तदैव जातवैराग्यः स राजा नघुषं सुतं स्वे राज्ये न्यस्य विपुलमुन्यन्ते व्रतमग्रहीत्। नृसिंहस्य नघुषस्य सिंहिका नाम्नी पत्नी अभूत् तया सह रममाणः स पैतृकं राज्यमन्वशात् । अन्यदा नघुष उत्तरापथभूपालान् जेतुंजगाम, सिंहिकां देवीं च निजराज्ये मुमोच, इह नघुषो नास्तीति मत्वा तदा दक्षिणापथभूभुजो ऽयोध्यां रुरुधिरे हि वैरिण श्छलनिष्ठा भवन्ति। तदा च सिंहिका देवी पुंवत्तानभ्य पेणय दाशुजिगायानाशयच्च सिंही द्विपान्नहंति किम् ।। अन्यदोत्तरापथं जित्वा नघुषो राजा ऽऽगतः पत्न्या जयोदन्तं शुश्रावेदं च स दध्यो स्पष्टधाष्टर्यमिदं कर्म मादृशामपि दुष्करं महाकुलप्रसूतानां महिलानां तु न युज्यते । तन्नूनमिय मसती, हि सत्यः पतिदेवताः भवन्ति पतिसेवां विना नान्यज्जानत ईदृशं पुनः कथं

व्रतधारिणं स्वामिनं पुरान्निर्वासितं ज्ञात्वा निरर्गलं रोदिति स्म । सुकोशलनृपोऽपि किं रोदिषीति तां मपच्छ
सापि शोकगद्गदै रक्षरै रेवं कथयामास । तवपिता कीर्तिधर स्त्वां बालकं राज्येन्यस्य प्राव्राजीत् सोद्येहपत्तने
भिक्षार्थं माविक्षत् । तद्दर्शनात्त्वापि व्रतग्रहणशंकया ते मात्रा सः निर्वासितोऽनेनदुःखेन रोदिमि । कोशलोऽपि
तच्छ्रुत्वा पितुरन्तिके गत्वा विरक्तात्मा बद्धांजलिः सन् तस्माद्व्रतमयाचत । चित्रमाला नाम्नी [1]गुर्वी मंत्रिभिः
सह तत्रेत्योवाच हे स्वामिन्नस्वामिकं राज्यं त्यक्तुं नार्हसि । राजाप्यवोचत् गर्भस्थोऽपि हि सूनु र्मया तव
भाविन्यपि राज्ये उपचारोहि भूतवदभिषिक्तः इत्युक्त्वा लोकं संभाष्य सुकोशलः पितु रन्तिके मवव्राज दुस्तपं
तप स्तेपे च । तौ पितापुत्रौ महामुनी निर्ममौ निःकषायौ महीतलं पावयन्तौ युता वेव विज ह्रतुः । तनयस्यापि
वियोगेन खेदभाक् सहदेव्यपि आर्तध्यानपरा मृत्वा गिरिगह्वरे व्याघ्र्यभूत् । इतश्च तौ दान्तमानसौ स्वशरीरेऽपिनिः-
स्पृहौ साध्यायतत्परौ सुस्थिताकृती प्रावृट्काल चतुर्मासी म कीर्तिधरसुकोशलमहामुनी त्येतु मेकस्य गिरे र्गुहायां
तस्थतुः कार्तिके मासि संप्राप्ते सति पारणाय मयान्तौ तौ यमदूत्येव दुष्टया तया व्याघ्र्या मार्गे दृष्टौ । ततः सा व्याघ्री
अभितः स्फारिताननना सती शीघ्रं दधावे सुहृदां दुर्हृदामपि दूरादभ्यागम स्तुल्यएव । व्याघ्र्या मापतन्त्यामपि तौ क्षमा
श्रमणोत्तमौ धर्मध्यानंमपेदानौ कायोत्सर्गेण तस्थतुः । सा व्याघ्री तु विद्युदिवादौ सुकोशले पपात, दूरापातमहा-
रेण तं पृथ्व्या मपातयत् । नखांकुशै स्तच्चर्म चटच्चटिति दारं दारं मरुपांथिका वारीव सा पापाऽसृमास्र मपात् । सा रदै

[1] सगर्भा

पंचविंशतिः कुमारा स्तथैव मव्रजिताः । अथ विजयभूपति र्वज्रबाहुं मव्रजितं श्रुत्वा असौ बालोऽपि वरं नाह मिति वैराग्य मासदत् । ततश्च विजयः पुरंदरं पुत्रं राज्येन्यस्य निर्वाणमोहस्य मुनेः पार्श्वे व्रतमुपाददे । पुरंदरोऽपि स्वे राज्ये पृथिवीकुक्षिजं कीर्तिधरं सुतं न्यस्य क्षेमंकरर्ष्यन्ते यति रभवत् । अथ कीर्तिधरोराजा पुरंदरः पौलोम्येव सहदेव्या पत्न्या समं वैषयिकं सुख मभूक्त । अन्येद्युः मवव्रजिषुः सो मंत्रिभि रभण्यत, यथानुत्पन्न पुत्रस्य तव व्रतादानं नार्हतीति । अपुत्रे त्वयि व्रतभाजि सतीयं वसुंधरा निर्नाथा स्यादतो हे स्वामिन् यावत्ते सुत उत्पद्यते तावत्तत्मतीक्षस्व । ततस्तथैवगृहवासिनः कीर्तिधरस्यापि कालेगच्छति सति सहदेव्यां सुकोशलः पुत्रोऽभूत् । इमं बालं जातं ज्ञात्वा मे पतिः मव्रजिष्यतीति बुध्या सहदेवी तं जातमात्र मगोपयत् । मेदिनीनाथ स्तं गुप्तमपि बालकं विवेद हि प्राप्तोदयं तरणिं तिरोधातुं क इश्वरः स्यात् । अथ स्वार्थकुशलो राजा सुकोशलं राज्ये न्यस्य विजयसेनस्य सूरेः पादान्ते व्रत माददे । तीव्रं तपस्तप्यमानः परीषहान्सहमान स्वगुर्वनुज्ञयैकाकि विहारेणान्यतो ययौ । अन्यदा मासोपवासी सः पारणेच्छया साकेतमाजगाम,

मध्याह्ने तत्रच भिक्षार्थमभ्रमत् । सौधाग्रस्था सहदेवी तं दृष्ट्वा इत्यचिन्तयत् यत्पुराहमनुष्मिन्पत्यौ मव्रजिते सति पतिहीनाऽभवम् अद्य वत्सः सुकोशलोऽपि यद्येनं दृष्ट्वा मव्रजेत् तदा पुत्रोऽपि मे न स्याद् ततः परं निर्वीरा स्याम् । तस्मान्निरपराधोऽपि भर्त्ताऽपि व्रतधार्यपि सूनो राज्यस्थेमचिकीर्षया नगरान्निर्वास्यः । इति राज्ञी तमन्यलिंगिभिः सार्धं निरवासयत् हि लोभाभूतमनसां विवेकः कियच्चिरं स्यात् । अथ सुकोशलस्य धात्री

जीमूतमिव तं दृष्ट्वा जातसंमदःकुमारः सपदि वाहनं धृत्वा इदमाह स्म । अहो कोऽप्येष महात्मा महामुनि वन्द्य एव मया भूयसा पुण्येन चिन्तामणि रिव दृष्टः । अथोदयसुंदर एव मुवाच भो कुमार ! त्वं परिव्रज्या मादित्ससे किम् ? सोऽवदन्मे चित्तमस्ति । उदयो भूयो नर्मणा प्रोचे यदि ते मनोऽस्ति तदद्य मा विलंबस्व, अद्याहमपि ते सहायोऽस्मि । ततः कुमार एवं व्याजहार वारिधि मर्यादा मिव स्वा मिमां संधां मात्याक्षीः, सोऽप्यामेवेत्यभापत । कुमारो मोहादिव तस्माद्वाहना दुत्तीर्य उदयसुंदरादिभि रावृत स्तं वसन्तशैल मारुरोह । अथेभवाहननंदनो वज्रबाहु मवादीत् हे स्वामिन्नद्य मा प्रव्राजीः मे नर्माभिभापणं धिक् । आवयो नर्मोक्ति रासीत् तद्व्यतिक्रमे को दोपः ? नर्मोक्ति र्हि प्रायो धवलगीतवत् सत्या नैव भवति । अखिलेष्वपि व्यसनेषु त्वं सहायो भविष्यसीत्यस्मत्कुलमनोरथानकांडे मा भांक्षीः । अद्यापि तव हस्ते इदं मांगल्यकंकण मस्ति तद्विवाहफलं भोगान्सहसा कथ मुञ्झसि । त्वया तृणवदुज्झिता सांसारिकसुखास्वादवंचिता इयं मनोरमा हेनाथ ! त्वया विनाकथं जीविष्यति । अथ वज्रबाहुकुमार उदयसुंदरं जगाद भो मित्र मर्त्यजन्मद्रोः सुंदरं फलं चारित्र्यलक्षणमस्ति । ते नर्मोक्तिरपि शुक्तिषु स्वातिजीमूतवारि मौक्तिकसादिवास्मासु परमार्थसाद्बभूव । त्वत्स्वसा कुलीनाचेत् तत्प्रव्रज्यां ग्रहीष्यति नो चेदस्याः पंथाः शिवः, मम तु भोगैः पुनरलम् । तत् त्वंव्रतायमा मनुमन्यस्व त्वमपि नोऽनुयाहि हि स्वसंधापालनं क्षत्रियाणां कुलधर्मः खलु । वज्रबाहु रेवमुदयं प्रतिबोध्य गुणरत्नानां सागरं गुणसागरं महर्षि मुपाययौ । वज्रबाहु स्तत्पादान्ते प्रव्रज्या मुपाददे, अथोदयो मनोरम

इत्याचार्य श्रीहेमचन्द्र विरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि अन्वयात्मक गद्य-रचनायां हनुमदुत्पत्ति वरुणसाधनोनाम तृतीयः सर्गः समाप्तः ॥

## अथ चतुर्थः सर्गः

इतश्च मिथिलापुर्यां हरिवंशे वासवकेत्वाख्यो महीपतिः प्रिया च तस्य विपुला नाम्नी आसीत् । भुवि विश्रुतोऽनूनश्रीस्तयोश्च सूनुः प्रजानांजनकइव जनको ना म पार्थिवो बभूव ।

इतश्चायोध्यायां पुरि ऋषभस्वामिराज्यतः केषुचिदिक्ष्वाकुवंशान्तर्भूतादित्यवंशेषु राजसु यातेषु सत्सु केषुचिन्मोक्षं यातेषु संख्यातीतेषु स्वर्गं यातेषु सत्सु विंशस्यार्हत स्तीर्थे प्रसर्पति सति विजयो नाम राजा हिमचूला नाम्नी तत्प्रिया च बभूव तयो र्वज्रबाहुपुरन्दरौ द्वौ पुत्रा बभूताम् ।

इतश्च नागपुरे पुरे इभवाहनो राजा तत्पत्नी चूडामणि स्तत्पुत्री मनोरमा चाभूत् ततो वज्रबाहु स्तत्र गत्वोद्यद्यौवनां श्वेतमरीची रोहिणीमिव महता महेन तां परिणिनाय । अथ स मनोरमा मादायानुगामिनोदय सुंदरेण श्यालेन भक्त्या च समं स्वपुराय प्रतस्थे । गच्छन्सोऽन्तरा तपस्तेजोभिरीश्वरं वसंताद्रिस्थ मुदयाचल-स्थं भास्करमिव मोक्षाध्वमीक्षकमिवोत्पश्यमातापनापरं तपस्यन्तं गुणसुंदरनामानं महामुनि मपश्यत् । मयूरो

शतं निर्ययुः । वरुणात्मजा रावणमभ्येत्य योधयामासुः, वीरो वरुणोऽपि हि वीरै र्वरुणाद्यैः समं युयुधे। महौजसो वारुणयोऽरुणाक्षा आहवे जात्यश्वान क्रोड[1] मिव दशकंधरं खेदयामासुः । अत्रान्तरे क्रोधदुर्धरो दारुणो हनुमानेत्य केसरी कुंजरानिव वरुणात्मजानयोधयत् । अथ रक्तहनुको हनुमान् क्रुधा पशूनिव तान् वारुणीन् विद्यासामर्थ्यतोऽस्तभ्नात् बबंध च । तान्दृष्ट्वा क्रुद्धो वरुणो दन्ती मार्गतरूनिव सुग्रीवप्रभृतीन् धुन्वन् हनुमतेऽभ्यधाविष्ट । रावणोऽपि नदीरयमचल इव विशिखधोरणीं वर्षन्नापतन्तं तमन्तरा स्खलयामास । वृषभेण वृषभ इव कुंजरेण कुंजर इवोच्चैः क्रोधान्धो वरुणो रावणेन चिरं युयुधे । छली रावणः सर्वौजसा वरुणमाकुलीकृत्योत्पत्येन्द्रमिवाबध्नात् यत् सर्वत्र बलं छलवद्भवति । ततो जयजयारावै र्मुखरीकृतदिङ्मुखः पृथुस्कन्धो दशकंधरः स्कंधावारं जगाम । तत्र रावणः पुत्रैः सह वशंवदं वरुणं मुमोच हि महात्मनां प्रणिपातान्तः प्रकोपो भवति । ततो वरुणः सत्यवतीं नाम पुत्रीं हनुमतेऽदात्, हि स्वयं दृष्टसार ईदृग्जामाता दुर्लभः खलु । अथ रावणो लंकाया मगात् हृष्टश्च चन्द्रणखापुत्री मनंगकुसुमाभिधां हनुमतेऽदत्त च । सुग्रीवेण पद्मरागा, नलेन हरिमालिनी, अन्यैश्च सहस्रसंख्याः स्वकाः सुता स्तस्मै दत्ताः । अथ दशमुखेन दृढं श्लिष्ट्वा मुदा विसृष्टो अन्येऽपि वानरपतिप्रमुखादोष्मान् हनुमान् हनुपुरे जगाम, अन्येऽपि वानरपतिप्रमुखा विद्याधराः प्रहृष्टाः सन्तो निजनिजं नगरं प्रजग्मुः ।

१ किरिम्

कारण मियं साध्वी स्नुषा दोपं विना त्यक्ता त्वया च रक्षिता । सद्यो व्यसनवेलायाः पयोधिवन्न्यवर्तत, प्रशांत शोकज्वलनः पवनोऽपि मुदितो हि । सर्वविद्याधरेश्वरा स्तत्र विद्यासामर्थ्यतो महान्त मानंदाब्धिनिशाकर मुत्सवं चक्रुः । ततस्ते सर्वेस्वै विमानै दिवं ज्योतिष्मती मिव विदधाना मुदा हनुरुहं पुरं जग्मुः । महेन्द्रोऽपि मानसवेगया समं तत्रापयौ, सा केतुमती, अन्ये सर्वे वान्धवा अप्याययुः । विद्याधरेन्द्रैः संबंधिबन्धुभि स्तत्रापि मिथः पूर्वोत्सवादप्यधिको महोत्सवो विदधे । ततश्चतेसर्वेऽन्योन्यमापृच्छय स्वं स्वं पुरं ययौ, पवन-स्त्वंजनाहनुमद्युतस्तत्रैव तस्थौ, हनुमॉस्तत्र पितु र्मनोरथैः सह वव्रधे, कलाश्च जगृहे सर्वा विद्याश्च समसाधयत् ।

इतश्चामर्षणपृष्ठः स्थेमपर्वतो रावणः संधिदूषण मुत्पाद्य वरुणं जेतुं प्रतस्थे, ततश्च सर्वे विद्याधरेश्वरा नागराजायतभुजः शस्त्रशास्त्रविचक्षणो हनुमान् त्विषा भानुमानिव क्रमाच्च यौवनं प्राप । दूताहूताश्च वैताढ्यकटकोपमं तस्य कटकं कुर्वाणाः सन्त इयुः, तत्र तौ पवनप्रतिसूर्यौ यावत्प्रचेलतु स्तावदवष्टं भैकसानुमान् हनुमानित्यूचे । हे तातौ ! युवामिहैव तिष्ठतमहमपि द्विषो जेष्यामि, हि तीक्ष्णे प्रहरणे सति वाहुना कः प्रहरेत् । वालत्वान्नानुकंप्योऽस्मि, यद्युष्मत्कुलजन्मनां पौरुषावसरे प्राप्ते वयः खलु न प्रमाणम् । एवं तावति निर्बन्धात्प्रतीक्ष्य चोच्चकै रापृच्छय ताभ्यां मूर्ध्नि चुंबितः कृतप्रस्थानमंगलः महासामंतसेनानी सेना शतसमावृतो दुर्वारविक्रमो हनुमान्रावणस्कंधावारे प्रययौ । स्वयं जयमिव हनुमंतं समायान्तं प्रणमन्तं च दृष्ट्वा दशकंधरो मुदा स्वांके दधे । ततो रावणो वरुणपुर्या रभ्यर्णे युद्धाय तस्थौ वरुणो दोष्मन्तो वारुणेयाश्च

मुपैक्षत । आदितस्त्वन्मात्रैवैक मविमृश्य कृतं त्वं द्वितीयं मा कृथाः सुधीरसि । स्नुषान्वेषणहेतोश्च सहस्रशो विद्याधरा मया आदिष्टाः सन्ति तस्माद्धे वत्स ! तदागमसागमयस्व ।

अत्रान्तरे तत्प्रहिताः केऽपि विद्याधरोत्तमाः पवनांजने गवेषयन्तो हनुपुरं ययौ । ते चांजनाविरह-दुःखतः पवनस्याग्निप्रवेशप्रतिज्ञां प्रतिसूर्यांजनयो राचचक्षिरे । दुःश्रवं तद्वचः श्रुत्वा विषं पीत्वेवांजना हा हतास्मीति जल्पन्ती मूर्छिता च सती भुवि पपात । चन्दनांभोभि रासिक्ता तालवृन्तैश्च वीजिता लब्धसंज्ञा सा दीनगीः सतीति रुरोद । पतिव्रताः पतिशोकाद्धुताशने प्रविशन्ति, हि भर्तारं विना तासां जीवितं दुःखाय खलु । नारीसहस्रभोक्तॄणां भोगतां भर्तॄणां पुनः प्रेयसीशोकः क्षणिक स्तदग्निप्रवेशनं कुतः । विरहे सत्यपि इयच्चिरं जीवन्त्यां मयि हा त्वयि वह्निप्रवेशति सति विपरीतमिदं जज्ञे । महासत्वस्य तस्य, अल्पसत्वायाश्च मम नीलकाचयोरिव संप्रतीदमन्तर मुपलब्धम् । मम श्वसुरयो र्न दोषः पित्रोरप्ययं न दोषः, किन्तु मंदभाग्याया ममैवेदृशो दोषः । इति रुदन्तीं तां बोधयित्वा प्रतिसूर्यः सनंदनां विमानवरमारोप्य पवनान्वेषणे ययौ । भ्राम्यन् स तत्रैव भूतवनाभिधे वने प्राप, साश्रुणा प्रहसितेन दूरादपि स ईक्षांचक्रे । ततः स प्रहसित आरात् सांजनं समायान्तं तं जयपूर्वकम् प्रह्लादपवनंजययो राख्यत् । ततः प्रतिसूर्योऽञ्जनापि विमाना दुत्तीर्य भून्यस्त-मस्तकौ दूरात् भक्त्या प्रह्लादं नेमतुः । प्रतिसूर्यं परिष्वज्य पौत्रं अंके निवेश्य च जातसंह्लादः प्रह्लाद एवं जगाद, व्यसनांभोधौ सकुटुंबं मज्जन्तं मामद्य समुद्धरन् त्वमेव संबंधिनां धुरि बन्धु रसि । मद्वंशपर्वभूता शाखासंतान-

माप्यते । एवं रुदतीं तां प्रह्लादः कथंचन निवार्य सबलः स अंजनां सुनुं चान्वेष्टुं चचाल । आसानां सर्वे विद्याधरेन्द्राणा मन्तिके अंजना पवनान्वेषहेतवे स नरान् प्रजिघाय । स्वयमपि विद्याधरैः सह सूनुं स्नुषा श्चालोकयन् प्रादुर्भूतत्वरो भ्राम्यन् भूतवनं वनं सोऽगात् । अत्रान्तरे तत्र वने पवनश्चितां विरचय्य ज्वलनं ज्वालयामास तंच प्रह्लादो ददर्श, तदापवन उपचितं स्थित्वा प्रोचे हे वनदेवताः ! अहं विद्याधरेन्द्रप्रह्लाद केतुमत्यो स्तनयोऽस्मि, अंजना नाम्नी महासती च मे पत्न्यस्ति, निर्दोषापि सा मयोद्वाहात्प्रभृत्यपि खेदिता तां परित्यज्य स्वामिकार्यतो यात्रायां चलितो दैवात्तामदोषां ज्ञात्वोत्पत्य पुनरागमम् । तां च स्वैरं रमयित्वा-ऽभिज्ञानञ्च समर्प्य पितृभ्या मपरिज्ञातः पुन कटक मापतम्, जातगर्भा च सा मद्दोपात् दोषशंकिभि र्गुरुभि र्निर्वासिता साक्वाप्यस्तीति न बुध्यते, अग्रे, अधुना च निर्दोषा सा ममैवाज्ञानदोषेणेमां दारुणां दशां सम्प्राप्ता तस्मादपंडितं पतिं मां धिक् धिक् । अखिलां पृथ्वीं भ्रान्त्वा सम्यङ्मार्गयतापि मया यथा रत्नाकरे रत्नं नाप्यते तथा मंदभाग्येन सा नाप्ता । तदधेमां स्वां तनुमत्र हुताशने जुहोमि जीवतोऽपि मे यावज्जीवं विरहानलो दुःसहः, यदि मे कान्तां पश्यथ तदा यूयं ज्ञापयध्वं यत् त्वद्वियोगात् त्वत्पति र्हुताशने प्रविवेश, इत्युक्त्वा तत्र चितायां हविर्भुजि दीप्यमाने सति पवनो झम्पांदातुंनभस्तले मोत्पपात । श्रुततद्वचनः प्रह्लादोपि वेगादति संभ्रमी तं वक्षःस्थलोपपीडं स्वबाहुभ्या मधारयत् । प्रियवियोगार्तिप्रतीकारस्य मृत्योः संप्रति मम कोयं विघ्न इत्युच्चैः पवन उवाच । साश्रुः प्रह्लादोप्यब्रवीत् एषः पापस्ते पिताऽस्मि योहं निर्दोषाः स्नुषाया निर्वासन

लंकां जगाम पवनोऽपि तमापृच्छय स्वमेव पुर माययौ, तत्र पितरौ प्रणम्य अंजनावासगृहं ययौ तच्च गतज्योत्स्न मुडुपमिवानञ्जन मद्राक्षीत् । नयनयो रमृतांजनदर्शना सा मत्प्रेयसी अंजना क्वास्तीति तत्रस्था मेकां स्त्रियं पप्रच्छ । सापि त्वयि यात्रायां गते सति कियत्स्वप्यहस्सु गर्भसंभवदोषतः केतुमत्या निर्वासिता भयाकुला हरिणीव सा पापै रारक्षपूरुषै र्नीत्वा महेन्द्रनगरासन्नेऽरण्ये मुमुचे ।

अथ पवन इति श्रुत्वा पारापत इव पवनरंहसा प्रेयस्युत्कः सन् श्वसुरपत्तनं ययौ, स तत्रापि प्रियामपश्य न्नेकां योषितं पप्रच्छेह मे प्रेयस्यंजनाऽऽयाताऽथवा न ह्यायातेति । सा चख्याविह वसन्ततिलकान्विता साया-सीत् पर मुत्पन्नदोः शील्यदोषतः पित्रा निर्वासिता । पविनेव तेन वचसाऽऽहतः पवनंजयः प्रियामन्वेष्टुं शैलवनादिषु भृशमभ्राम्यत् । परं शापभ्रष्टः अमर इव तत्प्रवृत्तिश्च न प्राप तेन विषण्णः स निजं मित्रं प्रहसित मेवं जगाद, हे सखे ? गत्वा पित्रोः शंस यथा इमां महीं भ्राम्यतापि मया अद्ययावत् क्वाप्यंजनसुंदरी नालोकि, तस्मात्पुनरपि तपस्विनीं ता मरण्ये गवेषयिष्यामि द्रक्ष्यामि चेत् साधु नो चेत्तर्हि पावकं वेक्ष्यामि, एवमुक्तः प्रहसितो द्रुतमादित्यपुरे गत्वा प्रह्लादकेतुमत्यो स्तद्वाचिकं कथयामास, केतुमती तच्छ्रुत्वा हृदये ग्राव्णा हतेव मूर्छिता भूमौ न्यपतत् संज्ञां लब्ध्वेत्युवाच च । हे प्रहसित ! कठिनाशयो व्यापत्तौ कृतनिश्चयः स प्रियमित्रं त्वया एकाकी वनं मुक्तः किम् ? अथवा मयापि किं परमार्थतो निर्दोषा सा अविमृष्यविधा यिन्या पापिन्या निरवास्यत, मया साध्व्या दोषारोपणजं फल मत्रैव लब्धं अथवात्युग्रपुण्यपापानामिहैव फल

ह्यवश्यं महाराजो भावी, चात्रैव भवे सेत्स्यति । तथाहीयं चैत्रस्य बहुलाष्टमी सुतिथिः, श्रवणं नामनक्षत्रं, वासरस्य स्वामी विभावसुरस्ति । तुंगंभवनमाश्रित आदित्यो मेषे वर्तते, चन्द्रमा मध्ये भवने समवस्थितो मकरराशौ तिष्ठति । लोहितांगो वृषे राशौ मध्येस्थितः विधोः सुतो मध्ये मीने स्थितः धिषणोऽप्युश्चै भवन मध्यास्य कुलीरे स्थितः । तुंगो दैत्यगुरुर्मीनेऽस्मिन्नेवशनैश्चरः मीनलग्नोदये ब्रह्मयोगे सर्वमिदं शुभमस्ति । अथ प्रतिसूर्यः ससखीं सात्मजां तां यामेयीं विमानवरमारोप्य स्वपुरं प्रति प्रतस्थे । अथ बालको विमाने लंबमानोच्चरत्नमालंबर्किकिणीर्जिघृक्षु र्मातु रुत्संगादुत्पपात । व्योम्नश्च्युतः पविरिव गिरे र्मूर्ध्नि पपात, तत्पातनिर्घातवशात् स गिरिः कणशोऽभवत् । अंजनसुंदरी पाणिना हृदयं सद्य आजघ्ने दरीरपि प्रतिरव रोदयन्तीव रुरोद, ततः प्रतिसूर्योऽनुपत्य भागिनेय्या स्तमक्षतांग मर्भकमुपादाय नष्टनिधानवदर्पयामास । प्रतिसूर्यो मनोवेगेन विमानेन तत्रुतः सद्यः कृतमहोत्सवे हनुरुहे पुरे ययौ । तत्रांजनां नीत्वा मुदा स्ववेश्मनि चोत्तारयामास, तच्छुद्धान्तोऽपि कुलदेवता मायातामिव तामपूजयत् । यस्माज्जातमात्रोऽयं हनुरुहे पुर आययौ तस्मान्मातुलस्तस्यसूनो रभिधानं हनुमानिति चक्रे । विमानतः पतितेनानेन यच्छैलश्चूर्णितस्ततः स तस्य श्री शैल इत्यन्यामप्याख्या मकरोत्, हनुमानपि तत्रयथासुखं क्रीडन् मानसांभोजिनीवने राजहंसार्भक इवावर्धिष्ट । श्वश्र्वाऽध्यारोपितो दोपः कथं नामोत्तरिष्यतीति चिन्तया सदैवांजनाऽन्तः शल्येवाताम्यत् ।

इतश्च पवनः सन्धि विधाय खरदूषणौ वरुणान्मोचयामास रावणञ्च तोषयामास, ततश्चरावणः सपरिग्रहो

उभे स्थापयित्वा च स मुनीन्द्रः खगेन्द्रवन्नभसा समुत्पपात। अथ पुच्छच्छटाच्छोटै रवनिं स्फोटयन्तमिव बूत्कारपूर्णदिक्कुंजं कुंजरास्रक्करालितं दीपायमाननयनं वज्रकंदाभदंष्ट्रिकं क्रकचक्रूरदशनं ज्वालासोदरकेसरं लोहांकुशोपमनखं शिलासदृगुरःस्थलं पंचाननयुवानं समायान्तं तेऽपश्यताम्। ततो वेपथुमत्यौ ते भूतलं विविक्षूइव हरिणिके इव यावत्कांदिशीकेऽतिष्ठताम्। तावत्तद्गुहाधिपो मणिचूलाभिधोगन्धर्वः शारभं रूपं विकृत्य तं पंचास्यमनाशयत्। ततः शारभं रूपं संहृत्य स्वश्च रूपं प्रतिपद्य सप्रिय स्तयोः प्रमोदायार्हद्गुणस्तुतिं जगौ। तेनचामुक्तसान्निध्ये तत्रगुहायां संस्थिते ते मुनिसुव्रतदेवार्चां स्थापयित्वाऽर्चतः स्म। अन्येद्युस्तत्रांजना सिंही उत्कटं सिंहमिव कुलिशांकुशचक्रांकपादं तनयं सुषुवे। तस्याश्च सूतिकर्माणि हर्षवशात्स्वयंसमाहृतै रेधोजलादिभि र्वसन्ततिलकाऽकरोत्। सुतमुत्संग आरोप्योदश्रुवदनांजनसुंदरी तां गुहां रोदयन्तीवारोदीत्। हे महात्मन्नत्र विपिने जातस्य तव पुण्यवर्जिता वराक्येषाऽहं जन्ममहोत्सवं कीदृशं करोमि। एवं तां रुदतीं प्रेक्ष्य खेचरः समुपेत्य मधुरगीः प्रतिसूर्यो दुःखकारणमपृच्छत्। अथवाष्पायितमुखी सखी विवाहादारभ्य पुत्र-जन्मावध्यशेषतोंजनया दुःखहेतु माचख्यौ। सोऽपि सद्यो रुदन्नवादीदहं हे वालिके हनुपुरेश्वरः सुंदरीमाला कुक्षिभूश्चित्रभानुज स्त्वज्जनन्याश्च भ्राता एषोऽस्मि, दिष्टया त्वां जीवन्तीं दृष्टवानस्मि, अत आश्वसिहि। सापि तं मातुलं विदित्वाऽधिकाधिक मरोदीत्, यदिष्टावलोकनात्प्रायोदुःखं पुनर्नवीभवति। रुदन्तीं तां वारयित्वाऽथ सहागतं दैवज्ञं प्रतिसूर्यः सूनोर्जन्मादि पप्रच्छ स दैवज्ञोऽप्यवदत्। शुभग्रहवले लग्ने जातोऽयं पुण्यभाग् शिशु

नगरे सुकंठराजकनकोदर्योः सिंहवाहनो नामा तुगभवत्। सः सुचिरं राज्यं भुक्त्वा श्रीविमलप्रभोस्तीर्थे लक्ष्मीधरमुनेः पादमूले व्रतमुपाददे। सो दुस्तप स्तप स्तप्त्वा मृत्वा लान्तके सुरोऽभूत्, ततश्च्युत्वाऽस्यास्त्व त्सख्या उदरे समवातरत्। अयमस्याः पुत्रो गुणानामालयो दोष्मा न्विद्याधरेश्वरोऽनवद्यश्चरमदेहो भविष्यति। अन्यश्च कनकपुरे नगरे महारथशिरोमणि र्नामतः कनकरथो नरेश्वरोभूत्। तस्य च कनकोदरी लक्ष्मीवतीति पत्न्यौ बभूवतु स्तत्र लक्ष्मीवती सदाऽत्यन्तश्राविकाऽभवत्। सा गृहचैत्ये रत्नमयं जिनबिंबं विधाय द्वयोः कालयोः प्रत्यहमपूजयदवन्दिष्ट च। हताशया कनकोदर्या तु मात्सर्यात्साऽर्हत्प्रतिमा हृत्वाऽपवित्रेऽवकरस्यान्त श्चिक्षिपे। तदा विहरन्ती जयश्री र्नाम गणिनी, आगता तद्दृष्ट्वा तामेवमुवाच हे शुभे! त्वं किमिदमकार्षीः। हन्तात्र भगवत्प्रतिमां प्रक्षिपन्त्या त्वयाऽयमात्माऽनेकभवदुखानां भाजनं कृतः। इत्युक्ता सानुतापा सा ततः प्रतिमां गृहीत्वा प्रमृज्य क्षमयित्वाच यथास्थान न्यवेशयत्। सा तदादि सम्यक्त्वधरा सती जैनं धर्मं प्रपाल्य काले विपद्य सौधर्मे कल्पे देव्यजायत। ततश्च्युत्वेयं ते सखी महेन्द्रस्य सुताऽभूत्, अस्यास्तदर्हदर्चाया दुःस्थानक्षेपजं फलमस्ति। तस्मिन्भवे त्वमस्या जामि[1] रभू स्तस्य कर्मणोऽनुमंत्री च ततोऽनया सह तत्पाक मनुभुंक्षे। अस्या स्तस्यदुःकर्मणः फलमिदं भुक्तप्रायमस्ति तद्भवे भवे शुभोदर्कों जिनधर्मो गृह्यताम्। एतां स्ववेश्मनि नेता मातुलोऽकस्मादायातश्चाचिरादेतस्या पत्या सह मेलकश्च भविष्यति। एव मुक्त्वाऽर्हते धर्मे ते

---

1 पुत्र

भाग्याया मे गुरूणामविचारतोऽग्रेदंडोऽभवत्पश्चादपराधविवेचनमभवत् । हे केतुमति ! त्वयाकुलकलंकः साधु रक्षितः, हे तात ! त्वयापि संबंधिभयात्साधुविचारितम् । दुखितानां हि नारीणा माश्वासनकारणं हि माता भवति, तद्धे मातः पतिच्छंदज्ञुपात्वयाप्यह मुपेक्षिता । हे भ्रातः ! ताते जीवति सति ते दोषो नास्त्येव, हे नाथ ! त्वयि दूरस्थे सति सर्वोऽपि ममारिर्जज्ञे । अथाह मेका मंदभाग्यशिरोमणि र्जीवामि तथा सर्वथानाथं विना स्त्री एकाहमपि मा जीवतु । एवं विलपन्त्यंजना सख्या संबोध्याग्रतो निन्ये, तत्रान्तर्गुहं ध्यानस्थ ममितगतिं मुनिं ददर्श । ते च तं चारणश्रमणं प्रणम्य विनयेन भूमौ पुरो निषेदतुः सोऽपि ध्यान मपारयत् । दक्षिणं करमुन्नम्य मनश्चिन्तितकल्याणमहारामैकसारर्णि धर्मलाभाशिष मदात् । सा वसन्ततिलका तु पुन र्भक्त्या नमस्कृत्य सर्वमप्यंजनादुःखं मूलतोऽप्याचख्यौ । अस्या गर्भं कोऽभवन्केन कर्मणा चेदृशीं दशा मेषा सम्प्राप्तेति तत्सख्या पृष्टः स मुनि रब्रवीत् अस्यैवजंबूद्वीपस्य भरतनामनि क्षेत्रे मंदरे नगरे नाम्ना प्रियनंदीति वणिगभूत् तस्य जयानाम्न्यां जायायां कलानिधि रिन्दुवत् प्रियदमो दमयन्तस्तनयोऽजायत । सोऽन्येद्यु रुद्याने क्रीडन् स्वाध्यायतत्परान्साधून्ददर्श, शुद्धधी स्तेभ्यो धर्मंशुश्राव । अथासौ सम्यक्त्वं विविधान्नियमांश्च जग्राह. साधुभ्यो यथोचित मनिन्दितं दानञ्च ददौ । तपः संयमनिष्ठोऽसौ क्रमयोगतो विपद्य द्वितीयस्मिन्कल्पे परमर्द्धिकोऽमरोऽभूत् । तत श्च्युत्वा जंबुद्वीपे मृगांकनगरेशितु र्हरिचन्द्रमहीपतेः प्रियंगुलक्ष्म्यां पुत्रोऽभूत् । सिंहचन्द्र इतिख्यातः स जैनं धर्मं प्रपद्य क्रमयोगाच्च विपद्य देवभूय मुपेयिवान् । ततोऽपि च्युत्वाऽत्रैव वारुणे वैताढये

सती तान्निशां कष्टमनयत्, दीना सा प्रातरुत्थाय शालीनेव शनै शनैः ह्रिया भिक्षुकीवापरिच्छदा पितृगृहद्वारे ययौ । तां दृष्ट्वा ससंभ्रमः प्रतीहारोऽनुयुज्य सख्याख्यातां तादृशीमवस्थां राज्ञेऽव्यजिज्ञपत् । लज्जानतश्याममुखो राजाप्येवं व्यचिंतयद् ध्रुवं विधेर्विपाक इव स्त्रीणां चरितमचिन्त्यम् । कुलटेयमंजना कुलकलंकाय गृहमागताऽस्ति, यदंजनलेशोऽपि शुभ्रंशुकं दूषयति । इति चिन्तामपन्नं तं नयनिष्ठोऽप्रसन्नीभवन्मुखः प्रसन्नकीर्तिस्तनय इत्यब्रवीत् । एषा द्रुतं निर्वासयताऽनया हि कुलं दूषितं, बुद्धिशालिनाऽहिदष्टांगुलिः किं न छिद्यते । अथ महोत्साहो नाम मंत्री भूपति मित्यवोचत् दुहितॄणां श्वश्रूदुःखे पितुः शरणं शरणम् । किञ्च हे प्रभो ! क्रूरा केतुमती श्वश्रूरपि निर्दोषामप्यमूं किञ्चनदोष मुत्पाद्य निर्वासयेदपि । यावद्दोषादोषयोर्व्यक्ति र्भवेत्तावदस्यैवैषा स्वपुत्री प्रच्छन्नं प्रतिपाल्यताम् कृपां कुरु । राजापीत्यवदत् सर्वत्रहि श्वश्रूरीदृश्येव भवति, परं वधूना मीदृशं चरितं तु कुत्रचिदपि नहि स्यादेव । किञ्चैष गर्भोऽपि पवनस्य ह्येवेति यत्संश्रूयते तत्पवनादेवामुष्या गर्भः कथं संभाव्यते । एषा सर्वथा दोषवत्येव, तथा साधु निर्वासिता, तस्मादितोऽपि द्राग् निर्वासयतां तन्मुखं नहि पश्यामः । ततःस्थ इत्थं राजाज्ञया दीनास्यैः कृताक्रन्दै र्जनैरपि कष्टमीक्षिता मंजनां निरवासयत् । क्षुधिता, तृषिता, श्रान्ता, निःश्वसन्ती, दर्भविद्धपदाऽसृग्भि र्महीतलं रंजयन्त्यश्रुवर्षिणी, पदे पदे प्रस्खलन्ती तरौ तरौ विश्राम्यन्ती सख्यासह दिशोऽपि रोदयन्ती, अंजनाऽचालीत् । साच यत्रयत्र पुरे ग्रामेऽगच्छत्तत्रतत्रच पूर्वायातनृपपुंभि र्निषेधात्स्थिति नासदत् । पर्यटन्ती तु सा कामप्येकां महाटवीं प्राप गिरिकुंजे तरोर्मूले निपत्य विललाप च । अहो ! मंद-

रस्तीरस्थे निजे शिविरे जगाम । ततोऽपि सैन्येन सह व्योमवर्त्मना नाकीव लंकानगरीं जगाम रावणश्च प्रणनाम । अथरावणोऽपि पृतनान्वितः पातालं प्रविश्य त्विषा तरुणार्क इव वरुणं प्रति प्रययौ । इतश्च तद्दिने विशेषसुंदरीभूतसर्वावयवशालिनी अंजनसुंदरी गर्भं बभार । आपांडुगंडश्रि मुखं श्यामवक्त्रौ पयोधरौ नितान्त मलसां गतिं प्रसृतोज्ज्वले नेत्रे चैवं भूतान्यन्यानि च तस्या वर्ष्मणि गर्भलक्ष्माणि दृष्ट्वा केतुमती नाम श्वश्रूः साधिक्षेपमदोऽवदत् । हे हले ! पापे ! पत्यौ देशान्तरगते सति यदुदरिण्यभू स्तत्कुलद्वयकलंककृत् कि मिदमाचारीः । मयेयच्चिरं त्वदवज्ञायां स्वपुत्रेऽज्ञानदोषिताऽज्ञायि, परं त्वमेव कुलपांसुलासीत्यस्माभिर्न ज्ञातम् । एवं श्वश्र्वा निर्भर्त्सितांऽजनसुंदरी पत्युरागमचिन्हं तदंगुलीय मदर्शयत् । लज्जानम्रमुखी सा भूयोऽपि श्वश्र्वैवमभर्त्स्यत यस्ते नामापि नाग्रहीत्तेनसह ते संगमः कथं भवेत् । अंगुलीयकमात्रेण नःकथ प्रतारयसि, हि पांसुलाः बहून्प्रतारणप्रकारान् जानंति । ततो हे स्वच्छन्दचारिणि ! अद्य मद्गृहान्निर्गच्छ पितु र्वेश्मनि गच्छ, अत्र मा स्थाः एतत्स्थानं हीदृशं नास्ति । निःकृपाराक्षसीव सा अंजनामेवं तर्जयित्वा पितृनिकेतने नेतु मारक्षनरा नादिक्षत् । उदश्रवस्ते वसन्ततिलकान्वितां तां यान मारोप्य महेन्द्रनगरोपान्ते नीत्वाऽमुंचन् । ततस्ते तां मातृवन्नमस्कृत्य क्षमयित्वा च ययुः, सेवकाः स्वामिवत्स्वाम्यपत्येऽपि समवृत्तयः स्युः । रविस्त दुःखदुःखित इव तदाऽस्तमगात् हि सन्तः सतां विपदं विलोकयितु मीश्वरा न भवन्ति । अथ सा घूकानां घोरघूत्कारैः फेरुयोषितां फेत्कारै र्वृकवृन्दानां क्रन्दितैः श्वाविदां विविधैः स्वनै रक्षसां संगीतैरिव पिंगलानां तुमुलैः स्फुटत्कर्णा इव जाग्रती

भर्ताऽन्यथा मां कथं त्यजेत् । स्वामिना पाणिग्रहात्प्रभृत्येव मुक्ताया मम द्वाविंशतिसमा जग्मु स्तथापि पापि न्यहमद्यापि जीवामि । अथ संक्रान्ततद्दुःखप्राग्भारपवनंजयोऽन्तः प्रविश्य बाष्पगद्गदवागिदं व्याहार्षीत् । विज्ञमानिनाऽविज्ञेन मयका त्वं निर्दोषाऽपि दोषमारोप्योद्वाहात्प्रभृत्यवज्ञातासि । हे प्रिये ! मद्दोषादीदृशीं दुःसहां दुर्दशा मागाः मृत्युं प्राप्तापि मद्भाग्यै र्मृत्युना स्तोकान्मुक्तासि । तत स्त्रपावती सा इत्युक्तवन्तं नाथ मुपलक्ष्य पर्यंकेषामवष्टभ्य विनमन्मुखाऽभ्युत्तस्थौ । हस्ती हस्तेन लतामिव वलयितेन दोष्णा तामाददानः पवनंजयोऽधिपर्यंकं न्यषदत् । पवनो भूयस्तामवोचत् हे प्रिये !अतिक्षुद्रबुद्धिना मया निरागास्त्वं खेदितासि तत्सहस्व । अंजनाप्येवमवोचद्धे नाथ ! इदं मास्म ब्रवीः, सदैव तव दास्यस्मि मयि क्षामणाऽनुचिता । अथ प्रहसितो वसन्ततिलका च निर्जगाम, रहस्थयोर्हि दंपत्यो र्छेकाः पार्श्ववर्तिनो न भवन्ति । तत्र चांजनापवनं-जयौ स्वैरं रेमाते, रसावेशाच्चैकयामेव यामिनी विरराम । प्रभातां रात्रिमालोक्य पवनंजय स्तामूचे हे कान्ते ! जयाय यास्याम्यन्यथा गुरवो ज्ञास्यन्ति । हे सुंदरि ! अतःपरं खेदं मा कार्षीः दशास्यकृत्यं संपाद्य यावदा-यामि तावत्सखीवृता सुखंतिष्ठ । सापीत्युवाच दोष्मतस्ते तत्कृत्यं सिद्धमेव, यदि मां जीवन्ती मिच्छसि तर्हि कृतार्थःसञ्छीघ्रमागच्छेः । अपरञ्चाद्यैव ऋतुस्नातास्मि, यदि मे गर्भो भवेत्तत्वपरोक्षे पिशुना मय्यपवदेयुः । पवनोऽप्येव माललाप हे मानिनि ! शीघ्रमेष्यामि मय्यायाते त्वयि क्षुद्रावकाशः कथं भविता । अथवैतन्मदा-गमनसूचकं मन्नामांक मंगुलीयं गृह्यतां समये तत्प्रकाशयेः । पवनंजयः स्वमंगुलीय मर्पयित्वोत्पत्य मानसस-

धिक् धिक् सातपस्विनी म्रियते, तद्धत्यापातकेन दुर्मुखोऽहं क गमिष्यामि । इत्यात्मीयचिन्तितं स महसिता-याख्यत् हि स्वदुःखाख्यानपात्रं सुहृदं विनाऽपरो न भवति । महसितोऽप्येवं मोचे चिरादपि साध्वज्ञासीः नूनं साऽद्य सारसीव वियोगतो विपद्यते । हे सखे ! तव साद्याप्याश्वासयितुं युज्यते, प्रियोक्तया तामनुज्ञाप्य स्वार्थाय पुनरापतेः । भावसंवादिना हृदेव तेन सुहृदेरितो मारुत उत्पत्यांजनसुंदर्या वेश्मनि ययौ । पवनंजयः किञ्चित्तिरोहितो द्वार्येव तस्थौ महसितस्त्वग्रे भूत्वा तदोकसि प्राविशच्च । अल्पे तोये शफरीमिवाधिपल्यंक वेल्लुन्तीं हिमेन सरोजिनीमिव ज्योत्स्नयापि पीड्यमाना मन्तर्हृदयसंतापप्रस्फुटद्धारमौक्तिका मुन्मुक्तदीर्घनिः श्वासतरलालकमालिका मधिनिपण्णनिःस्रस्तदोर्लग्नमणिकंकणां मुहु र्मुहु र्वसन्ततिलकासख्याऽऽश्वास्यमानां शून्यदत्तदृशं शून्यचितां काष्ठमयी मिवांऽजनसुंदरीं तत्र महसित ईक्षाञ्चक्रे । को नामेहाकस्माद्भ्यन्तर इव रागा-ययाविति भीताऽपि सा धैर्य मालम्ब्येदमब्रवीत् । अहो ! त्वं क इहायासी रथवा परपुंसा त्वया ज्ञातेनाल मिह परनिकेतने मा स्थाः । हे वसन्ततिलके ! दोष्णा विधृत्यैनं बहिः क्षिप, क्षपाकरविशुद्धाहमेनं द्रष्टु मपि न क्षमा । अमुष्मिन्मम निकेतने पवनंजय मुज्झित्वाऽन्यस्य कस्यापि प्रवेशाधिकारो नास्ति त्वं किमुदीक्षसे । महसितो नत्वाऽवादीद्धे स्वामिनि ! चिरादायातसोत्कंठपवनंजयसंगमा द्वर्धसे । मन्मथस्य माधवश्च तस्य मित्रं महसितोऽग्रेसरो ह्यमायातः प्रियश्चान्वायातं विद्धि । अंजनाप्येवं जगाद हे महसित ! विधिनैव हसितां मां त्वं मा हसी स्थं क्षणो नर्मणो नास्ति । अथवैष ते दोषो नास्ति मत्पूर्वकर्मणामेव दोषोऽस्ति, हि तादृशः कुलिनो

पाञ्चालिकेव सा निर्निमेषेक्षणाऽस्वास्थमथितेक्षणा तस्थौ । द्वारस्तंभनिपण्णाङ्गीं प्रतिपच्चन्द्रवत्कृशां लुलितालक संछन्नललाटां निर्विलेपनां नितंबन्यस्तविस्रस्तश्लथलंबिभुजालतां तांबूलरागरहितधूसराधरपल्लवां बाष्पांबु-क्षालितमुखीं मुन्मुखां पुरतः स्थितां व्यञ्जनदृशगंजनां व्रजन्पवनो ददर्श । प्रल्हादनंदनस्तां निध्यायन्निदं सद्यो दध्यौ, अहो एतस्या दुर्धियो निर्ह्रीत्वं निर्भीत्वमपि । अथवा पुराप्येतस्यादौर्मनस्यं ज्ञातमेवहि, मयातु पित्रो राज्ञालंघनभीरुणोदूढा । सापि तस्य पादयोः पतित्वा रचिताञ्जलि रुचे हे स्वामिन् ? त्वयासर्वोऽपि-जनः संभावितोऽहंतुमनागपि न संभाविता । तथापि त्वं विज्ञप्यसेऽहं तु त्वया न विस्मार्या आशु पुनरागमनेन, ते पंथानः शिवाः सन्तु । इति ब्रुवाणामदीनचरितामपि दीनां ता मवगणय्यैव पवनंजयो जयाय ययौ । पत्यवज्ञावियोगार्ता सा ऽन्तर्वेश्म भूतले वारिभिन्नतला सिन्धुतटीव निपपात । तदा प्रल्हादनंदनः पवमानव-दुत्पत्य मानससरसि जगाम निशामुखे उवास च । पवनञ्जय स्तत्र प्रासादं विकृत्याध्यास्त विद्याधराणां विद्येव सर्वसिद्धिषु कामधुक् भवति । तत्र पर्यंकमारूढः स सरःपरिसरावनौ प्रियवियोगेनार्तां चक्रवाकीं ददर्श । पूर्वोपात्तां मृणालिकामप्यभुञ्जानां क्वथितेन वारिणेव हिमेनापि तप्यमानां वन्हार्चिच्छटयेव ज्योत्स्नयापि दूयमानां करुणं क्रंदन्तीं तां प्रेक्ष्य स एवं पर्यचिंतयत् । चक्रवाकिकाः सकलं वासरं पत्या सह रमन्ते नक्तम-पिपुन.स्तद्विरहं सोढुं नेशते । मया तु योद्धाहतोऽपि त्यक्ता जातुचिदपि न भापिता आगच्छतापि परनारी वावज्ञाता पर्वतेनेव दुःखभारेणाक्रान्ता भूकतोऽदृष्टमत्संगसुखा साञ्जना हा ? कथं भविष्यति । ममाविवेकेन

तस्थौ। पर्यंकस्य पार्श्वद्वितयं मुहुर्मुहु राघ्नन्त्या स्तस्या द्राघीयस्यो निशाःसंवत्सरवदभवन्। अनन्यमानसा जानुमध्यन्यस्तमुखांबुजा सा भर्तुरालेखनैरेव दिनानि व्यतीयाय। सखीभिर्मुहुश्चाटुपूर्वक मालप्यमानाऽपि हेमन्ते परपुष्टेव सा तूष्णीकतां न जहौ एवञ्चकाले व्रजति सत्यन्यन्दा राक्षसराजस्यदूतः प्रल्हादनृपं समुपेत्यैवमब्रवीत् स दुर्मति र्यादोनाथः प्रणिपातममानय न्राक्षसराजेन सम मद्य नितरां वैरायते। नमस्कारं याचितः सोऽहंकार महागिरिः कद्रदो दोर्दण्डौ चक्षुसा पश्यन्निदं वदति अरे! रावणो नाम कः, ननु तेन किं सिध्यति, अहं तु कुबेरो नलकूवर इन्द्रो वा नास्मि। नापिसहस्त्ररश्मि रस्मि, न मरुत्तो न वा यमोऽस्मि, कैलासोऽपिनास्मि किन्त्वहं तु वरुणोऽस्मि ननु। यद्यस्य दुर्मते दैवताधिष्ठिते रत्नै र्दर्पोऽस्ति तदायातु चिरसंचितं तद्दर्पं हरिष्यामि। इत्युक्त्वा क्रुद्धो रावणः समरायाभ्यषेणयत्. तटपर्वतमब्धिवेलेव तत्पुरमरौत्सीत्। अरुणलोचनो वरुणो रणाय पुरान्निसृत्व राजीवपुंडरीकाद्यैः पुत्रै र्वृतोऽयुध्यत्। तस्मिन्महतिसंग्रामे वीरै र्वरुणसूनुभि र्योधयित्वा बद्ध्वा च खरदूषणौ निन्याते. ततो राक्षसानामशेषतः सैन्यमभज्यत, वरुणोऽपि कृतार्थमानी सन्निजां पुरीमविशत्। रावणोऽपि विद्याधरेन्द्रान्प्रत्येक माह्वातुं दूतान्प्राहिणोद्भवतेत्वहंप्रेपितः। अथ प्रल्हादो दशास्याय साहाय्यककृते यावत्स्वयं चचाल तावत्पवनंजयस्तमुवाच। हे तात! त्वमिहैव तिष्ठ नन्वहमपि तव तनयोऽस्मि, तेन दशग्रीवमनोरथं पूरयिष्यामि। इति सनिर्वन्ध मुदीर्य पितरं चानुमान्याशेपं लोकञ्चाभाष्य स पवनंजय श्चचाल। अथांजना जनमुखात्पत्युर्यात्रां श्रुत्वोत्सुका सती देवीव व्योमशिखरात्प्रासादा दवरुह्य तमीक्षितुं स्तंभमवष्टभ्य

निशाचर इव पवनंजय आविरासीत् । ययोद्वयो र्हृदि विद्युत्प्रभोऽस्ति तयो र्द्वयो रपि शिर श्छिनद्मीतिवद-
न्पवनंजयो रोपाच्चंचाल । तं बाहुदंडे धारयन्प्रहसित इत्यवदद्धे सखे ! सापराधापि स्त्री गौरिवावध्यैवेति
किं न वेत्सि । इय मंजनसुंदरी निरपराधा पुनः किं वध्या, एपा पुन स्तथापवादिनीं ह्रीया न निषेधति ।
इति प्रहसितेनोच्चै र्निषिद्धः पवनंजय उत्पत्य स्वमावासमगात् दुखितः सन् जाग्रत्तस्थौ । प्रातः प्रहसितं चोचे
हे सरखेऽनयोढया किं विरक्तो भृत्योऽप्यापदेस्यात्किंपुनः प्रिया । तदेहि परं रयमुरीकृत्य स्वपुरीं यावः, यदा-
त्मने न रोचते तेन स्वादुनापि भोज्येन किं फलम् इत्युच्चकैरुदीर्य यावत्पवनंजयश्चचाल तावत्प्रहसितस्तं करे
धृत्वा साम्नैवमबोधयत् । यत्स्वप्रतिपन्नस्य का कथा । गुरवोऽपि हि मूल्येनविक्रिणते वा प्रसादतो ददते
इत्यपि सतां प्रमाण मपरा गति र्नविद्यते । किञ्चेहांजनसुंदर्यां दोपलवोऽपिनास्ति सुहृदो हृदयं पुनर्दैवदोषेण
दूष्यते । स्वस्य पितरौ महात्मानौ तस्याश्च पितरौ विश्रुतौ, हे भ्रातः स्वछंदवृत्तितो गच्छन्
किं न लज्जयसि । प्रहसितेनैवमुक्तः पवनंजयो विमृश्य चेतसि सशल्य इव तथैवकथमप्य
स्थात् । ततो निर्णिते दिने पितृनेत्रोत्पलशशी पवनांजनसुंदर्योः पाणिग्रहमहोत्सवोऽभवत् । प्रल्हादः
प्रमोदभाक् सदायादः स्नेहान्महेन्द्रेणार्चित स्तद्वधूवर मादाय स्वां पुरीं ययौ । प्रल्हादोऽञ्जनसुंदर्या भूस्थितं
विमानमिव सप्तभूमिकं प्रासाद मर्पयामास । पवनंजयस्तु तां वाचापि न संभावयामास हि मानिनो यतस्ततो-
ऽप्यवलेपं न विस्मरन्ति । शशांकं विना श्यामेव सा पवनंजयं विना बाष्पान्धकारवदनाऽस्वास्थ्यभाजनं

महेन्द्रमिद मभ्यधात्, यदेपा अंजनसुंदरी नाम स्वसुता मत्सुताय दीयताम्। अग्रेऽपि हृदयस्थितं तन्महेन्द्रः प्रतिपेदे सा प्रह्लादप्रार्थना तु निमित्तमात्रमेवासीत्। इतस्तृतीये दिवसे मानसाख्ये सरोवरे विवाहः कार्य इत्युक्त्वा तौ यथास्थान मीयतुः। ततः साल्हादौ महेन्द्रप्रल्हादौ स्वजनैः समं जग्मतु स्तौचमानससरस्यात्रासं चक्रतुः। पवनञ्जयः प्रहसितंनाममित्र मित्युवाच भोमित्र ? किं त्वयाऽञ्जनसुंदरी दृष्टास्ति कीदृश्यस्ति ब्रूहि। प्रहसितो पीषद्धसित्वैमूवचे मयेक्षितासाऽञ्जनसुदरी रंभादिकाभ्योऽपिसुंदरीति। तस्या निरूपमं रूपं यादृशं दृशा दृश्यते तादृशं वचसा वक्तुं वाग्मिनाऽपि न शक्यते। ततः पवनंजय इत्यूचे दूरे ह्युद्वाहवासरोस्ति, हेसखे! मया साऽद्यैव दृग्गोचरं कथं नेया। वल्लभोत्कंठितानां हि घटिकापि दिनायते दिनमपि मासायते किं पुनर्दिन त्रयम्। ततः प्रहसितोऽप्येवं व्याजहार स्थिरीभव निशि तत्रैत्यानुपलक्षित स्तां कान्तां द्रक्ष्यसि। ततः स प्रहसितः पवनंजय उत्पत्य निरगादंजनसुंदर्याऽऽस्थिते सप्तभूमिके प्रासादे राजस्पश इव छन्नीभूय समित्र स्तामीक्षितुमारेभे। त्वं धन्यासि याहि पवनंजयं तं पतिं प्रापः इति वसन्ततिलका सखी अंजनसुंदरीमुवाच। हले चरमविग्रहं विद्युत्प्रभं वरं मुक्त्वा को वरः श्लाघ्यत इति मिश्रका सखी अवदत्। प्रथमाप्येवं प्रत्युवाच हे मुग्धे त्वं किञ्चन न वेत्सि। हि विद्युत्प्रभः स्वल्पायुः कथं स्वामिन्या युज्यते। द्वितीयापीत्यभापीष्ट हे वयस्ये! त्वं मंदधी रसि स्तोक मप्यमृतं श्रेयः विषयस्य भारोऽपि न श्रेयः इति तयोरालापं श्रुत्वा पवनंजयो ऽचिन्तयत् यदस्या इदं प्रियं नूनम् तेनैषा न निषेधति। इति क्रुद्धोऽसि माकृष्य अकस्मादंधकारात्समुत्थित

इत्याचार्य हेमचन्द्रविरचितत्रिषष्टि शलाकापुरुषचरिते महाकाव्येसप्तमपर्वणिगद्यरचनायां राक्षसवंशवानर वंशोत्पत्तिरावणजन्मवर्णनो नाम द्वितीयः सर्गः

## अथ तृतीयः सर्गः

अथेह वैताढ्यगिरावादित्यपुरपत्तने प्रह्लादोनामराजाऽभूत् अस्य प्रिया तु केतुमत्यभूत् । स्थाम्ना जयी गगने गमनेन च पवनवत्नामतः पवनञ्जय स्तयोस्तनयो बभूव । इतश्चभरतेऽत्रैवोपार्णवं दन्तिपर्वते महेन्द्रनगरे महेन्द्रोनाम विद्याधरेन्द्रोऽभवत् । तस्य हृदयसुंदर्यीपत्न्या मरिंदमादिपुत्राणां शतस्योपरि अंजन-सुंदरी नाम सुताऽभूत् । उद्यौवनायास्तस्या वरं चिन्तयतः पितु र्मन्त्रिणः सहस्रशो विद्याधरयून: शशंसुः । महेन्द्रस्याज्ञयाऽमात्या स्तद्रूपाणि यथावत्पट्टेष्वालेख्यानाय्य च समदर्शयन् । तत्र विद्याधराधीशहिरण्याभांग-जन्मनः सुमनः कुक्षिजन्मनो विद्युत्प्रभाख्यस्य रूपं प्रह्लादसूनोः पवनंजयस्य च रूपं मनोहरं सचिवोऽन्येद्युश्चि-त्रस्थं महेन्द्रस्याभ्यढौकयत्। द्वावप्येतौ रूपवन्तौ कुलीनौ च तदेतयोर्मध्ये कन्यायाः को वर इति राज्ञोक्तः सचिवोऽभ्यधात् । हे स्वामिन् एष विद्युत्प्रभोऽष्टादशवर्षायुर्मोक्षं गमी इति नैमित्तिका व्यक्तमाख्यात पूर्विणः । अत्रान्तरे तु सर्वेऽपि विद्याधरेन्द्राः सपरिच्छदाः सर्वर्द्ध्या यात्रायै नंदीश्वरं द्वीपं ययुः । प्रल्हाद स्तनयां प्रेक्ष्य

वत्रे तव च पराभवोऽभूत्। तत्प्रभृति मयि सत्यप्यसावेतामहिल्या मूढवानित्यानंदमालिनि त्व मीर्ष्या-तुरभूः। अन्यदा आनंदमाली निर्वेदाद्व्रत मग्रहीत् तीव्रं तपस्तप्यमानः ऋषिभिः सह व्यहार्षीच्च। विहरन्स एकदा रथावर्तगिरिं जगाम त्वया च ददृशे अहिल्यायाः स्वयंवरश्चास्मारि। ध्यानारूढ स्त्वया बद्धोऽनेक शस्ताडितोऽप्यचलाचलः स मनागपि ध्यानान्नाचालीत्। कल्याणगुणधरस्तु श्रमणाग्रणी स्तद्भ्राता प्रेक्ष्य द्रुमे शंपामिव त्वयितेजोलेश्याममुचत्। त्वत्पत्न्या सत्यश्रिया भक्तिजल्पितैः शमितः स तेजोलेश्यां संजह्रे तदैवतन्नदग्धोऽसि। मुनिन्यक्कारजातपापात्कतिचिद्भवान् भ्रान्त्वा त्वं शुभं कर्म विधाय सहस्रारसुत इन्द्रोऽभवः। रावणाद्यः पराभवोजात स्तन्महामुनितिरस्कारमहारोद्भवकर्मणः फलमिदमुपस्थितम्। कर्माणि सर्वस्याप्यवश्यं चिरादपि फलन्त्येव आपुरंदर माकीटं संसारस्थितिरीदृश्येव वर्तते। तच्छ्रुत्वा दत्तवीर्यस्यांगजन्मनो राज्यं दत्वा इन्द्रः पर्यव्रजत् तप्तोग्रतपाश्च शिवं ययौ। रावणोप्यपरेऽहनि स्वर्णतुंगशैले जात केवल मनन्तवीर्यं नामर्षिं वन्दितुं ययौ। तं वंदित्वा दशकंधरो यथास्थानं, निषण्णः, श्रोत्रसुधासारणिं देशनां शुश्राव च। दशास्येन देशनान्ते मम मरणं कुतः स्यादिति पृष्टः स भगवान्महर्षि रेवमभ्यधात्। हे दशानन! पारदारकदोषेण वासुदेवात् प्रतिविष्णो स्ते विपत्ति र्भविष्यति। तदा स रावणोऽनिच्छन्तीं परस्त्रिय महं न रमयिष्यामीममभिग्रहं तस्यैव मुनेः पुरो जग्राह। अथ तं ज्ञानरत्नांबुधिं मुनिवरं नत्वा पुष्पकस्थो दशवदनो निखिलनगरनारीनेत्रनीलोत्पलानां ममदविभवदानाद्यामिनीजानिकल्पः स्वां पुरी मियाय।

निनाय स्वयं श्रेणिद्वये नायक्यभवत् । ततो दशकंधरो निवृत्य लंकायां जगाम, काष्ठपञ्जरेकीरवच्छक्रं कारायामक्षिपत् । अथ सहस्रारः सदिग्पालो लंकाया मेत्य पत्तिवद्रचिताञ्जलिः सन् रावणं नमस्कृत्येत्यभाषिष्ट । यो ग्रावखंडवत्कैलासं लीलयोदधार्षीत्, दोष्मता तेन भवता विजिता वयं न त्रपामहे । तादृशे त्वयि याञ्चापि मनागपि त्रपायै न भवति, तदहं याचे शक्रं मुञ्चेति पुत्रभिक्षां च मे प्रयच्छ । रावणोप्येवमुवाच यदि शक्र मुञ्चामि तर्ह्यसौ सदिक्पालपरीवारः सदेदृशं कर्म कुर्यात् । तस्माद्यद्येषः क्षणे क्षणे परितोऽपि लंकां पुरीं वासागारमहीमिव तृणकाष्ठादिरहितां करोतु प्रातः प्रात रंबुवाहोऽम्बुभिरिव दिव्यगंधै श्चेलोत्क्षेप मेतां पुरी मभितोऽप्यभिषिंचतु । देवतावसरादिषु मालाकार इव पुष्पाण्युपचित्य ग्रथित्वा च स्वयं पूरयतु । एवं विधानि कर्माणि कुर्वन्नेष तव सुतः पुनः स्वं राज्यं गृह्णातु मत्प्रसादाच्च नंदतु । एवं करिष्यतीतिसहस्रारेणोक्ते सति रावणो निजबन्धुवत् सत्कृत्य कारायाः शक्रं मुमोच । अथेन्द्रो रथनूपुरमेत्योच्चकै रुद्विग्न स्तथौ हि तेजस्विनां निस्तेजो मृत्युतोऽप्यतिदुःसहम् । तत्रान्यदा निर्वाणसंगमो नाम ज्ञानी मुनिः समवासरदिन्द्रोऽपि तं वन्दितुमुपाययौ । हे भगवन् केन कर्मणा रावणादिमं न्यक्कार मासदमिति शक्रेण पृष्टः स मुनिरब्रवीत् । पुरा श्रीमत्यरिंजयपुरे विद्याधराग्रणी नाम्ना ज्वलनसिंहोऽभूत् तस्य प्रीया वेगवती नाम्नी चाभूत् । तयो र्दुहिता रुपवत्यहल्या नामाभवत्तस्याः स्वयंवरे सर्वे विद्याधरेश्वरा अभ्येयुः । तत्र चन्द्रावर्तपुरेश्वर आनन्दमाल्यागात् सूर्यावर्तपुरेशो नाम्ना तडित्प्रभस्त्वमप्यगात् । सहायातमपि त्वां त्यक्त्वा अहिल्या निजेच्छया आनंदमालिनं

तस्येदानीं कालरूप उपस्थितः । गत्वास्वस्वामिनो भक्तिं वा मयिशक्तिं दर्शय, भक्तिशक्तिहीश्चेदेवमेवविनंक्षति दूतेनागत्य विज्ञप्तः कोपदारुणो महोत्साहो रावणः सकलसैनिकैः समं समनह्यत् । इन्द्रोऽपि सनह्य रथनूपुरा-प्रुतं निर्ययौ हि वीरा अन्यवीराहंकारडंबरमसहन्ते, ततस्तयो र्द्वयोः सामन्ताः सामन्तैः सह सैनिकाः पुनः सैनिकैः सह सेनान्यः सेनानीभिश्च सह युयुधिरे शस्त्रवर्षिणां तयो र्बलानां संवर्तपुष्करावर्तवारिदाना मिवा-न्योऽन्यं संघट्टोऽभवत् । मशकै रिव वराकै रेभिः सैनिकै र्हतैः किं मिति ब्रुवाणो रावणः स्वय मधिज्यीकृत शरासनो भुवनालंकारकरिपुंगव मारुह्यैरावणस्थेन्द्रेण सहढौकत । रावणेन्द्रयोः करिणौ मुखयोः करवेष्टनै रन्योन्यं नागपाशमिव वितन्वानौ मिमिलतुः । अरण्युन्मथना त्स्फुलिंगा नुत्थापयन्ता विव द्वावपि महामाणा विभौ दन्तै र्दन्तान्मजघ्नतुः । तद्दन्तघातक्षुण्णेभ्यः शरीरिभ्यो निरंतरं गंडेभ्यो मदधारावद्रक्तधाराः मसु-स्रुवुः । क्षणाच्छल्यैः क्षणाच्छाणै क्षणादपिक्षुरैः गजा विवाद्वितीयौ तौ रावणेन्द्रो गजघ्नतुः । महाबलौ तौ मिथोऽस्त्रे रस्त्राणि पिपिषतु र्नैकोप्येकस्मात्पूर्वापरावन्धीइवाहीयत । रणक्रतुदीक्षितौ तौ बाध्य बाधकता भाग्भिर्द्रौहत्सर्गापवादवन्मंत्रास्रै रप्ययुध्येताम् । एकवृंतस्थ फलयोरिव गाढं मिलितयो रैरावणभुवनालंका रयोः करिणो रथ छलतो रावणः स्वेभादुत्पत्यैरावणं ययौ तन्महामात्रं हत्वाचेन्द्रं करीन्द्रवत् बबंध । स हस्ती अक्रिभिर्मधुमंद इवाधरता द्दर्पाद्दुत्तालतुमुले रक्षोवीरैः परितोऽवेष्ट्यत । रावणेन शक्रे धृते सति तत्सैन्य-मपि सर्वतो विदुद्राव नाथे जितेसति पदातयोऽपि जिता एव । ततो रावण ऐरावणेन सहैवेन्द्रं निजे शिबिरे

धरणेन्द्रा दमोघास्त्रशक्तिः [2]शक्ति त्रयोर्जितः स्वानुरूपाभ्यां भ्रातृभ्यां स्वभुजाभ्यामिवोत्कटः सुकेशकुलभास्करो लंकेशोरावणो नामास्ति। सहेलया यममभांक्षीत् ते पत्ति वैश्रवणश्चा भांक्षीत् वालिसोदरं वानरेन्द्रं सुग्रीवञ्च पत्तीचक्रे। दुर्लंघ्यवह्निमाकारं दुर्लंघपुर प्रविष्टस्यस्यानुजो नलकूबरं बद्ध्वा जग्राह। युगान्ताग्निरिवोद्धतः स त्वां प्रत्यापतन्नस्ति तस्मात्प्रणिपातसुधावृष्ट्या शमनोयोऽन्यथातु न शममेष्यति। अस्मै रूपवती मिमां रूपिणीं सुतां यच्छ, एवं ते संबंधादुत्तमसन्धानं भविष्यति। एवं पितृवचः श्रुत्वा स कुप्यन्नेवमुवाच, यथा वध्यायास्मै स्वाकन्यका कथंकारं दीयते। किञ्चामुनासहाधुनिकं वैरं न किन्तुवंशजं वैरमस्ति, प्राग्विजयसिंहं तातमैतद्गृह्यैर्हतं स्मर। एतत्पितामहस्य मालिनोऽपि यन्मयाकृतं तदस्यापि करिष्यामि, एषकोऽयं समायातु। स्नेहतः कातरो मा भूः सहजं धैर्यमाश्रय सर्वदा दृष्टं स्वसूनोः पराक्रमं किं नवेत्सि। एवं वदतस्तस्य रथनूपुरं नगर मभ्येत्य दुर्धरो दशकन्धर श्चमूभि र्वेष्टयामास। महितौजसा दशास्येन पूर्वमेव प्रहितःससौष्ठत्रोदूतोऽथे-न्द्रमभ्युपेत्येद मुवाच। येकेचिदिह विद्यादोर्वीर्यदर्पिता राजानः सन्ति तैरुपेत्योपायनाद्यैर्दशकन्धरः पूजितः। दशकंठस्यविस्मृत्या भवतश्चार्जवा दयमियान्कालो ययौ, अधुनातत्र तस्मिन्भक्तिकालोऽस्ति। तदधुनातस्मि-न्भक्तिंदर्शय वा शक्तिं दर्शय, भक्तिशक्तिविहीनश्चेदेवमेवविनंक्ष्यसि। इन्द्रोप्येवं निजगाद यद्रावणोवराकै र्नृपैः पूजित स्तदयंमत्तो मत्तोऽपि पूजां वाञ्छति। रावणस्य यथायथाकालो गतः स सुखायगतः। अयंकालस्तु

---

२ प्रभुमंत्रोत्साहरूपाः

प्राकारं संजहार सबलवाहनश्च दुर्लंघपुरं प्रविवेश । अथ नलकूवरः सन्नह्य रणायोत्तस्थे तदा दन्तिना चर्मभ-स्त्रेव विभीषणेन चाग्राहि । तदा तत्र रावणो देवासुरै रप्यजय्यं शक्रसंबंधिदुर्धरं सुदर्शनं नाम चक्रं प्राप । ततः प्रणताय तस्मै दशास्य स्तत्पुरं ददौ यथा दोष्मन्तो विजये यथा भवन्ति तथाऽर्थिनोऽर्थेषु न भवन्ति । दशास्य उपरंभामप्युवाच हे भद्रे ! मयि विनयं कर्तारं स्वकुलोचित मात्मभर्तारं भज । अह मन्या अपि परस्त्रियः स्वसृमातृपदे पश्यामि, त्वन्तु संप्रति विद्यादानाद्गुरुस्थानेऽसि । त्वं सुंदर्युदरसंभवा कामध्वजस्य पुत्री चासीः तेन कुलद्वयविरुद्धायाः कलंको मास्म भूत् । पितु र्गेहे रुपित्वेव समागता मदूषितां ता मित्युक्त्वा नलकूवरभूभुजेऽर्पयामास । नलकूवरराजेन कुंभकर्णाग्रजोऽर्चितः सेनाभिः सह रथनूपुरपत्तनं चचाल । आयान्तं रावणं श्रुत्वा सहस्रारो महामतिः सुतस्नेहात्स्नेहपूर्व मिन्द्रं नाम सुत मभाषत । हे वत्स ! जातेन भवता महौजसाऽस्माकं वंशोऽन्यवंशोन्नतिंहृत्वा परां प्रोन्नतिं प्रापितः । त्वया हीदमेकेनविक्रमेणै-वानुष्ठितं संप्रति त्वया नीतीनामप्यवकाशो दातव्यः । एकान्तविक्रयः क्वापि विपदेऽपि प्रजायते हि शरभाद्या एकान्तविक्रमान्नाशं प्रयान्ति ।। वसुन्धरा बलिभ्योऽपि बलीयसः प्रसूते तेन सर्वेभ्योऽप्यहमेवोजस्वीत्यहंकारं मास्मकृथाः । अधुना सहस्रांशुनियन्त्रकः प्रतापेन सहस्रांशुः सर्ववीरत्वतस्करो वीर उत्थितोऽस्ति । हेलोत्पा-टितकैलासो मरुत्तमखभंजनो जम्बूद्वीपेशयक्षेन्द्रेणाप्यक्षोभितमानस [1]उपार्हंत्निजदोर्वीणागीततोषित चेतसो

[1] अर्हत्समीपे निजदोर्वीणाया गीतेन प्रसन्नं चित्तं यस्य तस्मात्

मिव कुर्वाणानि हुताशनमयान्येव यंत्राणि चक्रे । नलकूवर स्तं वप्रमवष्टभ्य कोपाज्ज्वलन्, वह्निकुमारवत् भटैः परिवृतोऽवतस्थे । सुप्तोत्थिता नरा ग्रीष्ममध्यान्हमार्तण्डमिव ते कुंभकर्णाद्या अप्येत्य तं द्रष्टुमपि नाशकन् । एतदुर्लंघ्यपुरं दुर्लंघ्य मिति मत्वा भग्नोत्साहास्ते कुंभकर्णाद्या अपसृत्य कथमपि दशास्याय व्यजिज्ञपन् । ततो दशास्यः स्वयं तत्रागात्तं चतादृशं वप्रं प्रेक्ष्य सबान्धव स्तद्ग्रहोपायमपश्यं श्चिरं दध्यौ । अथ दशास्यस्यानुरक्ता नलकूवरपत्नी, उपरंभा दूतीमप्रैषीत् सा तमेत्यैवमब्रवीत् । मूर्ताजयश्री रिवोपरंभा त्वयि रिरंसते, सा त्वद्गुणै र्हृतमना स्तत्र मूर्त्यैव तिष्ठति । हे मानद ? वप्रस्यास्य रक्षिका मिमा माशाली विद्या मात्मानमिव तवायत्तां करिष्यति । तया चेदं सनलकूवरं पुरं ग्रहिष्यसि, अत्र च ते नाम्ना सुदर्शनं देवं चक्रं सेत्स्यति । अथ समहासं दशास्येन वीक्षितो विभीषण एवमस्त्विति भाषित्वा तां दूतिकां विससर्ज । अथ क्रुद्धो दशग्रीवो विभीषणमावभाषे, अरे कुलविरुद्धं त्वयेदं किं प्रतिपन्नम् । हे मूढ ! रणे द्विषां पृष्ठमिवास्मत्कुलभवैः धीरैरपि जातुचित्परस्त्रीणां हृदयं न दत्तम् । त्वया वचसापि नवोऽयं कुलकलंकः कृतः, रे विभीषण ! केयं ते मति र्येनेदमब्रवीः । विभीषणो प्युवाच हे महाभुजार्य ? प्रसीद विशुद्धमनसां नृणां वा ग्मात्रं कलंकाय न भवति । सा समायातु ते विद्याञ्च प्रयच्छतु स च द्विपन्ते वश्योऽस्तु तां मा भजेथा वाचोयुक्त्या परित्यजेः ॥ यावद्विभीषणवचो दशाननस्तदनु मेने तावत्तत्परीरंभलंपटोपरंभाऽऽगात् । पुरे पत्या वशीकृता माशालिकां विद्यां ददौ तेन व्यन्तराधिष्ठितानि शस्त्राणि मोघेतराणि जातानि । दशास्यरतया विद्ययाऽग्नि-

पुनः भियातु न दीयते तेन मत्कृते एतद्धि दुष्करं कृतमिति । पिशुनानामवाच्यमिव मादृशां वतायाच्यं किं नवर्तते तथा कल्पद्रुणामिव तादृशा मदेयं किञ्चित्तु नास्ति । तत्सर्वथा गच्छ त्वं मातासि, अतःपरमिमं जनं न पश्य पत्याज्ञयापि पापराशिं न भाषस्व वा । तत्र च छन्नमागत्य राजा तद्वचःशुश्राव, सुहृदः सत्वमालोक्य प्रकर्षेण जहर्ष च । प्रभवोऽपि वनमालां नमस्कृत्य विसृज्य च दारुणं खड्ग माकृष्य स्वशिरश्छेत्तु मारेभे सुमित्रो । प्याविर्भूय हे मित्र ! साहसं माकृथा इति जल्पन्तस्य पाणितः- कृपाण मपाहार्षीत् । ह्रीयावसुधां विविक्ष न्निवाधोमुखः स प्रभवः सुमित्रेण कथंचन स्वस्थावस्थामनायि । ततस्तौ प्राग्वन्मैत्रीपरायणौ चिरं राज्यं चक्रतुः सुमित्र स्तु परिव्रज्य मृत्वेशानसुरोऽभवत् । ततश्च्युत्वा मथुरेशहरिवाहणनंदनस्त्वंतु माधवीकुक्षिभूः सुबाहु र्मधुनामाभूः । प्रभवोऽपिचिरं भवं भ्रान्त्वा विश्वावसो र्ज्योतिर्मत्यां भार्यायां श्रीकुमार इति नाम्ना तनूरुहोऽभूत् । सनिदानं तपः कृत्वा कालयोगाद्विपद्य च तव पूर्वजन्मसुहृदहं चमरेन्द्रोऽभवं । इत्याख्यायोपेत्य च सः एतच्छुलं मेऽदत्त यदा योजन द्विसहस्रयाः कार्यं कृत्वा निवर्तते । इति श्रुत्वा दशग्रीवो भक्तिशक्ति विराजिने मधुकुमाराय नाम्ना मनोरमां कन्यां ददौ । अथ दशकन्धरो लंकाप्रयाणाहादष्टादशसु वर्षेषु स्वर्णाद्रौ पांडूके चैत्यान्यर्चितु मगात् । तत्र सोत्कंठो दशग्रीवो महत्या ऋद्धया संगीतपुजोत्सव पुरःसरं चैत्यान्यभ्यवन्दत । अथ दुर्लंघनगरे नलकूवरमिन्द्रिदिग्पालं ग्रहीतुं कुंभकर्णाद्या दशग्रीवाज्ञया ययुः । नलकूवरोऽथ स्वपुर आशालीविद्यया योजनशतप्रमाणं वह्निमयं वप्रं व्यधात् । तत्र च व्योम्नि शिखोत्करैः प्रदीपन

तमवार्तयत् यद्भवत्सूनोरदःशूलमायुधं कुतः प्राप्तमेवं प्रमच्छ। पित्रा भ्रूसंज्ञयाऽऽदिष्टो मधु मधुरमभ्यधात् यदिदं मे प्राग्जन्मसुहृदा चमरेन्द्रेणार्पितमिति। चमरश्चैवं मवोचत् य द्धातकीखंडनामनिद्वीपे ऐरावतक्षेत्रे शतद्वारे महापुरे राजपुत्रःसुमित्रः, कुलपुत्रकः प्रभवश्चाभूत्, ते उभे बसन्तमदना विव मित्रे अभूताम्। तौ बाल्य एकस्य गुरोः पार्श्वे कला जगृहतुः, अश्विनाविवाविमयुक्तौ सह चिक्रीडतुश्च। अथ उद्यौवनःसुमित्र स्तत्रपुरे नृपोऽभूत्, तेन प्रभवोऽप्यात्मसन्निभो महर्धिं विदधे। एकदा राजा तुरंगेण हृतो महाटवींप्राप तत्र पल्लीपतिसुतां वनमाला मुपायत। पुनः स राजा तामादाय स्वपुरे समायातः प्रभवेण च रूपयौवनशालिनी सा प्रैक्षि। तद्दर्शनात्मभृत्येव स प्रभवो मनोभवपीडितो दिने दिने कृष्णपक्ष उडुपइव कृशो जज्ञे ततो नृपो मंत्र-तंत्राणामसाध्यं मतिकृशं तं ज्ञात्वा हे बान्धव! ते किं बाधते, सम्यगाख्याहीत्यूचे। प्रभवो प्येवमभ्यधा द्धे प्रभो! एतद्वक्तुं नशक्यते यन्मनस्थमपि कुलकलंकायाऽलम्। भूभुजा निर्बन्धात्पृष्टः स कुलपुत्रकः प्रभव आख्यत् हेप्रभो मे देहदौर्बल्यकारणं वनमालानुरागोऽस्ति राजाप्यूचे हे बान्धव? त्वदर्थे राज्यमप्यहं संत्य-जामि किं पुनर्महिलामात्रं तदियमद्यैव गृह्यताम्। इत्युक्त्वा तं विसृज्याथ तस्यानुपदमेव तां दूतीमिव निशामुखे तदोकसि प्रैषीत्। सापि राज्ञा सीदते तुभ्यमहं दत्तास्मीत्यूचे तज्जीवातुरिव शाधि हि पत्याज्ञा मे बलीयसी। मम भर्ता त्वदर्थे हि प्राणानपि विमुञ्चति किं पुनर्मादृशीं दासीं तदुदासीनः किमीक्षसे। प्रभवोप्येवं बभाषे निरपत्रपं मां धिक् धिक् अहो! स तु महासत्वो यस्य मयोदक् सौहृदं वर्तते। हि परस्मै प्राणा अपि दीयन्ते

अध्वरा अक्रियन्त ते त्वयैवहि निषेध्याः। अथ दशाननेन स्तद्वाचं पुरस्कृत्य नारदं प्रणिपत्य मरुत्तात् क्षमयित्वा च विससर्ज। मरुत्तो रावणं नत्वोवाच हे स्वामिन्! अयंकृपानिधिः कोऽस्ति योऽमुष्मात्पापात्त्वयास्मान्न्यवारयत्। रावणोऽप्याचख्यौ नाम्ना ब्रह्मरुचिर्द्विज आसीत्, तापसस्य तस्य सतो कूर्मीतिभार्या गुर्व्यभूत्। अन्येद्यु स्तत्रसाधव इयु स्तेष्वेकः साधुरब्रवीत्, यद्भवभीत्या साधु, गृहवासं स्त्यक्त स्तत्साधु। विषये लुप्तचेतसो भूयः स्वदारसंगस्य गृहवासाद्वनेवासः कथंनाम विशिष्यते, तच्छ्रुत्वा प्रपन्नजिनशासनो ब्रह्मरुचिस्तु तदैव प्राव्रजत् साच कूर्मी पराश्राविकाऽभूत्। मिथ्यात्ववर्जिता तत्राश्रमे वसन्ती सा रोदनादिविवर्जितं नारदं नाम सुतं सुषुवे, तस्याश्चान्यतो गताया स्तं जृंभकामरा जह्रुः सा तु पुत्रशोकादिन्दुमालासविधे प्राव्रजत्। तेऽमरास्तं पालयामासुः शास्त्राण्यध्यापयंश्च क्रमेणाकाशगामिनीं विद्यांच तस्मै ददुः। अणुव्रतधरः स मनोहरं यौवनं प्राप नित्यं शिखाधारणा दगृहस्थोऽपि न, संयतोऽपि न,। सदा कलहप्रेक्षणाकांक्षी गीतनृत्यकुतूहली कंदर्प कौकुच्य मौखर्यात्यन्तवत्सलः कामुकानां वीराणाञ्च संधिविग्रहकारकः पादुकास्वारूढ श्छत्रिकाक्ष वृषीपाणि रेषनारदः स्वेच्छाचारी प्रायेण ब्रह्मचारी देवैः संवर्धितत्वाद्भुवि देवर्षि रिति प्रथितः। इत्युक्तवन्तं लंकेशं मरुत्तो मखसंभव मात्मनोऽपराधं क्षमयामास। मरुत्तराजो नामतः कनकप्रभां स्वां कन्यां तदा दशास्याय ददौ दशास्योऽपितामुदुवाह। ततःप्रभंजनइवोजस्वी मरुत्तमखभंजनो गुरुविक्रमी स दशास्यो मथुरां नगरीं जगाम। तन्नृपो हरिवाहनः शूलिनेशानेनेव मधुनापुत्रेणसार्धं दशग्रीवमुपतस्थे। ततः प्रीतो दशकंधरो भक्त्योपस्थितं

अथसोऽसुरः सगरस्य नगरेऽपि परिच्छदेऽन्तःपुरे च दारुणानतिभूयसो रोगान् विचक्रे । सगरोऽपि लोक-प्रत्ययतः पर्वतं भेजे शांडिल्ययुतः पर्वतोऽपि रुक्छान्ति चकार । सौत्रामण्यां विधानेन सुरापानं न दुष्यति, गोसवनामनि यज्ञेऽगम्यागमनं कार्यं मातृमेधेऽन्तर्वेदि मातुर्वधः पितृमेधे पितृर्वधश्च विधातव्य स्तत्र दोषो न विद्यते । कूर्मस्य पृष्ठे आशुशुक्षणि माधाय जुह्वकाख्याय स्वाहेत्युक्त्वा प्रयत्नतो हविषा तर्पयेत् । यदा कूर्मं न प्राप्नुयात्तदा शुद्धद्विजन्मनो विक्रियस्य पिंगलाभस्य शुचा वास्यदघ्ने जलेऽवतीर्णस्य कूर्मसन्निभे मस्तके दीप्तं ज्वलनं प्रज्वाल्य द्विज आहुतिं प्रक्षिपेत् । इदं यद्भुतं यच्च भविष्यति तत्सर्वं पुरुष एव योऽमृतत्वस्येशानो यदन्नेनातिरोहति, एवमेकत्रपुरुषेऽत्रकिं केन विपद्यतेऽतोऽभीष्टं यज्ञे प्राणिनिपातनं कुरुत । तेषां यज्ञकर्माणि मांसस्य भक्षणं कर्तव्यं यतो थायजूकेन देवोद्देशेन कृतं तन्मांसं पूतं भवति । इत्यादि समुपादिश्य सगरे स्वमतस्थिते सति कुरुक्षेत्रादिष्वन्तर्वेदि सो मखानकारयत् । लब्धप्रसरः सः राजसूयादीनप्यकार्षीत्, असुरोऽ प्यध्वरहतान्विमानस्थानदर्शयत् । तत्तदाहं नाम्ना दिवाकरं विद्याधरं प्रेक्ष्यावोचं यत्त्वयायज्ञेऽखिलाः पशवोहर्तव्याः । स च मे वाचं पतिपद्य मखे यावत्पशून् जह्रे तावत्परमाधार्मिकः सुराधमोऽज्ञासीत् । तत्रतद्विघातनाय वोमहाकालः खेचरः ऋषभप्रतिमा मास्थापयन्नुपारंसीच्च । ततोऽहम-पितूष्णीकः क्षीणोपायोऽन्यतोऽभ्यगां अथ स मायया सगरं यज्ञेषु भावयाभास । स महाकालस्ततःसुलसा-युक्तं सगर मध्वरानले जुहाव कृतकृत्योऽथ स्वमाश्रयं जगाम । एवञ्च पापपर्वतात्पर्वतात् द्विजै हिंसात्मका

मेहीपते भार्याभूत् तयोश्चमधुपिंगः सुतोऽस्ति । तद्धे सुदरि ! तस्मै प्रदीयमानां त्वा महमिच्छामि, त्वत्पितातु स्वयंवरवराय प्रदित्सते, । नजाने त्वं कंवृणोषीदं मम मनः शल्यमस्ति, ततो राजमध्ये मदूभ्रा तृजस्त्वया वरणीयः । सुलसापि तच्छिक्षां तथैव प्रत्यपद्यत, मन्दोदर्यपि तच्छ्रु त्वा सगरभूपते राचख्यौ । सगरोऽपि निज पुरोधसं विश्वभूति मादिशत् सोऽपिकविः सद्यो नृपलक्षणसंहिताश्चक्रे । तत्र[1] स तथोचे येन समस्तै राजलक्षणै र्युक्तः सगरो जायते मधुपिंगलस्तु हीनो जायते । सः तत्पुस्तकन्तु पेटायां पुराणवत् चिक्षेप, अन्यदा राजाज्ञया तेन राजपर्षदि आकृष्टम् । स पुरोहितो यथा यथा तत्पुस्तकमवाचय त्तथातथाऽपलक्षणो मधुपिंगो जिहाय । अथ मधुपिंगो निर्ययौ सुलसा सगरं वृणोत् सद्योऽपि विवाहोजज्ञे सर्वे स्वं स्वं स्थानमभ्ययुः, मधुपिंगो प्यपमाना द्बालतपः कृत्वा मृतो महाकालाभिधः पष्ठिसहस्रेशोऽसुरोऽभवत् । सोऽथावधेः सुलसायाः स्वयंवरे निजं न्यक्कारकारणं सगरस्य विजृंभितमज्ञासीत् । सोऽसुरः सगरं राजान मन्यांश्चराज्ञो हन्मीति छिद्रान्वेषी शुक्तिमतीनद्यां पर्वतमैक्षत । ततो विप्रवेषो भूत्वा, हेमहामते त्वत्पितु र्मित्रं शांडिल्यो नामास्मीति पर्वतमभ्यधात् । यत्पुरा धीमतो गौतमाख्यस्योपाध्यायस्यपुरोऽहं क्षीरकदंबश्चोभौ सहिता वपठाव, नारदेन जनैश्च धर्षितं त्वां श्रुत्वाहमागमं ततो मंत्रै र्विश्वं विमोहयन्त्वत्पक्षं पूरयिष्यामि । इत्युक्त्वा सोऽसुरः पर्वतयुतः कुधर्मेणाखिलं जनं दुर्गतौ पातनाय मोहयामास । सर्वत्रजने व्याधि भूतादि दोषानजनयत् प्रपन्नपर्वतमतं च जनं सः निर्दोषं चकार । सोऽपि पर्वतः शांडिल्यस्याज्ञया रुक् शांतिं व्यधादेवं जनमुपकृत्योपकृत्य स्यमतेचास्थापयत् ।

तत्सत्यमसिद्धिश्च निरस्य, गुरु रजान्मेषान् व्याख्यदिति साक्ष्यं व्यधात् । तस्यासत्यवचसा तत्रैव देवताः क्रुद्धाः सत्य आकाशस्फटिकासनवेदिकां दलयामासुः । ततो वसुमतीनाथो वसुः सद्यो नरकपातं मस्तावय-न्निव वसुमतीतले पपात । असत्योक्तिकुपिताभि र्देवताभि र्निपातितो वसु र्नरनाथ स्ततो घोरं नरकं जगाम, ततः पृथुवसु, श्चित्रवसु, र्वासवः शक्रो विभावसुः र्विश्वावसुः सूरो महाशूर श्चेत्यष्टौ वसोः पुत्राः पैतृके पदे निषण्णाः कोपतोदेवताभिस्तत्काल मप्यहन्यन्त । नवमः सुवसुः सूनु र्नष्ट्वा नागपुरं ययौ वसो र्दशमः सूनु र्बृहद्ध्वजः पुनर्मथुरां ययौ, ततः पौरै र्वसुधा एसिला तस्याः पुर्या निर्वासितः स पर्वतो महाकालासुरेण संजगृहे ॥ अयं महाकालः क इति दशमुखेन पृष्टो नारद उवाच । हेरावणात्र चारणयुगलं पुरमस्ति । तत्रायोधनो राजा दितिर्नाम्नातत्प्रिया चाभूत् । तयोश्च रूपशालिनी सुलसानाम दुहिताभूत् । पित्रा तस्याः स्वयंवर आहूताः सर्वेऽपिपार्थिवाः समुपाययु स्तत्र सगरोनाम पार्थिवोऽधिकोऽभूत् । तस्य सगरस्याज्ञया द्वाःस्थाऽभिवानतो मंदोदरी प्रतिवासर मयोधननृपावासे जगाम, एकदाथ दितिः सुलसया समं गृहोद्यानकदलीसदनेऽविशत्, मन्दोदर्यं प्यायमौ च । अथतयो र्वचः श्रोतुकामा मन्दोदरी लतान्तरविलीना तस्थौ दितिश्चसुलसा मिति प्रोवाच, यथा हेवत्सेऽस्मिन्ते स्वयंवरे मम मनःशल्यमस्ति तदुद्धारस्तु त्वदधीन स्तन्मूलतः सम्यक् शृणु, ऋषभस्वामिनो वंशधरा वुभौ सुतौ भरतो बाहुबलिश्चाभूताम्, ययोः सूर्यसोमौ सुतौस्तः, सोमवंशे मम भ्राता तृणबिन्दु रजायत, सूर्यवंशे असौ ते पिता अयोधन महीपतिरजायत, सत्ययशानाम अयोधनस्वसा तृणविन्दो

यत्वमोक्षितासि तेनाद्य क्षीरकदंबोदष्टः किंकरोमि किंवाप्रयच्छामीत्यभिदधे । ततः सावादीत् हेमहीपते ? मह्यं पुत्रभीक्षादीयतां, हेपुत्रक ? पुत्रेणविनान्यैर्धनधान्यैर्मेकिंमयोजनमस्ति, ततोवसुरूचे हे अत्र गुरुपुत्रेऽपिगुरुवद्व-र्तितव्यमितिश्रुतेः पर्वतो मे पूज्यः पाल्यश्च । तदद्याकालरोपिणाकालेन कस्य पत्र मुत्क्षिप्तं मे भ्रातरं को जिघां सुर्वर्तते हेमातः ? किमातुरासीति सर्वं ब्रूहि । अजव्याख्यानवृतान्तं स्वपुत्रस्य तं पणं त्वं प्रमाणश्च कृत आसी रित्याख्याय सा अर्थयते स्म भ्रातू रक्षणं कुर्वाणोऽजान्मेषाननुदीरय, महान्तः प्राणैरप्युपकुर्वन्ति गिरापुनरुपकु-र्वन्तीत्यत्र किं वक्तव्यम् । तदा वसुरवोचत हेमात मिथ्या वचः कथं वच्मि, सत्यभाषिणः पुरुषाः प्राणात्ययेऽ-प्यसत्यं न शंसन्ति । पापभीरुणाऽन्यदप्यसत्यं नाभिधातव्यं, गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा । गुरोः सूनुं वहूकुरु यद्वा सत्यव्रताग्रहंवहूकुर्विति तया सरोषमुक्तः स पार्थिवस्तद्वचोऽमंस्त । ततः प्रमुदिता क्षीरकदंबगृहिणीययौ पर्वतोऽहंच वसुराजस्य पर्षदि अयाव, तदावादिनांसदसद्वादक्षीरनीरसितच्छदाः माध्यस्थ्यगुणशालिनः सभ्याः सभाया ममिलन्, वसुरपि सभापति रुडुपो नभस्तलमिवाकाशस्फटिकशिला वेदि सिंहासनमलंचक्रे, ततः पर्वतकोऽहं च निजं निजं व्याख्यापक्षं सत्यं ब्रूहीति भाषिणौ नरेन्द्रायाशंसाव, अथ विप्रवृद्धै रूचे स विवादस्त्वयि तिष्ठते, रोदस्यो रर्यमेवानयोः साक्षी त्वमेव प्रमाणमसि । घटप्रभृति दिव्यानि हंत सत्यतो वर्तन्ते, पर्जन्यः सत्याद्वर्षति, देवताः सत्यात्सिध्यन्ति, हे पृथिवीपतेऽयं लोकस्त्वयैव सत्ये स्थाप्यते, वयं त्वामेवेहार्थे ब्रूमहे, सत्यव्रतोचितं किं, तत्त्वमेव ब्रूहि, तदा वसुरिति वचः श्रुत्वा स्वां

घातयच्च, हि नृपाः कस्यचिदप्यात्मीया न भवन्ति, तस्यां वेदौ चेदीशस्य सिंहासनं निवेशितम्, सत्यप्रभावा-
दाकाशस्थितमिति जनोऽबुधत् । सत्येन तुष्टा देवता अस्य सान्निध्यं कुर्वन्त्येवमूर्जस्विनी तस्य प्रसिद्धि र्दिशो
व्यानशे, तया प्रसिद्ध्या भीताराजानस्तस्य वशं ययुः सत्या वा यदि वा मिथ्या प्रसिद्धि र्नृणाम् जयिनी भवति,
अथान्यदातत्राहमभ्यागाम् शेमुषीजुषां शिष्याणां ऋग्वेदंव्याख्यानयन्तं पर्वतमद्राक्षम्, अजै र्यष्टव्यमित्यत्र मेषै-
रित्युपदेशकं तं हेभ्रात रिदं भ्रान्त्या उच्यते किमित्यहमवोचम्, त्रिवार्षिकाणिधान्यानि नहिजायन्त इति
गुरुणा अस्माक मजा व्याख्याताः तत्केन हेतुना व्यस्मार्षीः, ततःपर्वतकोऽवादीदिदं तातेन नोदितं किन्तु अजाः
मेषाएवोक्ता निघंटुष्वपि तथैवोक्ताः। अहमप्येवमवोचं यच्छब्दानामर्थकल्पना मुख्या, गौणी च तत्रेह गुरु
गौंणीमचीकथत्, गुरुस्तुधर्मोपदेष्टैव श्रुतिरपि धर्मात्मिकैव, द्वयमप्यन्यथाकुर्वन् हेमित्र ! पापं माऽर्जय,। पर्वतस्तदा
साक्षेपमजल्पत्. गुरुरजान्मेषान् जगु स्त्वन्तु गुरूपदेशशब्दार्थोल्लंघनाद्धर्ममर्जसि, नृणांदंडभयात् मिथा-
भिमानवाचो न स्यु स्तेन स्वपक्षस्थापने नो जिह्वाच्छेदपणोऽस्तु, तस्मादत्रविषये उभयोः सहाध्यायी वसुर्नृपः
प्रमाणम्, तंचाहंमत्यश्रौपम् हि सत्यभाषिणां क्षोभो नभवति, तदानीमम्बा पर्वतमूचे यथा गृहकर्मरताप्यहं
भवत्पितुः सकाशात्त्रिवार्षिकं धान्यमजा इत्यश्रौपम्, तस्माद्दर्पात्पणे यत् जिह्वाच्छेदमकार्षीस्तदसाम्प्रतम् यतो
ऽविमृश्यविधातारो विपदांपदं भवन्ति पर्वतोप्येवमवदध्धेऽम्ब मया तावदिदं कृतं, यथा तथाकृतस्य करणं नहि
विद्यते, । अथ सा पर्वतकापायपीडया हृदि शल्यिता वसुराजमुपेयाय पुत्रार्थे किं न क्रियते, तदा वसुर्हे अंब-

असमञ्जसां परिज्ञातु मेतन्नियत मादिशन् । एवंविमृश्यैवाहंतु कुक्कुट महत्वैवागमम् गुरोःसविधे कुक्कुटाहनने तंच हेतुं न्यज्ञपयम् । ततः साधुसाध्विति भाषिभि र्गुरुभि रयंतावत्स्वर्गं यास्यतीति निश्चित्य गौरवादह मालिंगितः । पश्चाद्वसुपर्वतकावप्यागत्यैवं शशंसतु यत् यत्र कोऽपि न पश्यति तत्र कुक्कुटौ निहताविति । युवामपश्यतां खेचरादयश्चापश्यन् तर्हि रे पापौ युवाभ्यां कुक्कुटौ कथं हताविति गुरुरशपत् ॥ ततो विध्यात पाठधी रुपाध्यायः खेदात् दध्यौ यद्वसुपर्वतयो रध्यापनक्लेशो मे मुधाऽभवत् । गुरूपदेशो हि यथापात्रमिह परिणमेत् यथा स्थानभेदेनाभ्रांभो मुक्तालवणतां व्रजेत्, प्रियः पुत्रः पर्वतकः पुत्रादप्यधिको वसुश्च नरकं यास्यत स्तस्माद्गृहवासेन ममकिं प्रयोजनमितिनिर्वेदादुपाध्याय स्तदा प्रव्रज्यामग्रहीत्, व्याख्याक्षणविचक्षणः पर्वतस्त-त्पदमध्यास्त, गुरोः प्रसादेनाहंतु सर्वशास्त्रविशारदो भूत्वा तदा पुनर्निजं स्थानमेवगतवान्, नृपचन्द्रोऽभिचन्द्रो-ऽपि समये व्रतम् जग्राह ततश्च श्रिया वासुदेवसमो वसू राजाऽभूत् । सच पृथिवीतले सत्यवादीति प्रसिद्धिं प्राप, तां प्रसिद्धिमपि त्रातुं सत्यमेव जगाद । अथैकदा मृगयाजुषा मृगयुणा मृगाय विशिखश्चिक्षिपे सोऽपि-मृगो विन्ध्यनितम्बेऽन्तराऽस्खलत् । ततः स मृगयु रिपुस्खलनहेतुं ज्ञातुं तन्नययौ, पाणिना स्पृशंश्चाकाश स्फटिकशिलामज्ञासीत्, परतश्चरन्नयं मृगोऽस्यां संक्रान्त इति स दध्यौ शीतांशौ भूमिच्छायेव मया मृगोऽदर्शि, पाणिस्पर्शं विना सर्वथेयंनोपलक्ष्यते तदसाववश्यं वसुमतीपते र्मसो राज्ञो योग्या। ततः स मृगयु र्गत्वा राज्ञे रहो न्यज्ञपयत्, हृष्टोराजापि मप्रद्धनमस्मै ददौ, ततः सराजा छन्नं स्वासनवेदिकां तया घटयामास, तच्छिल्पिनश्चा-

शरभानिव नभः स्थितास्ते राक्षसाः भूयिष्ठांस्तान्मोहयन्त उपदुद्रुवुः। स्वानुपद्रूयमाणान्प्रेक्ष्य क्रोधधुताधरः स सहस्रांशुश्चलत्पताकहस्तेन निजाः प्रेयसी राश्वासयत्। ततः सुरसिन्धो रैरावण इव उच्चकैः सहस्रांशू रेवातो निर्जगाम धनुश्चाधिज्यं व्यधात्। महाबाहुः सहस्रांशु रनिलस्तृणपूलानिव नभःस्थितान्रक्षोवीरान्बाणै र्विद्रावयामास। रणाद्व्यावृत्तांस्तान् प्रेक्ष्य संक्रुद्धो रावणः स्वयशिलीमुखानभिवर्षन्सहस्रांशुमुपतस्थे। तौ द्वावप्यमर्षणौ द्वावप्यूर्जितौ द्वावपिस्थिरौ चिराय विविधैरायुधै र्युद्धं विदधाते। तदा रावणो तं माहिष्मतीपतिं दोर्वीर्येणाजय्यं ज्ञात्वा विद्ययामोहयित्वा इभमिव जग्राह। अथ जित्वापि महावीर्यं तं प्रशंसन् जितमानी अनुत्सिक्तो दशाननः स्वय स्कन्धावारेऽनयत्। हृष्टो दशाननो यावत्सभायामासीन स्तस्थौ तावच्छतबाहुर्नामा चारणश्रमणः समाययौ तदा दशास्यः सिंहासनात्समुत्थाय मणिपादुके च त्यक्त्वा बर्हिणः पयोदमिव तं मुनि मभ्युत्तस्थौ। त मर्हद्गण धरोपमं मन्यमानो रावणः पंचांगस्पष्टभूतल स्तस्यपादयोः पपात। दशग्रीवस्तं स्वयमर्पिते चासने आसयामास प्रणम्य स्वयञ्चान्यां मुपाविशत्। विश्वाश्वासनबान्धवः सः मूर्तिस्थो विश्वास इव तस्मै कल्याणमातरं धर्मलाभाशिप मदात्। अञ्जलिंबद्ध्वा रावणेन समागमनकारणं परिपृष्टो मुनिप्रष्ठः अदुष्टया गिरा अभाषिष्ट। अहं माहिष्मत्यां नाम्ना शतबाहु र्नृपोऽभवम्। अनन्तरं पावकाच्छार्दुल इवेतो भवत्रासाद्भीतः सहस्रकिरणे निजनंदने राज्यमारोप्य मोक्षाध्वस्यदनमायंव्रतमशिश्रियम्। इत्यथोक्ते दशाननो नम्रग्रीवः सन् इत्यब्रवीत् किमसौ महाभुजः पूज्यपादानामंगजन्मा। मुनीन्द्रेणोमित्युक्ते

अथवा कश्चित्सुरो वा ऽसुरोऽस्ति । अथकश्चिद्विद्याधरो दशमौलये आचख्यौ हेदेव ! इतः पुरस्तात् अत्युच्चै र्माहिष्मती पुरी अस्ति । तस्यामपरः सहस्रांशुरिव सहस्रैर्नृपैःसेव्यः महाभुजः नाम्ना सहस्रांशुः पार्थिवोऽस्ति असौ सहस्रांशुः जलक्रीडोत्सवकृते रेवायांसेतुबंधेन वारिबंधं न्यधात् महौजसां किमसाध्यमस्ति हि । इतोऽसौ सहस्रांशु र्वरदन्ती वशाभिरिव राज्ञीसहस्रेणसमं वारिभिः सुखं क्रीडति । हरेरिवास्य महीपते र्द्वयोरपि तीरयो रुदस्त्राश्च[3] लक्षसंख्या आत्मरक्षास्तिष्ठंति । अप्रतिमौजसोऽस्यादृष्टपूर्वोऽवष्टंभः[4] यथा ते आत्मरक्षा अपि शोभा-मात्रं यदि वा कर्मसाक्षिणः । दोष्मतस्तस्योर्जितं र्जलक्रीडाकराघातै र्जलदेवीभिः क्षुभितं यादोभिश्च पला-यितम् । इदंपयः स्त्रीसहस्रयुतेन तेनात्यंतरुद्धत्वात् पर्यस्यमाणत्वाच्च[5] काम मुल्लुठितम् । हेदशानन उद्धतमिदंवारि वेगादुभे रोदसी प्लावयित्वा इह ते देवपूजां प्लावयामास । हेदशानन ! तत्स्त्रीणा मेतानि निर्माल्यानि रेवातीरे तरन्तीत्यादिमसुंचै स्तदभिज्ञानं पश्य । हेवीरवारण ! तदंगनाजनस्य मृगमदादिजै रंगरागै र्दुर्वारमिदंवारि अत्याविल्म् । इति तद्गिरमाकर्ण्य आहुतिमाप्यानलइव दशाननो अधिकमुद्दिदीपे एवंचोवाच । अरं मुमूर्षुणा तेन स्वांगदूषितै र्वारिभिः अंजनैर्देवदूष्यमिवेयं देवपूजा दूषिता । तद्धे राक्षसभटाः यूयंयात आनायिका मत्स्य मिव भटमानिनं तं पापं बद्ध्वा समानयत । तेनैवमादिष्टा अनुचराः उद्भटा लक्षशो राक्षसभटा रेवोर्मय इव दधाविरे । ते च निशाचरा स्तीरस्थैः सहस्रांशुसैनिकैः सह गजाः वनान्तरगजैरिव रणंचक्रुः । अंभोदाःकरकै

३ ऊर्ध्वशाखा । ४ प्रारंभ । ५ मुच्छमानत्वात्. १ धीवरा. ।

राह्वतः खर इन्द्रजिगीषया रावणेन सहाचालीत् । ततः ससैन्यः सुग्रीवराजोऽपि वायो विंभावसुरिव दोष्मतो रक्षोराजस्य अन्वचालीत् । अनेक पृतनाच्छन्नरोदसीकोऽस्खलद्गति दंशाननः उद्भ्रान्तः पयोराशिरिव भययौ अथ 'दशाननः कूजन्मरालमालाभिराबद्धरसनामिव विपुलया पुलिनोर्व्या नितंबेनेवशोभितामतिगंभिरैस्तरंगै रलकानिव बिभ्राणां मुहुःशफरोद्वर्तनैः कटाक्षानिव मुंचन्तीं कामिनीमिव चतुरां विंध्यशैलादुत्तरन्तीं रेवां नाम तरंगिणींददर्श । तदा ससैन्यो दशकन्धरः उध्धुरः यूथसमाह्वतः सिन्धुरग्रामणी रिव रेवाया रोधस्युवास । अथ स तस्यां कृतस्नानः धौतवाससी वसानः समाधिसुदृढासनः मणिमये पट्टे रत्नमयमर्हद्बिंबं न्यस्य रेवाम्भोभिः स्नापयित्वा विकासिभिस्तदंभोजैः पूजयितुं समारेभे । ततः पूजाव्यग्रस्य तस्थुपो दशग्रीवस्य अकस्मादब्धि-वेलेव महापूरः समाययौ । गुल्मानिव महीरुहान् मूलत उन्मूलयन् उन्नतानां तटानामुपर्यपि पयः प्रासरत् । अभ्रंलिहा वीचिपंक्तयः विष्वक् शुक्तिपुटानीव तटनियंत्रितास्तरीः आस्फोटयन्। स पूरः पातालकुहरोपमान् महतोऽपिरोधोगर्तान् भक्ष्यं कुक्षिंभरीनिवपूरयामास । सा नदी पार्वणी चन्द्रज्योत्स्ना ज्योतिश्चक्रविमानानिवा-न्तरीपाणि[1] समन्ता त्स्थगयामास । वेगवान् पूरः महावातो द्रुमपल्लवानिव प्रोच्छलद्भिर्महोर्मिभि र्मत्स्यानुच्छा-दयाभास । फेनिलं [2]सावकरं रयागतंतद् पूरवारि पूजांकुर्वतोदशकंठस्यार्हत्पूजामपानैषीत् । शिरच्छेदाधिकेन तेन पूजापहारेण जातकोपः स दशाननः साक्षेपमिदमभ्यधात् । अरे रे अकारणारिणाकेनातिवेगतो दुर्वार मिदंवारि अर्हत्पूजान्तरायामुच्यत । पश्चात्कोऽपि मिथ्यादृष्टिर्नराधिपोऽस्ति किम् ! किंवाकश्चिद्विद्याधरः

---

१ द्वीपानि । २ सपकम् ।

तस्य रूपसंपदा श्रीमती श्रीमती देवी अभूत् । तस्यां च तारविलोचना तारा नाम दुहिता जज्ञे । एकदा तु चक्रांकविद्याधरनृपात्मजः साहसगतिः तां ददर्श सहसा स्मरार्तश्चाभूत् । ततः स साहसगतिः ज्वलन प्रति तां याचयांचके वानरेन्द्रः सुग्रीवश्च याचयांचक्रे हि रत्ने बहवोऽर्थिनो भवन्ति । रूपवन्तौ महौजसा विभौ द्वावपि अभिजातौ तत्कस्मै कन्या दीयते इति ज्वलनोनाम तारापिता ज्ञानिनं पप्रच्छ । तदानैमित्तिकेन साहसगति रल्पायुः सुग्रीवश्च दीर्घायु रित्युक्ते सति स ज्वलनस्तां तारां सुग्रीवाय ददौ । साहसोप्यभिलाषाविप्रलंभा दंगारचुंबितइव दिनेदिने क्वापि निर्वृतिं न प्राप । तारायां रममाणस्य सुग्रीवस्य दिग्गजोर्जितौ अंगदजयानंदाख्यौ द्वौ अंगजौ बभूवतुः । तारायामनुरागवान् सः साहसगतिरपि मन्मथो न्मथ्यमानात्मेदं चिन्तयामासिवान् । मृगशावकचक्षुषस्तस्याः पक्वबिंबाधरदलच्छदनं वदनाम्बुजं कदाचुंबिष्यामि । तस्याः कुचकुंभौ स्वपाणिनाऽहं कदा स्प्रक्ष्यामि तौच गाढालिंगनवामनौ कदा चुंबिष्यामि । बलेन छलेन वापि तां हर्तास्मीति चिन्तयन् रूपस्य परिवर्तिनीं शेमुषीं विद्यां सस्मार । एवं चक्रांकनृपनंदनः क्षुद्र-हिमवद्गिरौगत्वा गुहान्तरे चस्थित्वा तां साधयितु मारेभे । इतश्च दशाननो लंकापुर्याः दिग्यात्रायै पूर्वशैलतटात् [1]विकर्तन इव निर्ययौ । सः द्वीपान्तरनिवासिनो विद्याधरान्नरेंद्रान् वशीकृत्य पाताललंकांपुरीं ययौ । तत्राखर भार्पिणा चन्द्रणखाभर्त्रा खरेण भृतकेनेव प्राभृतैः स निभृतमपूज्यत । ततो विद्याधराणां चतुर्दशभिः सहस्रै

---

[1] सूर्य. ।

परत्र पुनर्नरके च भविष्यति । ततो मरुत्तनृपतिः सद्यो मखं विससर्ज हि विश्वस्यापि भयंकरा रावणाज्ञा अलंघ्या । ततः पशुवधात्मानोऽमी अध्वराः कुतः संजज्ञिरे इति दशास्येन पृष्टो नारद इतिजगाद । यत् नर्मसख्या इव शक्तिमत्याख्ययानद्याशोभिता दिक्षुविख्याता शक्तिमती नाम पुरी अस्ति । सुव्रतान्मुनिसुव्रताद नेकभूपेषु गतेषु सत्सु तस्यां राज्यभृतांवरः अभिचन्द्रो नाम राजाऽभवत् । अभिचन्द्रस्य महाबुद्धिः सत्यवाक्-तया प्रसिद्धः अभिधानतो वसुरिति तनयोऽजायत । क्षीरकदंबस्य गुरोः पार्श्वे, सुतः पर्वतकः. राजपुत्रोवसुः, अहंच त्रयोप्यपठामः । पाठश्रमान्निशि सदनोपरि अस्मासु सुप्तेषु सत्सु व्योम्नियान्तौ चारणश्रमणौ मिथ ऊचतः । एषामेकतमः स्वर्गं गमिष्यति अपरौ पुनर्नरकं यास्यतः, तच्च क्षीरकदम्बकोऽश्रौषीत् । तच्छ्रुत्वा खिन्नः क्षीरकदंबकः चिन्तयामास हहा मयि अध्यापके सत्यपि शिष्यौ नरकं यास्यतः । एभ्यः कः स्वर्गं यास्यति कौ च नरकं यारयत इति जिज्ञासु रुपाध्यायोऽस्मान्त्रीन् युगपदाह्वयत् । ततोऽस्माकमेकैकं पिष्टकुक्कुटं समर्प्योवाच यदमी यत्र कोऽपि नपश्यति तत्र वध्याः । तत्र वसुपर्वतकौ शून्यप्रदेशयोर्गत्वा आत्मनीनां गतिमिव पिष्टकु कुटौ जघ्नतुः । अहंतु नगराद्बहि, र्दवीयसि प्रदेशे गत्वा विजने देशे स्थित्वा दिशः प्रेक्ष्येत्यतर्कयम् । गुरुपादै रदस्तावदादिष्टं यत् हेवत्स त्वयाऽयं कुक्कुटो तत्रवध्यो यत्र कोऽपि न पश्यति । अत्रत्वसौपश्यति अहं पश्यामि, अमी खेचराः पश्यन्ति लोकपालाः पश्यन्ति ज्ञानिनोऽपि पश्यन्ति । तत्स्थानमपि नास्त्येव यत्रकोऽपि न पश्यति तद्गुरुगिरामिदमेव तात्पर्यं यदयं कुक्कुटो न वध्यः खलु । सदा हिंसापराङ्मुखाः दयावन्तो गुरुपादा

परो व्योम्नोऽवतीर्य ब्राह्मणाद्वतं मरुत्तमहो ? किमिदमारब्धमित्यपृच्छम् । अथ मरुत्तोऽप्युवाचायं ब्राह्मणोदितो-यज्ञोऽस्ति इहदेवतृप्तये अन्तर्वेदि पशवो होतव्याः । अयं खलु स्वर्गहेतवे महाधर्मः कीर्तितः तदद्यभोः ? एभिः पशुभिरहमद्य यज्ञं यक्ष्यामि । तत स्तस्याहमित्याख्यं वपुर्वेदी उदीरिता, आत्मा यष्टा, वह्निस्तपः, ज्ञानं च सर्पिः प्रकीर्तितम् । कर्माणि समिधादयः, क्रोधादयः पशवः, सत्यं यूपः, सर्वप्राणिरक्षणं पुनर्दक्षिणा मता । त्रिरत्नी तु त्रिवेदी मता इतियोगविशेषेण वेदोदितः क्रतुः कृतश्चेन्मुक्तेः साधनं भवति । ये क्रव्यादतुल्याच्छागवधादिना यज्ञंकुर्युस्ते मृत्वा दुःखिनः सन्तः घोरे नरके चिरंतिष्ठेयुः । तद्धेराजन् त्वंबुद्धिमान् ऋद्धिमानुत्तमे वंशे चोत्पन्नोऽसि तदस्माद्व्याधोचितादेनसो निवर्तस्व । यदि प्राणिवधेनाऽपि देहिनांस्वर्गोजायेत तर्ह्ययं जीवलोकः स्वल्पैरेव दिनै स्तच्छून्यो भवेत् । इदं ममवचः श्रुत्वायज्ञाग्नय इव द्विजाः क्रुधा ज्वलंतो दंडपट्टकपाणयः प्रोत्तस्थुः । हे रावण ततस्तै स्ताडयमानेन नश्यता मया नदीपूराभिभूतेनान्तरीपमिव त्वं प्राप्तोऽसि । तत् तैर्नृपशुभिर्वध्यमाना न्निरागसः पशून् त्रायस्व अहंतुपुनस्त्वदवलोकनात्त्रात एव । ततो विमानाद् तद्दिदृक्षया उत्तीर्य दशास्य स्तेनभूभुजा पाद्यसिंहासनादिना आनर्चे । ततः क्रुद्धोदशाननो मरुत्तभूपालं एवंजगाद, यद् अरे नरकाभिमुखैः किमेष मखः क्रियते त्रिजगद्धितैः सर्वज्ञैर्हि अहिंसातो धर्मः प्रोक्तः, स पशुहिंसात्मकात् यज्ञात् कथं नाम जायताम् । तस्माल्लोकद्वयारिं यज्ञं माकार्षीः अथवा करिष्यसि चेत् इहते वासो मद्गुप्तौ[1]

---

१ ममकारागृहे

दशाननो निजगाद अहं दिग्जयाय क्रमेणेह नदीतटे आगच्छम् । अमुष्मिस्तटे दत्तावासो विकचांबुजै र्जिनार्चामर्चित्वा यावदेकाग्रमानसस्तन्मयोऽभवम् । तावदमुनोन्मुक्तै र्निजस्नानमलीमसै र्वारिभिः पूजा प्लाविता तेनक्रुधाहमिदमकार्षम् । अमुना महात्मनाऽपि अज्ञानादेतत्कृतमितिमन्ये अन्यथा त्वत्सूनु रेषः क्वचिदर्हदाशातनां कुर्यात् किम् । दशानन एवमुक्त्वा सहस्रांशुं नत्वानैषीत् लज्जानम्राननः सोऽपि पितरं मुनिं ननाम । ततो रावण स्तमेवं बभाण अतःपरं त्वं मे भ्राता अयं च शतबाहुमुनि स्तवेव ममापि पिता । तत् गच्छ निजं राज्यं शाधि अन्यामपि क्षितिं गृहाण अस्माकं त्रयाणां मध्ये त्वमपि चतुर्थः श्रियोंऽशभागसि । एवमुक्तः मुक्तश्चसहस्रांशु रदोऽवदत् अतःपरं मे राज्येन वपुषा वापि कृत्यं नह्यस्ति । अहंतुपित्राश्रितं संसारनाशनं व्रतं श्रयिष्यामि, अयं हि पंथाः साधूनां निर्वाण मुपतिष्ठते । इत्युदीर्य दशास्याय निजं तनयं समर्प्य चरमदेहः सः पितृपादान्तिके व्रत मग्रहीत् । तदैव सः सौहृदात् अनरण्यनरेन्द्राय स्वयमात्तां परिव्रज्यां वाचिकेन कथयामास सः अयोध्याधिपोऽपि मे प्रियमित्रेण तेन एवं संकेतोऽभवत् यद्युगपद्व्रतमादेय मितिदध्यौ इति स्वप्रतिज्ञां स्मृत्वा सः सत्यधनः स्वसूनवे दशरथाय राज्यं दत्वा व्रतमुपाददे । ततो दशाननः शतबाहुसहस्रांशू ऋषी वंदित्वा सहस्रांशोः सुतं राज्येन्यस्य अंबरेऽचाचलत् । तदा यष्टिघातादिजर्जरः नारदमुनिः अन्याय इति पूत्कुर्व न्रावण मित्यभाषिष्ट । भोराजनमुष्मि न्राजपुरे मरुत्तोनाममिथ्यादृक् भूपति र्दुर्द्विजवासितः क्रतुंकुर्वाणोऽस्ति । सौनिकैरिव तद्द्विजै र्यज्ञे वधायानीतान् पाशबद्धाननागसः पशूनारटतोऽपश्यम् । ततोऽहं कृपा-

अस्मत्प्रज्ञां परिज्ञातु मेतन्नियतमादिशन् । एवं विमृश्यैवाहंतु कुक्कुट महत्वैवागमम् गुरोःसविधे कुक्कुटाहनने तंच हेतुं व्यज्ञपयम् । ततः साधुसाध्विति भाषिभि र्गुरुभिरयंतावत्स्वर्गं यास्यतीति निश्चित्य गौरवादह मालिंगितः । पश्चाद्गुरुपर्वतकावप्यागत्यैवं शशंसतु र्यद् यत्र कोऽपि न पश्यति तत्र कुक्कुटौ निहताविति । युवामपश्यतां खेचरादयश्चापश्यन् तर्हि रे पापौ युवाभ्यां कुक्कुटौ कथं हताविति गुरुरशपत् ॥ ततो विध्यात- पाठधीरुपाध्यायः खेदाद् दध्यौ यद्वसुपर्वतयोरध्यापनक्लेशो मे मुधाऽभवत् । गुरूपदेशो हि यथापात्रमिह परिणमेत् यथा स्थानभेदेनाभ्रांभो मुक्तालवणतां व्रजेत्, प्रियः पुत्रः पर्वतकः पुत्रादप्यधिको वसुश्च नरकं यास्यत स्तस्माद्गृहवासेन मम किं प्रयोजनमितिनिर्वेदादुपाध्याय स्तदा प्रव्रज्यामग्रहीत्, व्याख्याक्षणविचक्षणः पर्वतस्त- त्पदमध्यास्त, गुरोः प्रसादेनाहंतु सर्वशास्त्रविशारदो भूत्वा तदा पुनर्निजं स्थानमेव गतवान्, नृपचन्द्रोऽभिचन्द्रो- ऽपि समये व्रतं जग्राह ततश्च श्रिया वासुदेवसमो वसु. राजाऽभूत् । सच पृथिवीतले सत्यवादीति प्रसिद्धिं प्राप, तां प्रसिद्धिमपि त्रातुं सत्यमेव जगाद । अथैकदा मृगयाजुषा मृगयुणा मृगाय विशिखश्चिक्षिपे सोऽपि- मृगो विन्ध्यनितम्बेऽन्तराऽस्खलत् । ततः स मृगयुरिपुस्खलनहेतुं ज्ञातुं तत्र ययौ, पाणिना स्पृशंश्चाकाश- स्फटिकशिलामज्ञासीत्, परतश्चरन्नयं मृगोऽस्यां संक्रान्त इति स दध्यौ शीतांशौ भूमिच्छायेव मया मृगोऽदर्शि, पाणिस्पर्शं विना सर्वथेयंनोपलक्ष्यते तदसाववश्यं वसुमतीपते र्वंसो राज्ञो योग्या । ततः स मृगयु र्गत्वा राज्ञे रहो व्यज्ञपयत्, हृष्टो राजापि महद्धनमस्मै ददौ, ततः स राजा छन्नं स्वासनवेदिकां तया घटयामास, तच्छिल्पिनश्चा-

विश्वस्यापि भयंकरा रावणाज्ञा
सद्यो मखं विससर्ज हि
परत्र पुनर्नरके च भविष्यति। ततो मरुत्तनृपतिः सद्यो मखं विससर्ज हि विश्वस्यापि भयंकरा रावणाज्ञा
अलंघ्या। ततः पशुवधात्मानोऽमी अध्वराः कुतः संजज्ञिरे इति दशास्येन पृष्टो नारद इति जगाद। यत्र-
र्मसख्या इव शक्तिमत्याख्यया नद्या शोभिता दिक्षु विख्याता शक्तिमती नाम पुरी अस्ति। सुव्रतान्मुनिसुव्रताद-
नेकभूपेषु गतेषु सत्सु तस्यां राज्यभृतांवरो अभिचन्द्रो नाम राजाऽभवत्। अभिचन्द्रस्य महाबुद्धिः सत्यवाक्-
तया प्रसिद्धोऽभिधानतो वसुरिति तनयोऽजायत। क्षीरकदंबस्य गुरोः पार्श्वे, सुतः पर्वतको राजपुत्रोवसुः,
अहंच त्रयोप्यपठामः। पाठश्रमान्निशि सदनोपरि अस्मासु सुप्तेषु सत्सु व्योम्नि यान्तौ चारणश्रमणौ मिथ
ऊचतुः। एषामेकतमः स्वर्गं गमिष्यत्यपरौ पुनर्नरकं यास्यतः, तच्च क्षीरकदम्बकोऽश्रौषीत्। तच्छ्रुत्वा खिन्नः
क्षीरकदंबकश्चिन्तयामास हहा मय्यध्यापके सत्यपि शिष्यौ नरकं यास्यतः। एभ्यो कः स्वर्गं यास्यति कौ
च नरकं यास्यत इति जिज्ञासुरुपाध्यायोऽस्मान्त्रीन् युगपदाह्वयत्। ततोऽस्माकमेकैकं पिष्टकुकुटं समर्प्योवाच
यदमी यत्र कोऽपि न पश्यति तत्र वध्याः। तत्र वसुपर्वतकौ शून्यप्रदेशयोर्गत्वा आत्मनीनां गतिमिव पिष्टकु
कुटौ जघ्नतुः। अहंतु नगराद्बहिः, दवीयसि प्रदेशे गत्वा विजने देशे स्थित्वा दिशः प्रेक्ष्येत्यतर्कयम्। गुरुपादै-
रदस्तावदादिष्टं यद्धेवत्स! त्वयाऽयं कुक्कुटो तत्र वध्यो यत्र कोऽपि न पश्यति। अत्रत्वसौ पश्यति अहं पश्यामि,
अमी खेचराः पश्यन्ति लोकपालाः पश्यन्ति ज्ञानिनोऽपि पश्यन्ति। तत्स्थानमपि नास्त्येव यत्र कोऽपि न
पश्यति तद्गुरुगिरामिदमेव तात्पर्यं यदयं कुक्कुटो न वध्यः खलु। सदा हिंसापराङ्मुखा दयावन्तो गुरुपादा

परो व्योम्नोऽवतीर्य ब्राह्मणावृतं मरुत्तमहो ? किमिदमारब्धमित्यपृच्छम् । अथ मरुत्तोऽप्युवाचायं ब्राह्मणोदितो-यज्ञोऽस्ति इह देवतृप्तये अन्तर्वेदि पशवो होतव्याः । अयं खलु स्वर्गहेतवे महाधर्मः कीर्तितः तदग्रभोः ! एभिः पशुभिरहमद्य यज्ञं यक्ष्यामि । तत स्तस्याहमित्याख्यं वपुर्वेदी उदीरिता, आत्मा यष्टा, वह्निस्तपो, ज्ञानं च सर्पिः प्रकीर्तितम् । कर्माणि समिधादयः, क्रोधादयः पशवः, सत्यं यूपः, सर्वप्राणिरक्षणं पुनर्दक्षिणा मता । त्रिरत्नी तु त्रिवेदी मता इतियोगविशेषण वेदोदितः क्रतुः कृतश्चेन्मुक्तेः साधनं भवति । ये क्रव्यादतुल्याश्छागवधादिना यज्ञं कुर्युस्ते मृत्वा दुःखिनः सन्तो घोरे नरके चिरं तिष्ठेयुः । तद्धे राजन् त्वं बुद्धिमान् ऋद्धिमानुत्तमे वंशे चोत्पन्नोऽसि तदस्माद्व्याधोच्चितादेनसो निवर्तस्व । यदि प्राणिवधेनाऽपि देहिनां स्वर्गो जायेत तर्ह्ययं जीवलोकः स्वल्पैरेव दिनै स्तच्छून्यो भवेत् । इदं मम वचः श्रुत्वा यज्ञाग्नय इव द्विजाः क्रुधा ज्वलंता दंडपट्टकपाणयः प्रोत्तस्थुः । हे रावण ! ततस्तै स्ताड्यमानेन नश्यता मया नदीपूराभिभूतेनान्तरीपमिव त्वं प्राप्तोऽसि । तद् तैर्नृपशुभिर्वध्यमानान्निरागसः पशून्, त्रायस्व, अहं तु पुनस्त्वदवलोकनात्त्रात एव । ततो विमानाद् तद्दिदृक्षया उत्तीर्य, दशास्यस्तेनभूभुजा पाद्यसिंहासनादिना आनर्चे । ततः क्रुद्धो दशाननो मरुत्तभूपालमेवंजगाद, यदरे ! नरकाभिमुखैः किमेष मखः क्रियते त्रिजगद्धितैः सर्वज्ञैर्हि अहिंसातो धर्मः प्रोक्तः, स पशुहिंसात्मकाद् यज्ञात् कथं नाम जायताम् । तस्माल्लोकद्वयारि यज्ञं माकार्षीरथवा करिष्यसि चेदिह ते वासो मद्गुप्तौ[1]

---

१ मद्कारागृहे

दशाशनो निजगाद, अहं दिग्जयाय क्रमेणेह नदीतटे आगच्छम् । अमुष्मिस्तटे दत्तावासो विकचां बुजै र्जिनार्चामर्चित्वा यावदेकाग्रमानसस्तन्मयोऽभवम् । तावदमुनोन्मुक्तै र्निजस्नानमलीमसै र्वारिभिः पूजा प्लाविता तेन क्रुधाहमिदमकार्षम् । अमुना महात्मनाऽपि अज्ञानादेतत्कृतमिति मन्ये अन्यथा त्वत्सूनु रेपः क्वचिदर्हदाशातना कुर्यात् किम् । दशानन एवमुक्त्वा सहस्रांशुं नत्वानैषीत् लज्जानम्राननः सोऽपि पितरं मुनिं ननाम । ततो रावण स्तमेवं बभाण अतःपरं त्वं मे भ्राता अयं च शतबाहुमुनि स्तवेव ममापि पिता । तद् गच्छ निजं राज्यं शाधि अन्यामपि क्षितिं गृहाणास्माकं त्रयाणां मध्ये त्वमपि चतुर्थः श्रियोंऽशभागसि । एवमुक्तः मुक्तश्च सहस्रांशुरदोऽवदत् अतःपरं मे राज्येन वपुषा वापि कृत्यं नह्यस्ति । अहं तु पित्राश्रितं संसार-नाशन व्रत श्रयिष्यामि, अयं हि पंथाः साधूनां निर्वाणमुपतिष्ठते । इत्युदीर्य दशास्याय निजं तनयं समर्प्य चरमदेहः सः पितृपादान्तिके व्रतमग्रहीत् । तदैव सः सौहृदादनरण्यनरेन्द्राय स्वयमात्तां परिव्रज्या वाचि-केन कथयामास सः अयोध्याधिपोऽपि मे प्रियमित्रेण तेनैवं संकेतोऽभवत यद्युगपद्व्रतमादेयमिति दध्यौ इति स्वप्रतिज्ञां स्मृत्वा सः सत्यधनः स्वसूनवे दशरथाय राज्यं दत्वा व्रतमुपाददे । ततो दशाननः शतबाहुसहस्रांशू ऋषी वंदित्वा सहस्रांशोः सुतं राज्ये न्यस्य अंबरेऽवाचलत् । तदा यष्टिघातादिजर्जरो नारदमुनिरन्याय इति पूत्कुर्वन्रावण मित्यभाषिष्ट । भोराजन्नमुष्मिन्राजपुरे मरुत्तोनाम मिथ्यादृक् भूपति र्दुर्द्विजवासितः क्रतुं कुर्वाणोऽस्ति । सौनिकैरिव तद्द्विजै र्यज्ञे वधायानीतान् पाशबद्धानानागसः पशून्नारटतोऽपश्यम् । ततोऽहं कृपा–

शरभानिव नभःस्थितास्ते राक्षसाः भूयिष्ठांस्तान्मोहयन्त उपदुद्रुवुः । स्वानुपद्रूयमाणान्प्रेक्ष्य क्रोधधुताधरः स सहस्रांशुश्चलत्पताकहस्तेन निजाः प्रेयसी राश्वासयत् । ततः सुरसिन्धोरैरावण इवोच्चकैः सहस्रांशू रेवातो निर्जगाम धनुश्चाधिज्यं व्यधात् । महाबाहुः सहस्रांशु रनिलस्तृणपूलानिव नभःस्थितान्रक्षोवीरान्बाणै र्विद्राव यामास । रणाद्व्यावृत्तांस्तान् प्रेक्ष्य संक्रुद्धो रावणः स्वयंशिलीमुखानभिवर्षन्सहस्रांशुमुपतस्थे । तौ द्वावप्यमर्षणौ द्वावप्यूर्जितौ द्वावपि स्थिरौ चिराय विविधैरायुधै र्युद्धं विदधाते । तदा रावणो तं माहिष्मतीपतिं दोर्वीर्येणाजय्यं ज्ञात्वा विद्यया मोहयित्वेभमिव जग्राह । अथ जित्वापि महावीर्यं तं प्रशंसन् जितमान्यनुत्सिक्तो दशाननः स्वयं स्कन्धावारेऽनयत् । हृष्टो दशाननो यावत्सभायामासीनस्तस्थौ तावच्छतबाहुर्नाम चारणश्रमणः समाययौ तदा दशास्यः सिंहासनात्समुत्थाय मणिपादुके च त्यक्त्वा वर्हिणः पयोदमिव तं मुनिमभ्युत्तस्थौ । तमर्हद्गण धरोपमं मन्यमानो रावणः पंचांगस्पृष्टभूतलस्तस्यपादयोः पपात दशग्रीवस्तं स्वयमर्पिते चासने आसयामास प्रणम्य स्वयञ्चोर्व्या मुपाविशत् । विश्वाश्वासनबान्धवः सः मूर्तिस्थो विश्वास इव तस्मै कल्याणमातरं धर्मलाभाशिषमदात् । अञ्जलिं बद्ध्वा रावणेन समागमनकारणं परिपृष्टो मुनिमप्ठोऽदुष्टया गिरा अभापिष्ट । अहं माहिष्मत्यां नाम्ना शतबाहु र्नृपोऽभवम् । अनन्तरं पावकाच्छार्दुल इवेतो भववासाद्भीतः सहस्रकिरणे निजनंदने राज्यमारोप्य मोक्षाध्वरथंदनमायंव्रतमशिश्रियम् । इत्यर्धोक्ते दशाननो नमद्ग्रीवः सन्नित्यब्रवीत् किमसौ महाभुजः पूज्यपादानामंगजन्मा । मुनीन्द्रेणोमित्युक्ते

अथवा कश्चित्सुरो वा ऽसुरोऽस्ति। अथ कश्चिद्विद्याधरो दशमौलये आचख्यौ हेदेव ! इतः पुरस्तादत्युच्चै र्माहिष्मती पुर्यस्ति। तस्यामपरः सहस्रांशुरिव सहस्रशैर्नृपैः सेव्यो महाभुजो नाम्ना सहस्रांशुः पार्थिवोऽस्ति असौ सहस्रांशु र्जलक्रीडोत्सवकृते रेवायां सेतुबंधेन वारि बंधं व्यधान्महौजसां किमसाध्यमस्ति हि। इतोऽसौ सहस्रांशु र्वरदन्ती वशाभिरिव राज्ञीसहस्रेण समं वारिभिः सुखं क्रीडति। हरेरिवास्य महीपते र्द्वयोरपि तीरयो रुदस्त्राश्च[3] लक्षसंख्या आत्मरक्षास्तिष्ठंति। अप्रतिमौजसोऽस्यादृष्टपूर्वोऽवष्टंभो[4] यथा ते आत्मरक्षा अपि शोभा- मात्रं यदि वा कर्मसाक्षिणः। दोष्मतस्तस्योर्जिते र्जलक्रीडाकराघातै र्जलदेवीभिः क्षुभितं यादोभिश्च पलायितम्। इदं पयः स्त्रीसहस्रयुतेन तेनात्यंतरुद्धत्वाद् पर्यस्यमाणत्वाच्च[5] काम मुल्लुठितम्। हे दशानन ! उद्धतमिदं वारि वेगादुभे रोधसी प्लावयित्वा इह ते देवपूजां प्लावयामास। हेदशानन ! तत्स्त्रीणामेतानि निर्माल्यानि रेवातीरे तरन्तीत्यादिमसुचैस्तदभिज्ञानं पश्य। हेवीरवारण ! तदंगनाजनस्य मृगमदादिजैरंगरागै र्दुर्वारमिदं वारि अत्याविलम्। इति तद्गिरमाकर्ण्य आहुतिंप्राप्यानलइव दशाननो अधिकमुद्दिदीपे एवंचोवाच। अरे मुमूर्षुणा तेन स्वांगदुषितै र्वारिभिरंजनैर्दैवदूष्यमिवेयं देवपूजा दूषिता। तद्धे राक्षसभटा ! यूयं यात आनायिका मत्स्य- मिव भटमानिनं तं पापं बद्ध्वा समानयत। तेनैवमादिष्टा अनुचरा उद्भटा लक्षशो राक्षसभटा रेवोर्मय इव दधाविरे। ते च निशाचरा स्तीरस्थैः सहस्रांशुसैनिकैः सह गजा वनान्तरगजैरिव रणं चक्रुः। अंभोदाःक्रकैः

३ ऊर्ध्वशस्त्रा । ४ प्रारम्भ । ५ मुच्यमानत्वात् १ धीवरा ।

राहूतः खर इन्द्रजिगीषया रावणेन सहाचालीत् । ततः ससैन्यः सुग्रीवराजोऽपि वायो र्विभावसुरिव दोष्मतो रक्षोराजस्यान्वचालीत् । अनेकपृतनाच्छन्नरोदसीकोऽस्खलद्गतिर्दशानन उद्‌भ्रान्तः पयोराशिरिव प्रययौ अथ दशाननः कूजन्मरालमालाभिराबद्धरसनामिव विपुलया पुलिनोर्व्या नितंबेनेव शोभितामतिगंभिरैस्तरंगै-रलकानिव बिभ्राणां मुहुःशफरोद्वर्तनैः कटाक्षानिव मुंचन्तीं कामिनीमिव चतुरां विंध्यशैलादुत्तरन्तीं रेवां नाम तरंगिणीं ददर्श । तदा ससैन्यो दशकन्धर उध्धुरो यूथसमाहृतः सिन्धुरग्रामणीरिव रेवाया रोधस्युवास । अथ स तस्यां कृतस्नानो धौतवाससी वसानः समाधिसुदृढासनो मणिमये पट्टे रत्नमयमर्हद्बिंवं न्यस्य रेवाम्भोभिः स्नापयित्वा विकासिभिरतदंभोजैः पूजयितुं समारेभे । ततः पूजाव्यग्रस्य तस्थुषो दशग्रीवस्याकस्मादब्धि-वेलेव महापूरः समाययौ । गुल्मानिव महीरुहान् मूलत उन्मूलयन्नून्नतानां तटानामुपर्यपि पयः प्रासरत् । अभ्रंलिहा वीचिपंक्तयो विष्वक् शुक्तिपुटानीव तटनियंत्रितास्तरी आस्फोटयन् । स पूरः पातालकुहरोपमान् महतोऽपि रोधोगर्तान् भक्ष्यं कुक्षिंभरीनिव पूरयामास । सा नदी पार्वणी चन्द्रज्योत्स्ना ज्योतिश्चक्रविमानानिवा-न्तरीपाणि[1] समन्ता त्स्थगयामास । वेगवान् पूरो महावातो द्रुमपल्लवानिव प्रोच्छलद्भिर्महोर्मिभि र्मत्स्यानुत्सा-दयामास । फेनिलं [2]सावकरं रयागतं तद् पूरवारि पूजांकुर्वतो दशकंठस्यार्हत्पूजामपानैपीत् । शिरच्छेदाधिकेन तेन पूजापहारेण जातकोपः स दशाननः साक्षेपमिदमभ्यधात् । अरे रे अकारणारिणा केनातिवेगतो दुर्वार मिदंवार्यर्हत्पूजान्तरायामुच्यत । पश्चात्कोऽपि मिथ्यादृष्टिर्नराधिपोऽस्ति । किम् ? किंवाकश्चिद्विद्याधरः

१ द्विपानि । २ सपकम् ।

तस्य रूपसंपदा श्रीमती श्रीमती देवं

चक्रांकविद्याधरनृपात्मजः साहसग[illegible]

याचयांचक्रे वानरेन्द्रः सुग्रीवश्च याचयांचक्रे हि रत्ने बहवोऽर्थिनो भवन्ति । रूपवन्तौ महौजसाविमौ द्वावपि अभिजातौ तत्कस्मै कन्या दीयते इति ज्वलनोनाम तारापिता ज्ञानिनं पप्रच्छ । तदा नैमित्तिकेन साहसगति रल्पायुः सुग्रीवश्च दीर्घायुरित्युक्ते सति स ज्वलनस्तां तारां सुग्रीवाय ददौ । साहसोप्यभिलाषाविप्रलंभादंगारचुंबितइव दिनेदिने क्वापि निर्वृतिं न प्राप । तारायां रममाणस्य सुग्रीवस्य दिग्गजोर्जितावंगदजयानंदाख्यौ द्वावंगजौ बभूवतुः । तारायामनुरागवान् सः साहसगतिरपि मन्मथोन्मथ्यमानात्मेदं चिन्तयागासिवान् । मृगशावकचक्षुषस्तस्याः पक्वबिंबाधरदलच्छदनं वदनाम्बुजं कदा चुंबिष्यामि । तस्याः कुचकुंभौ स्वपाणिनाऽहं कदा स्प्रक्ष्यामि तौ च गाढालिंगनवामनौ कदा चुंबिष्यामि बलेन छलेन वापि तां हर्तास्मीति चिन्तयन् रूपस्य परिवर्तिनीं शेमुषीं विद्यां सस्मार । एवं चक्रांकनृपनंदनः क्षुद्र-हिमवद्गिरौ गत्वा गुहान्तरे च स्थित्वा तां साधयितु मारेभे । इतश्च दशाननो लंकापुर्या दिग्यात्रायै पूर्वशैलतटाद् विकर्तन इव निर्ययौ । सः द्वीपान्तरनिवासिनो विद्याधरान्नरेंद्रान् वशीकृत्य पातालंलंकां पुरीं ययौ । तत्रास्वर-भाषिणा चन्द्रणखाभर्त्रा खरेण भृतकेनेव प्राभृतैः सः निभृतमपूज्यत । ततो विद्याधराणां चतुर्दशभिः सहस्रै

---

१ सूर्य ।

हात्म्यमुदिताः साधुसाध्विति भाषिणः सुराः वालिमुने रुपरिष्टात् पुष्पवृष्टिं व्यधुः । रावण स्ततो भूयो वालिनं प्रणम्य तच्छैलमुकुटोपमे भरतेश्वरनिर्मिते चैत्ये जगाम । गत्वा च सः सान्तःपुरः चन्द्रहासादिशस्त्राणि मुक्त्वा स्वयं ऋषभादीना मर्हता मष्टविधां पूजांव्यधात् । तत्र महासाहसिको दशाननः स्नषां समाकृष्य तन्त्रीं ममृज्य च भक्त्या भुजवीणा मवादयत् । दशानने ग्रामरागरम्य मुपवीणयति सति, अस्य चान्तःपुरे सप्तस्वरमनोरमं गायति सति, धरणः पन्नगेश्वर श्चैत्यवंदनयात्रायै तत्रायया अर्हतः पूजापूर्व मवन्दत च । करणध्रुवकादिभि रर्हद्गुणमयै र्गीतै वीणया गायन्तं रावणं प्रेक्ष्य धरणो ऽब्रवीत् । हे रावण ते निजभावानुरूप मर्हद्गुणस्तुति-मय मिदं गीतं साधु, ननु तेन च तुष्टोऽस्मि अर्हद्गुणस्तुते र्मुख्यं फलं मोक्ष स्तथाप्यहमजीर्णवासनस्तुभ्यं किं यच्छामि तद्वरो वृणीष्व । रावणोप्येवमभ्यधात् हेनागेन्द्र! यदि देवदेवगुणस्तवै स्त्वं तुष्टोऽसि तद्युक्तम् साहि तव स्वामिभक्तिर्हि । यथा ददानस्य तव स्वामिभक्तिः प्रकृष्यते तथैवाददानस्य मम सा भक्तिः काममपकृष्यते । नागेन्द्रो भूयोप्युवाच हेसाधुमानद रावण! ते ऽनया निराकांक्षतया विशेषत स्तुष्टोऽस्मि । इत्युक्त्वा स नागेन्द्रो रावणायामोघविजयां शक्तिं रूपविकारिणीं च विद्या मदात् निजाश्रयञ्च जगाम । ततो दशानन स्तीर्थनाथान्न-मस्कृत्य निजालोकपुरेऽगमत् ततो रत्नावलीं व्यूह्य लंका माजगाम । तदा वालिनोऽप्युज्वलं केवलज्ञान मुत्पेदे सुरासुरैः केवलज्ञानमहिमा च विदधे । अथ स वाली क्रमेण भवोपग्राहिणां कर्मणां क्षयात् सिद्धानंतचतुष्टः तदपुनर्भवं पदमगात् । इतश्च वैताढ्यगिरौ ज्योतिः पुराभिधे पुरे नाम्ना ज्वलनशिखो विद्याधरेश्वरो बभूव ।

कडत्कडदितिनिर्भग्ननितंबोपवनद्रुमं गिरिं अनेकलब्धिनद्यब्धिः विशुद्धधीः स महामुनि र्वाली अवधिना तेनोध्धृतं ज्ञात्वा इति दध्यौ । आः कथमयं दुर्मति रद्यापि मयि मात्सर्यादकांडे अनेकप्राणिसंहारं तनुतेतराम् । एषः संप्रति भरतेश्वरचैत्यं भ्रंशयित्वा भरतक्षेत्रभूषणं तीर्थं मुच्छेत्तुं यतते । अहं च त्यक्तसंगोऽस्मि स्वशरीरेऽपि निःस्पृहोस्मि रागद्वेषविनिर्मुक्तोऽस्मि साम्यवारिणि निमग्नोऽस्मि । तथाप्यहं चैत्यत्राणाय प्राणिनां रक्षणाय च रागद्वेषौ विनैवैनं मनाक् शिक्षयामि । एवंविमृश्य भगवान् वाली लीलया पादांगुष्ठेनाष्टापदाद्रे मूर्धानं किञ्चिदपीडयत् । तदा तत्क्षणात् दशास्यो मध्यान्हदेहछायावत् पयोवाह्यस्थकूर्मवच्चाभितः संकुचद्गात्रोऽभूत् । तेन सः अतिगंभीरदोर्दंडोऽपि मुखेनरुधिरंवमन्नरावीत् उर्वीं च रावयन् रावणइत्यन्वर्थनामाभूत् । तस्यदीनमारटनंश्रुत्वा कृपापरो वाली आशु तं मुमोच यतस्तत्कर्म शिक्षामात्रायाभूत् क्रुधा तु नाभूत् । अथ निःप्रतापोऽनुतापवान् दशकंठः निःसृत्योपेत्य वालिनं नत्वोदंजलिः सन्नित्युवाच । अहं निस्त्रपः सन् भूयो भूयस्त्वयि अपराधानांकर्तास्मि हे महात्मन् त्वंतुशक्तिमानपि सोढा उत्कृपश्चासि । हेप्रभो प्राक्त्वं यदुर्वीमत्यज स्तन्मयि कृपां कुर्वन्नत्वसामर्थ्यतः किन्तु तत्पुराहं नाज्ञासिषम् । अथाज्ञानात् कलभेनेवाद्रिपर्यसने यत्नं कुर्वतातेन मया इयं स्वशक्ति स्तोलिता । शैलवल्मीकयो र्यादृगन्तरं यादृग्गरुडभासयो रन्तरं तादृक् भवतः आत्मनश्चयदंतरं तन्मयाऽद्य ज्ञातम् । हेस्वामिन् मृत्युकोटिं गतस्य मे प्राणास्त्वयादत्ताः यस्यापकारिण्यपीयं मति स्तस्मै ते नमोऽस्तु । इति दृढभक्त्या भाषित्वा क्षमयित्वा च वालिनंत्रिःप्रदक्षिणीकृत्य दशाननो नमश्चक्रे । तादृङ्गा-

संशुष्यत्प्राक्तनस्नेहतरोः सारणिसंनिभाम् श्रीप्रभां दशकंठायददौ यौवराज्येतु चन्द्ररश्म्युज्वलयशाः सुग्रीवः महौजसं वालिपुत्रं चन्द्ररश्मिन्यवीविशत् । सुग्रीवप्रतिपन्नाज्ञः दशाननः तत्सहोदरां श्रीप्रभां उपयम्य गृहीत्वा च लंकां ययौ । स रावणः अन्येषामपि विद्याधरनरेंद्राणां रूपवतीः कन्यकाः बलादप्युपयेमे । तदा स रावणः नित्यालोकपुरे नित्यालोकविद्याधरेशितुः नाम्नारत्नावलीं कन्यां उद्वोढु चचाल । तदा वप्रे द्विपां बलमिव अष्टापदाद्रेरुपरिगच्छतस्तस्य पुण्यकं विमानं सद्यः स्खलितम् । न्यग्रांगरं महापोतमिव बद्धं द्वीपमिव रुद्धगतिकं विमानं प्रेक्ष्य दशाननोऽकुप्यत् । मद्विमानस्खलनात् को यमाननं विविक्षति एवंवदन् स दशाननः विमानात्समुत्तीर्याद्रि-मूर्धानमैक्षत । विमानस्याधस्तात् सः प्रतिमास्थितं वालिनमुत्थितं शैलस्य नवंश्रृंगमिव ददर्श । तदा क्रुद्धो रावणः ऊचे भो ! अद्यापि मयि विरुद्धोऽसि एतज्जगद्दिदंभिषुः दंभेन व्रतं वहसि । अग्रेऽपि कयापिमायया वाहिक इव मामावहः अस्मत्कृतमतिकृतं शंकमानः माव्राजीः खलु । नन्वद्यापि सएवास्मि त एव मम बाहवः तत्ते प्राक्कालं कृतप्रतिकृतमहंकरोमि । यथात्वं सचन्द्रहासं मामूढ्वा अब्धिषु अभ्राम्य स्तथैव त्वामपि साद्रिंमुत्पाट्य लवणार्णवे क्षेप्स्यामि । एवमुक्त्वा दशग्रीवो दिवश्च्युतः अशनिरिवक्ष्मां विदार्य अष्टापदगिरे स्तले प्रविवेश । ततो दोर्बलमदोद्धुरः दशकंधरः युगपत् विद्यासहस्रंस्मृत्वा दुर्धरं [1]धरमुदध्रे । ततो तडत्तडदिति निर्घोषं वित्रस्तव्यन्तरामरं जलज्जलदितिलोलाब्धिपूर्यमाणरसातलं खडत्खडिति विभ्रश्यद्ग्रावक्षुण्णवनद्वीपं

---

१ पर्वतम्

कपीश्वर उच्चैः स्वैरस्त्रैः प्रतिजघान। रावणः सार्पवारुणमुख्यानि मंत्रास्त्राणि मुमोच वाली तु तार्क्ष्याद्यैरस्त्रै स्तानि जघान च। ततः शस्त्रमंत्रास्त्रवैफल्यक्रुद्धो दशाननः महाहिमिवदारुणं चन्द्रहासासिं चकर्ष। एकशृंगो गिरिरिव एकदन्तः कुंजर इव उच्चन्द्रहासो दशकंधरः वालिनेऽधाविष्ट। तदानीम् वाली सचन्द्रहासंलंकेशं सशाखं शाखिनमिव वामेन बाहुना लीलयैव समाददे। ततः कपीश्वरः कंदुकमिव तं रावणं हस्तकोटरे न्यस्य विहस्तः क्षणेनापि चतुःसमुद्रीं बभ्राम। ततो वालिराजः तदानीमेव तत्रेत्य त्रपावनतकंधरं दशकंधर मुज्झित्वा इत्यब्रवीत् । हे दशानन! सर्वविदं त्रैलोक्यपूजितमाप्तं वीतरागमर्हतं विना कदाचन मे कश्चिदपि नमस्यो नास्ति। अगोत्थितं तं द्विषन्तं प्राह मानंधिक् येन मोहितस्त्वं मत्प्रणामकुतूहली इमामवस्थां प्राप्तोऽसि। तथापि पूर्वोपकारान् स्मरता मया संप्रति मुक्तोऽसि पृथिवीराज्यं च दत्तं तदखंडाज्ञः सन् तद्राज्यं प्रशाधि। मयि विजिगीषौ सति इयं पृथिवी तव कुतः स्यात् यथा सिंहनिषेविते वने हस्तिनामवस्थानं क भवेत्। तच्छिवसाम्राज्यकारणं परिव्रज्यामादास्ये किष्किन्धायां तु तवाज्ञाधरः सुग्रीवो राजाऽस्तु। एवमुक्त्वा तत्क्षणात् निजेराज्ये सुग्रीवं न्यस्य स्वयं गगनचन्द्रर्षिपादमूले व्रतमग्रहीत्। ततो विविधाभिग्रहः प्रतिमाधरः ध्यानवान् निर्ममोवाली मुनि रवनौ व्याहरत। अथ पादपस्य पुष्पपत्रफलादयः संपद इव वालिभट्टारकस्य क्रमाल्लुब्धय उत्पेदिरे। वद्धदोलादंडद्रुम इव लंबमानभुजः स वाली अष्टापदाद्रौगत्वा कायोत्सर्गमदत्त। एवं सः कायोत्सर्गं समुत्सृज्य मासान्ते पारणंव्यधात्। एवं भूयोभूयस्तत्सर्गपारणानि चकार। इतश्चसुग्रीवः

विना अन्यं सेव्यं वयं न जानीम स्तव स्वामिनस्तु को मोहः। स्वं सेव्य मस्मांश्च सेवकान्मन्यमानेन तेन कुलक्रमागतः स्नेहगुणोऽद्य खंडितः। मित्रकुलोत्पत्ते र्निजांशक्ति मजानतश्चतस्य स्वयमहमपवादैककातरः किञ्चिदपिनकरोमि। किन्तु विप्रियं कुर्वतस्तस्य प्रतिक्रियां करिष्यामि पूर्वस्नेहद्रुकर्त्तने [1]अग्रेगूर्नभविष्यामि। तस्मादररे दूत ! स तवस्वामी यथाशक्ति करोतु त्वं व्रज एवंवालिनानिसृष्टः सदूतः गत्वा दशमौलये आख्यत्। अथ तद्गिरा उद्दीपितक्रोधपावकः दशाननः ससैन्य [2]र्नुद्धरस्कंधः द्रुतं किष्किधा माययौ भुजौजसा राजमानो वालीराजापि सन्नद्धतमभ्यगात् दोष्मतां युद्धातिथिः प्रियः खलु। तत उभयोरपि सैन्ययोः गंड शैला गडशैलि द्रुमाद्रुमि गदागदि युद्धं प्रवृत्ते। तत्र शतशोऽपि रथाः [3]भ्रष्टपर्पटवत् अचूर्यन्त तथा महान्तोऽपि गजाः मृत्पिडवदभिद्यन्त। तुरंगमा अपि स्थाने स्थाने कुष्मांडवदखंड्यन्त पत्तयः चचापुरुषवद्भूमावपात्यन्त। सानुक्रोशः वीरः प्लवगराट् तं प्राणिसंहारं प्रेक्ष्य सत्वरमभ्येत्य दशाननमिति जगाद। विवेकिनाम् प्राणि-मात्रस्यापि वधो न युज्यते हस्त्यादिजीवानां पंचेन्द्रियाणां वधे वत का कथा। यद्यप प्राणिवधो द्विपज्जयाय युक्त स्तथापि दोष्मतामेष नार्हः दोष्मन्तोहि निजै दोर्भिरेव विजयकांक्षिणः सन्ति। त्वं हि दोष्माञ्छ्रावक-श्चासि तत् सैन्ययुद्धं विमुञ्च यदनेकप्राणिसंहारात् तद्युद्धं चिराय नरकाय भवति। एवं तेनसंबोधितो धर्मवि द्युद्धविशारदो दशास्योऽपि अंगेन योद्धु मारेभे। दशग्रीवो यद्यदस्त्रम क्षिपत् तत्तदस्त्रमर्यमावह्नितेज इव

---

१ अग्रेसर । २ दृढस्कंधः । ३ अग्निनाभ्रष्टाः येपर्पक्षः " भाषायापापड" तद्वत ।

नंष्ट्वा वनेऽगात् ततः सा तस्मिन्वने सिंही सिंहमिव उल्बणंनयादिगुणभाजनं विराधं नाम तनय मसूत। सम्प्राप्तयौवनः सर्वकलाजलधिपारगः अस्खलत्प्रसरः स विराधः पृथ्वीं विजहार। इतः कदाचित्कथाप्रसंगेन स रावणः सभायां वानरेश्वरं वालिनं प्रौढप्रतापं बलिनश्चाशृणोत्। भानुमानिवान्यप्रतापस्यासहनो रावणः अनुशिष्यैकं दूतं वालिमहीभुजे प्रजिघाय। स तत्र गत्वा वालिनं नत्वा धीरवागिति व्याजहार हे राजन् अह दशकंधरस्य दूतोऽस्मि तद्वाचिकं श्रृणु। वैरिविद्रुतस्तत्रपूर्वजः श्रीकंठः शरण्यमस्माकं पूर्वजं कीर्तिधवलं शरणायाऽगात्। श्रीकीर्तिधवलोऽपि [1]श्वशुर्यं तं अरिभ्य स्त्रात्वा तद्वियोगैककातर इहैव वानरद्वीपे न्यधात्। तदादि आवयोरुभयोरपि पक्षयो र्मिथो भर्तृभृत्यसंबंधतो भूयांसः क्ष्माभुजो जग्मुः। अथ ते पितामहः किष्किन्धिः क्षितिपतिः अभवत् ममतु प्रपितामहः सुकेश इत्यभिधयाऽभवत्। तयोरपि सभर्तृभृत्यसंबंध स्तथैव निर्व्यूढः हि ततस्त्वदीयः पिता सूर्यरजानाम नृपोऽभवत्। तमहं यथा यमगुप्ते राकर्षं तज्जनोवित्ति यथा च किष्किन्धा-राज्ये न्यधां तदपि विश्रुतम्। हे वालिन् अधुनात्वमपितस्यनयवान् तनयोऽभवः तत् प्राग्वत् स्वस्वामिसंबंधा-दस्मत्सेवांकुरुष्व क्रुद्धोऽपि वाली आवकृताकारः सन् गर्ववह्निशमीतरुर्महामना वाली गभीरगीः एवं व्याज-हार। रक्षोवानरराजानां द्वयोःकुलयोः अन्योन्यं स्नेहसंबंधं अद्ययावदखंडितं जानाम। पूर्वे संपदि आपदि च अन्योन्यं साहाय्यकं व्यधुः तत्रस्नेहोनिबंधनम् सेव्यसेवकतातु न। सर्वज्ञमर्हन्तं सुगुरुं साधुं च

---

[1] श्वशुरपुत्रं श्यालकम्.

सुग्रीव इतिनामा. सुप्रभा इति नामतः कनीयसी कन्या चाऽभूत्। अमृतरजसोऽपि हरिकान्तायां भार्यायां-भुवनविश्रुतौ नलनीलाभिधा वुभौ सुतावभूताम्। आदित्यरजानरेन्द्रः बलशालिने वालिने राज्यंदत्वा प्रवव्राज तपस्तप्त्वा च शिवं ययौ। वाल्यपि सम्यग्दृष्टिं न्यायवन्तं दयावन्तं महौजसं स्वानुरूपं सुग्रीवं यौव-राज्ये न्यधात्। अन्यदा दशग्रीवः सकलत्रो गजारूढः सन् चैत्यवंदनहेतवे मरुपर्वते प्रययौ। अत्रान्तरे मेघ-प्रभात्मजः [1]खरखेचरः चन्द्रणखामपश्यत् जातरागः सन् जातरागां तां जह्रे। पाताललंकां च ययौ तत्र आदित्यरजसः सूनुं चन्द्रोत्तरं नृपं निर्वास्य तां स्वयमादत्त। दशकन्धरः क्षणेनापि मेरोर्लंकायामाययौ तच्चन्द्र-णखाहरणमाकर्ण्य प्रचुकोप च। अथ दशाननः [2]गजाखेटकर्मणे क्रुद्धः पंचानन इव खरखेचरघाताय चचाल। अथ मन्दोदरी देवी रावणमिति निजगाद यद्धेमानद! क्षणं विमृश अयमस्थाने कः संरंभः। हि कन्या अवश्यं कस्मैचिद्दातव्याऽस्ति यदि सा स्वयं अभिजातं रुचितं च वरं वृणीते तत् साधु। चन्द्रणखाया अनुरूपः स दूषणात्मजो वरः अदूषणः विक्रमी च स ते पत्ति र्भविष्यत्ति। अतः प्रधानपुरुषान् प्रेष्य तया सह तमुद्वा-हय अस्मै पाताललंकाञ्च देहि प्रसन्नताञ्च धेहि। एवमेवावरजाभ्यामप्युक्तो युक्तविचारकृत् सः रावणः मय-मारीचौ प्रस्थाप्य तेन सह तां पर्यणाययत्। ततः स रावणशासनंदधत् चन्द्रणखया समं पाताललंकायां निर्विघ्नं भोगान् बुभुजे। तदा तेन निवासिते चन्द्रोदरे कालान्मृते सति अनुराधेति तत्पत्नी गर्भिण्यपि

१ खरनामा खेचर.। २ गजमृगयाकर्मणे

सन्नो नगर्या निर्ययौ । ततः सैन्याः सैन्यैः सेनान्यः सेनाधिपै क्रुद्धः पुनर्यमस्तु क्रुद्धेन दशमौलिना समाहवं
चक्रुः । तदा दशग्रीवः परान् क्लीववद्गणयन् क्षुरप्रेण नालकांडमिव तम् खंडशः खंडयामास । ततोयमः भूयोऽपि
रावणम् पृषत्कैश्छादयामास रावणोऽपि लोभः सर्वगुणानिव तानवारयत् । अथ दशाननः युगपद्भूयसो वाणान्
वर्षन् बलनाशकृज्जरेव यमं जर्जरयांचक्रे । अथ यमः संग्रामात्त्वरितं प्रणश्य रथनूपुरनेतारं विद्याधरेश्वरं
इन्द्रमभ्यगात् । तत्र यमः कृतांजलिः सन् शक्रं नमस्कृत्य हे प्रभोऽधुना मया यमत्वाय जलांजलिरदायीति
जगाद । हे नाथ त्वं रुष्य वा तुष्व अहं तु यमतां नहि करिष्ये । हि अधुना यमस्यापि यमः दशग्रीव उत्थितः ।
क्षत्रव्रतधनेन तेन नरकारक्षान् विद्राव्य नारकाः मोचिताः अहमप्युच्चै राहवात् जीवन्मुक्तोऽस्मि । तेन युधि-
वैश्रवणं जित्वा तद्विमानं पुष्पकं लंकापि जगृहे सुरसुंदरोऽपिजितश्च । अथ युद्धेच्छुः शक्रः क्रुद्धोऽपि विग्रह
भीरुभिः कुलमंत्रिभिः स्तैरुपायै र्वलिना तेन रावणेन सह योद्धुं निषिद्धः । अथेन्द्रः यमाय सुरसंगीतंपुरं
दत्तवान् स्वयं च रथनूपुरे विलसन् तथैव तस्थौ । इतश्च दशास्यः आदित्यरजसे किष्किंधां नगरीं ददौ ऋक्ष-
रजसे पुनः ऋक्षपुरं ददौ । अलंकर्मिणविक्रमः स रावणः स्वयं च वन्धुभि र्नागरैश्चस्तूयमानः देवतेव लंकां
जगाम । अथ अमरेन्द्र अमरावत्यामिव दशास्यस्तस्यां लंकायामवस्थितः सन् पितृपैतामहं महद्राज्यं
प्रशशास । इतश्चादित्यरजसः कपिराजस्य इन्दुमालिन्यां महिष्यां वालीनाम वली नंदनोऽभवत् । स वाहुबलोऽ-
लवणोवाली समुद्रातं जंबुद्वीपं नित्यं प्रदक्षिणीकुर्वन् सर्वचैत्यानि अवन्दत । आदित्यरजसः अन्योऽपितनयः

विडंबयन् तस्य भुवनालंकार इति नामचक्रे । दशास्यो गजमालानितं कृत्वा तां निशाम् तत्रैवोवास सपरिच्छदः मातरास्थानी मध्यष्ठात् । तदानीम् मतीहारविज्ञप्तो घातजर्जरः पवनवेगो विद्याधर स्तत्रोपेत्य तं नत्वेवमब्रवीत् । हे देव ! पातालंलंकायाः किष्किन्धिनृपनंदनौ सूर्यरजाऋक्षरजा अपि किष्किन्धायां गतौ । तत्र तयोः प्राणसंशयदायिनातिघोरेण यमेनेव यमेन भूभुजा युद्धमभूत् । यमेन चिरं युद्ध्वा उच्चैर्बद्ध्वा च. सूर्यरजा ऋक्षरजाश्च सपदि दस्युवत् कारागारेक्षिप्तौ । तेनयमेन वैतरणीयुतान् नरकावासान् विधाय सपरिच्छदौ तौ छेदभेदादि दुःखं माप्येते । अतो हे दशकंधर क्रमायातौ तौ त्वदीयौ सेवकौ मोचय यतस्त्वमलंघ्याज्ञोऽसि अन्यथाऽयं तवैव पराभवोऽस्ति । रावणोऽप्यसंशयमेतदेवमेवेति जगाद हि, आश्रयस्य दौर्बल्यादाश्रितः परिभूयते । तेन दुर्धिया अमी पत्तयः परोक्षतोयद्बद्धाः यचकारायां निक्षिप्ताः एषोहं तत्फलम् यच्छामि । इत्युदीर्य उग्रदोर्वीर्यः भनीकल्लोलसः सानीकः स रावणः यमदिक्पालपालिताम् किष्किन्धांपुरींजगाम । तत्र गत्वा दशकन्धरः त्रपुपान शिलास्फाल पर्शुच्छेदादि दारुणान् सप्तापि नरकान् ददर्श । तत्रक्लिश्यमानान् निजान् पत्तीन् दृष्ट्वा रुष्टो दशाननः गरुडोऽहिवत् परमाधार्मिकानत्रासयत् । तत्रस्थानपरानपि स्वपत्तीन् मोचयाभास महतामागमो हि आशु कस्य क्लेशच्छेदाय न भवति अपितु सर्वस्यापि क्लेशं छिनत्ति । ततो नरकरक्षकाः सफूत्कारोर्ध्ववाहवः सन्तः क्षणाद्गत्वा तन्नारकमोक्षणं यमाय समाचख्युः अपरो यम इव युद्धनाटकसूत्रभृत् यमः क्रोधारुणाक्षः सन् योद्धुं

१ मुद्गसत्या ।

निर्मणे रलंकारस्य, नष्टज्योत्स्नस्यशशिनः, गतांभसस्तोयदस्य, परै भंग्नमानस्य मानिन श्चावस्थितिं धिक्। अथवा यतमानस्यतस्यावस्थानं मुक्तयेऽस्तु हि स्तोकं विहाय बह्विष्णुः पुमान् लज्जास्पदं न भवति। तदनेका-नर्थप्रदायिना राज्येन ममालम्। अहंतु निर्वाणवेश्मनो द्वारं परिव्रज्या मुपादास्ये। अपकर्तारावेतौ कुंभकर्ण विभीषणौ अपि ईदक्पथनिदर्शनान्ममोपकर्तारौ जातौ। रावणोऽग्रेऽपिमेबन्धुः संप्रति कर्मतोबन्धुः हि अस्यो-पक्रमंविना ममेयंधीर्नस्यात्। एवं ध्यात्वा वैश्रवणः सर्वतः शस्त्रादि त्यक्त्वा तत्वनिष्ठः सन् स्वयमेव परिव्रज्यां समाददे। रावणोऽपि रचितांजलिस्तंनत्वा एव मुवाच। यत्त्वं मे ज्येष्ठो भ्राताऽसि तस्मादनुजन्मनो मे [1]आगः सहस्व। हे बान्धव! लंकायामपि त्वं निः शंको राज्यं कुरुष्व, वयत्वन्यत्र यास्यामः यतो मेदिनी इयत्येव-नास्ति। एवं तस्मिन् रावणे ब्रुवाणे सत्यपि तद्भवेपि शिवंगमी वैश्रवणो महात्मा प्रतिमास्थितः सन् किञ्चि-दपि नोचे। ततो वैश्रवणमनीहं ज्ञात्वा क्षमयित्वा प्रणम्य च लंकया सह तस्य पुष्पकं विमानमग्रहीत्। अथ जयलक्ष्मीलतापुष्पंपुष्पकमधिरुह्य सम्मेतशैलश्रृंगेऽर्हत्प्रतिमावन्दितुं ययौ। शैलात्प्रतिमाः वन्दित्वाऽवरोहतो रावण-स्य सेनाकलकलेनैको वनकुंजरो जगजे। अथ प्रतीहारः प्रहस्तः हे देव! असौ हस्तिरत्नं देवस्य यानता मर्हति इति दशानन मूचे। ततः पिंगोत्तुंगदंतं मधुपिंगललोचनं उदग्रकुंभशिखरं मदनिर्झरिणीगुरुम् सप्तहस्त-मुच्छ्रायं नवहस्तायतं तं क्रीडापूर्वं वशीकृत्य दशाननोऽध्यारुरोह। ततो रावण ऐरावणगजारूढशक्रलक्ष्मीं

---

१ अपराधम्। २ कमलस्य। श्चोरयि दृशौ यस्यास्ताम्

लंनाम्नीं सुतां कुंभकर्ण उपायत । ततो विभीषणो वैताढयदक्षिणश्रेण्णां ज्योतिष्पुरपुरेशितुर्वीरनाम्नो राज्ञो नन्दवतीदेवीकुक्षिसमुद्भवां [२]पंकजश्रीदस्युदृशं नामतः पंकजश्रियं कन्यां सुरस्त्रियमिव पर्यणैषीत् । अथ मन्दोदरी देवी देवेन्द्रसमतेजस मद्भुतविक्रम मिन्द्रजितं नामपुत्रं सुषुवे । कियत्यपिकालेगते सति मेघवन्नयनानंदं मेघवाहनं द्वितीयमपि नंदनं सुषुवे । ततः कुंभकर्णविभीषणौ तत्पितृवैर माकर्ण्य वैश्रवणाश्रितां लंकां सदोपद्रुवतुः । अथवैश्रवणो दूतेन सुमालिनमित्यवोचत् । हन्त, यदेतौ रावणावरजौ शिशू शाधि । वीरमानिनौ दुर्मदौ पाताललंकास्थावेतौ कूपोद्भवौ भेकाविव स्वान्यशक्ती न जानीतः । मत्तावेतौ जितकामितया छल कर्मणाऽस्मत्पुर्यामवस्कन्दं ददाते तथापि मया चिर मुपेक्षितौ । तस्माध्धे क्षुद्र ! इमौ चेन्न शिक्षयसि तत्त्वया सहैवैतौ मालिवर्त्मना नेष्यामि त्वमस्मद्बलं न वेत्सि किम् ! इत्युक्त्वा दूते विरते सति महामना रावणः क्रुद्धः सन्नभ्यधात् । रे ! यः परस्य करदः स एष वैश्रवणः कः । योऽन्यस्य शासनाल्लंकां शास्ति स एवंवदन् किं स्वात्मनोऽपिनलज्यते अहोतस्यमहत् धाष्टर्यम्। दूतोऽसीति त्वां न हन्मि त्वं याहीति दशमौलिनोक्तो दूतो वैश्रवणंगत्वायथातथमूचे । अथ ससोदरो दशकंठो दूतानुपदमेव ससैन्यो गरीयसामर्षेण लंकां प्रययौ । अग्रे गतेन तेन दूतेनाख्यातप्रवृत्तिको वैश्रवणः ससैन्यो युद्धाय लंकापुर्यानिर्ययौ । ततो महावातो वन्याभिवानिवारितम् प्रसरन् दशकंधरः क्षणात्तस्याऽक्षौहिणीमभांक्षीत् । ततो रावणेन वलेभग्नेसति स्वयंभग्नंमन्यः विध्यातक्रोधपावको वैश्रवण एवं दध्यौ । लूनपद्मस्यसरसः, भग्नदंतस्यदंतिनः, छिन्नशाखस्य शाखिनः ।

षट्सहस्रान् खेचरकन्यकाः क्षीरसरस्वति अप्सरस इव स अपश्यत् । अथ ता अपि पद्मिन्यो मार्तण्डमिव स्मेरलोचनपंकजा [1]नाथीयन्त्यः सानुरागास्तमीक्षाञ्चक्रे । सत्रोऽपि [2]मंदाक्षमपास्यामन्दस्मरपीडितास्ताः स्वयं त्वं नो भर्ता भवेति प्रार्थयाञ्चक्रिरे । तत्र सर्वश्री सुरसुन्दरोद्भवा पद्मावती, अन्या मनोवेगा बुधसुता अशोकलताभिधा, अन्या कनकसंध्ययोः सुता विद्युत्प्रभा, एवमन्या अपि जगत्प्रख्यातान्वयसंभवाः सरागाः कन्यकाः सर्वा अपि सरागेण दशग्रीवेण सह गान्धर्वेण विवाहेनोपयेमिरे । ततस्तत्सौविदास्तत्पितॄणामिदमेत्य व्यजिज्ञपन् । य देष कोऽपि यौष्माकीः कन्या अद्य परिणीय गच्छति । ततो दशकन्धरं जिघांसुः स्मरसुंदरः तत्पितृभिर्विद्याधरैः समं क्रुद्धः सन् रभसाऽन्वधावत् । प्रकृतिकातरा नवोढास्ता दशकंधरमूचुः हे स्वामिन् विमानंत्वरितं प्रेरय विलंबं माकुरु । अयं अमरसुंदर एकोऽपि विद्याधरेन्द्रोऽजय्यः किं पुनः कनकबुधप्रमुखैः परिवारितः । दशास्य स्तद्गिरा स्मित्वा हे सुंदरीः ! गरुडस्योरगैरिवामीभिः समं प्रमाजिं पश्यतेति व्याजहार । इतिब्रुवाणं तं रावणं महाशैलं घना इव शस्त्रदुर्दिनं कुर्वाणा विद्याधरमहाभटाः एयुः । तदावीर्यदारुणो रावणोऽस्त्रैरस्त्राणि खंडयित्वा [3]जिघांसुः प्रस्वापनेनास्त्रेण तानमोहयत् । दशाननः पशूनिव तान्नागपाशैरबध्नाच्च प्रेयसीभिः पितृभिक्षां याचितस्तान्मुमोच च । ततस्ते राजानः स्वपुरं ययु स्ताभिः समं रावणश्च मुदितैस्तैर्दत्तार्घ्यः स्वयंप्रभपुरं प्राप । अथ कुंभपुरेशस्य महोदरमहीपतेः सुरूपनयनादेवीकुक्षिजां नवयौवनां तडिन्मा-

---

१ नाथमिच्छन्त्य. । २ लज्जाम् । ३ अजिघांसु' हन्तु'।निच्छु'

प्रतिक्रिया भवति। कृती सुयक्षस्ततो विघ्नमायश्चित्तचिकीरिव रावणस्यकृतेतत्रैव स्वयंप्रभं नाम पुर मकृत। ततस्तौ पितरौ स्वसा वन्धवश्च तेषां तां विद्यासिद्धिं श्रुत्वा तत्र आययुः तैः प्रतिपत्तिरपिकृता। ते त्रयोऽपिभ्रातरः पित्रोर्दृशां सुधावृष्टिं वन्धूनामेकमुत्सवञ्च जनयन्तः सुखं तस्थुः। अथ दशास्यः षड्भिरुपवासै र्दिशांसाधन औपयिकं वरं चन्द्रहासमसिं साधयामास।

इतश्च दक्षिणश्रेणिभूषणे वैताढ्यगिरौ सुरसंगीतेपुरे मयोनामविद्याधरेश्वरोऽभूत्। तस्य गुणानां धाम हेमवती नाम गेहिन्यभूत् तत्कुक्षिजन्मा नाम्ना मंदोदरीति दुहिता चाभूत्। मयराजस्तां मंदोदरीं प्राप्त यौवनां प्रेक्ष्य तद्वरार्थी विद्याधरकुमाराणां गुणागुणान् व्यचिन्तयत्। मयनरेश्वरो यावदनुरूपं वरमपश्यन्वि-षादमग्नो वभूव तावत्तन्मंत्री एवमब्रवीत्। हे स्वामिन्। किंचिदपि माविषाद यदस्या उचितो वरो रत्नश्रवः सुतः दोष्मान् रूपवांश्च दशाननोस्ति। सुरैरप्यकंपितस्य सिद्धविद्यासहस्रस्यास्य तुल्यो विद्याधरेषु अद्रिषुमे-रोरिव कोऽपिनास्ति। एवमेतदिति प्रोच्य हर्षमहामनाः सवान्धवः ससैन्यः सान्तःपुरपरिच्छदः मयो मंदोदरी मुपादाय दशमौलये प्रदातुं पुरुपै र्ज्ञापयित्वा स्वं स्वयंप्रभपुरं ययौ। तत्र महाशयाः सुमालिप्रमुखा गोत्रवृद्धा दशास्याय मन्दोदरीं गृहीतुं प्रतिपेदिरे। अथ शुभे दिने वैवाहिकाः सुमाल्याद्यास्तेमयप्रभृतयश्च तयोर्विवाहंकारयामासुः। ततः कृतोद्वाहमहोत्सवा मयाद्याः स्वपुरं ययुः। रावणोऽपि तया रमणीवरया सह चिरं रेमे। अन्येद्युः क्रीडयारावणः पार्श्वावलंबिभि र्मेघमंडलैः उत्पक्षमिव मेघरवं गिरिंययौ। तत्र सरसि मज्जन्तीः

मपातयंश्च । तदा कुंभकर्णविभीषणौ[1] कोपात् किञ्चिचुक्षुभुः तत्र गुरुभक्ति हेतुः स्वल्पसत्वता[1] पुनर्नहेतुः । परमार्थज्ञोरावणस्तु तमनर्थमचिन्तयन् विशिष्टध्याननिष्ठो गिरीन्द्र इव निश्चलश्चाभूत् अथाम्बरे गीर्वाणानां साधु-साध्विति वाण्यभूत् । ते यक्षकिंकरा अपि चकिताः सन्तः द्रुतमपासर्पन् । तदाद्योतिताम्बराः सहस्रविद्या स्तववशवर्तिन्यः स्म इति उच्चकै र्जल्पन्त्यो दशास्यमभ्येयुः । ताश्चयथा प्रज्ञप्ता, रोहिणी, गौरी, गान्धारी, परा, नभःसंचारिणी, कामदायिनी, कामगामिनी, अणिमा, लधिमा, अक्षोभ्या, मनःस्तंभनकारिणी, सुविधाना, तपोरूपा. दहनी, विपुलोदरी, शुभप्रदा, रजोरूपा, दिनरात्रिविधायिनी, वज्रोदरी, समाकृष्टिः, अदर्शनी, अजरा, अमरा, अनलस्तंभनी, तोयस्तंभनी, गिरिदारणी, अवलोकनी, वह्निः, घोरा. धीरा, भुजङ्गिनी, वारिणी, भुवना, अवंध्या, दारुणी, मदनाशिनी, भास्करी, रूपसंपन्ना, रोशनी, विजया, जया, वर्धनी, मोचनी, वाराही, कुटिलाकृतिः, चित्तोद्भवकरी, शान्तिः, कौबेरी, वशकारिणी, योगेश्वरी, बलोत्सादा, चंडा, भीतिः, प्रधर्षिणी, दुर्निवारा, जगत्कंपकारिणी, भानुमालिनी, एवमाद्या महाविद्याः महात्मनो दशास्यस्य पुरा सुकृतकर्मणा स्वल्पैरेव दिनैः सिद्धाः । कुंभकर्णस्य च, संवृद्धिः. जृंभणी, सर्वाहारिणी, व्योमगामिनी, इन्द्राणी इति पंचविद्याः असिधन् । कुंभकर्णानुजन्मनो विभीषणस्य सिद्धार्थाः शत्रुदमनी, निर्व्याघाता, खगामिनी, इतिचतस्रो विद्याः संसिद्धाः । सः जंबुद्वीपपतिरपि रावणं क्षमयाभास, हि महतामपराद्धे प्रणिपातः

१ भगिनीम् ।

नानाप्तेन केनापि पाखंडिना मृत्युहेतवेयूयं पाखंडं शिक्षिताः । अतएतंध्यानदुराग्रहं मुक्त्वा अधुनापि यात.यात, ब्रूत, च कृपापरोऽहमपि वो वाञ्छितं यच्छामि । इत्युक्तेऽपि तान् तूष्णीकान् दृष्ट्वा क्रुद्धः स अब्रवीत् यत्प्रत्यक्षदेवं मां मुक्त्वा अन्यं किमपरं ध्यायेथेति । इति स क्रूरवाग्यक्ष स्तत्परिक्षोभहेतवे भ्रूसंज्ञया वा नमंतरान् किंकरान्समादिशत् । ततः किलकिलारावकारिणो बहुरूपिणः केऽपि गिरिशृंगाण्युत्पाटय तदग्रे चिक्षिपुः । केऽपि चन्दनद्रुमवत् सर्पीभूय तानवेष्टयन् । केऽपि सिंहीभूय तेषां पुरो दारुणं पूत्चक्रुः । केचित् अच्छमल्लष्टकव्याघ्रबिडालादिवपुर्धृतः बिभीषिकाञ्चक्रु स्तथापि नाक्षुभ्यन् हि । तदा कैकसीं रत्नश्रवसं जामिं चन्द्रणखां च विकृत्य बध्वा च तेषां पुरः सपदि चिक्षिपुः । ततस्ते मायामया रत्नश्रवःप्रभृतयस्तदा उदश्रुनयनाः करूणस्वरमेवं चक्रन्दुः । यद् युष्माकं पश्यतामपि वयं लुब्धकैस्तिर्यञ्च इव कैश्चिद्गतघृणैरेभि र्हन्यामहे । अतोहे । वत्स ! दशकंधर ! त्व मुत्तिष्ठोत्तिष्ठ, त्रायस्व, त्वं तादृगेकान्तभक्तः कथमस्मानुपेक्षसे । बालोऽपि यः स्वयंम् तं महाहारं कंठे विन्यधाः तस्यते बाहुबलं क्वाद्य गतमहंकारश्च क्व गतः । हे कुंभकर्ण ! त्वमपि नो वचः किं नाकर्णयसि, यदेवं दीनास्यानस्मानुदासीन इवेक्षसे । हे विभिषण ! त्वंक्षणमपि भक्तिविमुखो नाभवः। संप्रति दुष्टदैवेन परावर्तित इव किम् । एवं तेषु विलपत्स्वपि समाधितस्ते न चेलु स्ततस्तदग्रे यक्षकिंकरास्तन्मौलींश्चिच्छिदुः । तथापि ध्यानाधीनचेतसस्ते अग्रस्थमपि दारुणं तत्कर्मापश्यन्त इव मनागपि क्षोभं न ययुः । तदा ते यक्षकिंकरा रावणाग्रे तदनुजन्मनो मौली अपातयन् तयोरग्रेऽपि मायया दशग्रीवस्य मूर्धान

मुक्त्वा सानुजोऽपि सः पितरौ नमस्कृत्य ताभ्यांच मूर्ध्निचुम्बितो भीमारण्य मुपाययौ । [2]शयानशयुनिःश्वास-कपसानान्तिकद्रुमं दृप्तशार्दूललांगूलाच्छोटस्फोटितभूतलमस्तोकघूकघूत्कारघोरभूरुहगह्वरं नृत्यद्भुतपदाघात पतद्गिरितटोपलं दिविषदामप्यापदां पदं भयंकरं तदरण्यं ताभ्यां भ्रातृभ्यां सहितः स विवेश । ततस्ते तपस्विवत् मूर्ध्नि जटामुकुटान्धारयन्तः श्वेतांशुकभृतो नासावंशाग्रन्यस्तदृष्टयोऽक्षसूत्रधरास्त्रयोऽपि यामद्वितयेन सर्वकामप्रदामष्टाक्षरीं विद्या मसाधयन् । यस्य मंत्रस्य दशकोटिसहस्राणि जपः फलप्रद स्तंषोडशाक्षरं मंत्रं जपितुमारेभिरे । तदा तत्र क्रीडनायायातः सान्तःपुरोजंबुद्वीपपतिः अनादृतोनाम सुरः तान्ददर्श । स यक्षाधिपस्तु तेषां विद्यासाधनविघ्नाय अनुकूलोपसर्गाय स्वयोषितः प्रजिधाय । तेषां क्षोभार्थं मायातास्तास्तु विस्मृतस्वामिशासनाः सत्योऽतिसुंदरै स्तद्रूपैः स्वयमेव क्षोभं ययुः । निर्विकारान्स्थिराकारां स्तूष्णीकांस्तान वलोक्याकृत्रिमस्मरावेशविवशास्ता बभाषिरे, भो भो ध्यानजडाः यूयमग्रतो यत्नतः पश्यतयद्देव्योऽपि वशीभूता अतःपरा का वः सिद्धिः । विद्यासिद्धये अमुना यत्नेन किं कृतम्, अथवा विद्याभिः किंकरिष्यथ वयं देव्यो वः सिद्धाः । अतः सुरदेश्या यूयमस्माभिः सह त्रयाणामपि जगतां रम्यरम्यप्रदेशेषु यथारुचि स्वैरं रमध्वम् । इति सकामं जल्पन्त्यस्ता, स्तेष्वनल्पधैर्येषु विलक्षा जज्ञिरे यक्षा अपि विलक्षा जज्ञिरे हि नैकहस्ता तालिका[1] भवति। ततो जंबुद्वीपपतिस्तानब्रवीत् यन्मुग्धैर्युष्माभिः कष्टचेष्टितं किमेतदारब्धम् । अहंतु मन्ये केनापिदुरात्म-

---

१ एकहस्तवलेन २ अजगरः

राक्षसींनाम विद्याश्च रक्षोवंशादिकंदाय पूर्वजन्मात्मजन्मने मेघवाहनभूभुजे ददौ ॥ अरातिभिः [२]तस्यामाम्नायराजधान्यां हृतायां सत्यां ते पितामहः पिता च परासुवत्तिष्ठति । अरक्षके क्षेत्रे उक्षाण इव, तस्यामरातयः सदा स्वैरं चरन्ति इति ते पितु र्जीवच्छल्यं वर्तते । अतो हे 'वत्स' मंदभाग्यया मयका तत्र गत्वा पैतामहासने आसीनः सानुजस्त्वं कदानु द्रक्ष्यसे । लंकालुंटाकांस्त्वत्कारायां नियंत्रितान् विलोक्याहम् पुत्रवतीषु शिरोमणिः कदानु भविष्यामि । हे वत्स । एवं मरौ गता मरालीव खपुष्पावचयोपमैर्मनोरथै रहरहः क्षामीमवामि । अथ तदा भीषणाक्षो विभीषण एवमवदत् हे मातः ? विषादेनालम् त्वंसुतविक्रमंनवेत्सि । दोष्मत आर्यस्य दशकंधरस्य पुरस्तात् हे देवि ! इन्द्रः कः वैश्रवणश्चकः । तथाचान्ये विद्याधरा अपि के नाम । प्रसुप्तेन सिंहेनेभगर्जितमिवाज्ञातपूर्वेण दशास्येन द्विषामिदं लंकाराज्यं सोढम् । आर्यो दशग्रीव आस्ताम्, अतिभटानपि परानयमार्यः कुंभकर्णोऽपि निःशेषंकर्तुमीश्वरः । आर्यः कुंभकर्णोप्यस्तु तदादेशात् हे मातः ! पवेः पात इवाकांडे द्विषां संहारमहं करोमि ! अथरावणोऽपि दशनैरधरं दशन् एवमूचे हे अंब । त्वं वज्रकठिनासि, यच्चिरं दुःशल्यमधाः । शस्त्राशस्त्रि कथाप्यस्तु, हि वस्तुतस्ते शत्रवो ममतृणम् । अहंतु तान्द्विपः इन्द्रादिकानेकबाहुस्थाम्नापि हन्याम् । अहं यद्यपि परान्निर्जेतुं दोर्वीर्येणाप्यलमस्मि तथापि क्रमागता विद्याशक्तिः प्रयोक्तव्या हि । तत्सानुजोऽहं निरवद्यास्ताविद्याः समन्ततः साधयिष्यामि, तस्मात्तत्सिध्यै अनुजानीहि । एव-

२ आम्नायेनपारपर्येणागतायाम् ३ नृपाः

विभीषणं पुत्रं नखत्वेन नान्माचन्द्रणखां लोके शूर्पणखामिति कन्यां शशांकस्वप्नसूचितं नाम्ना चाऽसूत। साग्रषोडशधनुःसमुन्नता स्तेत्रयोऽपि सहोदराः आद्यवयसः गतभयाः सन्तः अनुरूपया क्रीडया यथासुखं रेमिरे॥

इत्याचार्ये हेमचन्द्रविरचितत्रिषष्टि शलाकापुरुषचरिते महाकाव्येसप्तमपर्वणिगद्यरचनायां राक्षसवंशवानर वंशोत्पत्तिरावणजन्मवर्णनो नाम प्रथमः सर्गः

---

## अथ द्वितीयःसर्गः

अथान्येद्युर्दशमुखः सानुजः अंबरे विमानारूढमायान्तं महर्द्धवैश्रवणंनृपं अपश्यत्। ततः कोऽयमिति दशमुखेनानुयुक्ता माता, कौशिकायाः मम ज्येष्ठभगिन्याः एष नंदन इत्यब्रवीत्। अयं 'विश्रवोनामधेयस्यवि-द्याधरपतेः सुतः तथा सर्वविधाधरेन्द्रस्येन्द्रस्यायमग्रसुभटः। इन्द्रः 'भवत्पितामहज्येष्ठं मालिनं रणे हत्वा सराक्षसद्वीपां लंकां नाम्नीं नः पुरी मस्मै ददौ। ततः प्रभृति लंकायाः प्राप्त्यै कृतमनोरथः ते पिता इहास्ति देवस्त द्विपि अद:युक्तम्। ततो भीमो राक्षसेन्द्रः विद्विषां प्रतीकाराय पातालंलंकयासद सराक्षसद्वीपां लंकां

'१ भवति तामवत्य व्यव्ऽआसता

दा निशि कैकसी स्वप्ने स्वमुखे विशन्तं कुंभिकुंभस्थलीभेदमसक्तं सिंह मैक्षत। प्रगे तया ख्यातं तं स्वप्नं रत्नश्रवाः व्याख्यात् ते विश्वशौडीरः महाभुजः सूनुर्भविष्यतीति। ततः सा रत्नश्रवःप्रिया, तस्मात्स्वप्नाद-नंतरं चैत्यपूजां चकार महासारं गर्भंश्च बभार। तस्यगर्भस्य संभूतेः प्रभृति कैकस्या वाणी अतिनिष्ठुरावभूव, अंगं च जितश्रमं दृढश्चाभवत्। दर्पणे विद्यमानेऽपि सा खङ्गे आननमपश्यत् सुरराज्येऽपि अशंकितमाज्ञां दातु मभिप्रैषीत्। हेतुं विनाऽपि सा हुंकारमुखरं मुखं दधौ गुरुष्वपि कथंचिन्मूर्धान नानामयच्च। विद्विषां मूर्धसु चिरंपादंदातु मियेष इत्यादि दारुणान् भावान् गर्भप्रभावतः सा दधे। ततस्तया साधिकद्वादशसमासहस्रायुः प्रतिपक्षासनोत्कम्पंकुर्वाण स्तनयोऽजन्यत। अथ सः अनल्पौजा उद्दामपादकोकनदः उत्तानशयः महींकम्पयन् सूतिकातल्पे उल्लत्। भीमेन्द्रेणपुरादत्तं नवमाणिक्यनिर्मितं हारं पार्श्वस्थितकरंडकात् पाणिना चकर्ष। स बालः सहजचापलात् तं हारं कंठे चिक्षेप तेन स्वपरिच्छदा कैकसी विस्मयं जगाम। सा रत्नश्रवसे चख्यौ यः पुरा राक्षसेन्द्रेण त्वत्पूर्वजन्मने मेघवाहनराजाय दत्तः अद्ययावत् देवतावत् तवपूर्वजै र्योऽपूजि यश्चान्यैर्वोढुं न शक्यः यश्चनागसहस्रेण निधानमिव रक्ष्यते स असौ हारः तवशिशुनाऽकृष्य कंठेऽक्षेपि। ततो रत्नश्रवा तस्यनामधेयं नवमाणिक्यसंक्रान्तमुखत्वात् तत्क्षणम् दशमुख इतिव्यधात्। चैत्यवंदनहेतवे मेरौ गतवता सुमालिना तातेन पृष्टः कोऽपि चतुर्ज्ञानभृदृषिः त्वत्पूर्वजन्मनां नवमाणिक्यं हारं योवोढा सोऽर्धचक्री भविष्यतीत्या ख्यत्। अनन्तरं कैकसी भानुस्वप्नेनसूचित कुंभकर्णापराभिधं भानुकर्ण इतिसूनुं सुषुवे। ततः साकैकसी पुनः चन्द्रतुल्य-

ढुढौके । स इन्द्रो मालिना सह पुनर्लोकपालप्रभृतयो भटाः सुमालिना सार्धं योद्धु मारेभिरे । तेषां प्राण-संशयकृत् युद्धं चिरंमिथोऽभूत् हि जयाभिमायिणां प्राणाः तृणसंनिभाः संति । अथनिर्दंभरण इन्द्रः, अंबुदः विद्युता गोधामिव दंभोलिना वीर्यमानिनं मालिनमवधीत् । वालिनि हते सति ते वानरा राक्षसाश्च सुमाल्य-धिष्ठिता वित्रेसुः पातालवर्तिनीं लंकाश्रेयुः । तत इन्द्रः सद्यः कौशिकाकुक्षिजन्मने विश्रवःसूनवे वैश्रवणाय लंकामदात् स्वश्च पुरं ययौ । पाताललंकायां पुर्यां तिष्ठतः सुमालिनः प्रीतिमत्यां सधर्मिण्यां रत्नश्रवाः सुतो जज्ञे । अथान्यदा सम्प्राप्तयौवनोरत्नश्रवाः विद्यासाधनहेतवे रम्यं कुसुमोद्यानं ययौ । तत्रैकत्र रहःस्थाने सः नासाग्रन्यस्तदृक् आलेखित इवस्थिरः अक्षमालाधररतस्थौ । इत्थश्च तस्थुषेतस्मै कापि अनवद्यांगी विद्याधरी कुमारी पितृशासनात् समीपतस्तस्थौ । तदानीश्च नाम्ना मानवसुंदरी महाविद्या तव सिद्धास्मि इत्युच्चैः रत्न श्रवसमभ्यधात् । सिद्धविद्यः रत्नश्रवाः जपमालां मुमोच पुरस्थां तां विद्याधरकुमारीश्च ददर्श । इह केन हेतुना अगाः वात्वं कस्यासि कावासीति रत्नश्रवास्तां बभाषे. साप्येवं. मत्यभाषत । अनेककौतुकागारे कौतुकमंगलेपुरे विश्रुतः व्योमविन्दुर्नामा विद्याधरपति रस्ति । तस्य ज्यायसी पुत्री. मे स्वसा च कौशिका नामास्ति सातु यक्षपुरेशेन विश्रवसा राज्ञा ऊढास्ति । तस्याः वैश्रवणोनाम नयी तनयो बभूव योऽधुना शक्र शासना लंकायां राज्यं करोति । अहंतु कैकसी नामा कौशिकायाः कनीयसी नैमित्तिकगिरा पित्रा तुभ्यं दत्ता इहागमम् । आहूतबन्धुः सुमालिसूः तत्रैव तामुपयेमे । पुष्पान्तकं पुरंन्यस्य तयासहक्रीडंश्चास्थात् । अन्य-

धरेन्द्रं गन्धे[5]भोऽन्यमिभमिव मालिनूपतिर्नसेहे। अतुलविक्रमै र्भ्रातृभिः मंत्रिभि र्मित्रैश्च सहितः स माली. इन्द्रयुद्धाय चचाल हि [6]दोष्मताम् अन्योमंत्रोन ॥ अन्येऽपि सवानरा रक्षोवीराः सिंहद्वीपाश्वमहिषवराह वृषभादिभिर्यानैराकाशे प्रचेलुः, तदानीम् खराः फेरवः सारसाश्च दक्षिणस्थाअपि रिष्टाफले तेषां वामत्य-धारिणः ववाशिरे। अन्यान्यपि दुर्निमित्तान्यपशकुनानि अभवन्। तदासुमेधसा सुमालिना प्रयाणाच्च माली अवारि। दोर्वलगर्वितो माली तु तस्य वचोऽवज्ञाय वैताढ्यगिरौ जगाम। आजये इन्द्रमाह्वास्त च ॥ ऐरावणा रूढः इन्द्रोऽपि पाणिना पविमुल्लालयन् नैगमेपिप्रमुखैः सेनानाथैः सोमाद्यैर्लोकपालै र्विविधायुधधारिभि श्चान्यै र्विद्याधरभटैः सहितो रणक्षेत्रमुपाययौ। अंवरे अंभोदानामिव तडिन्निभास्त्रभीष्माणां इन्द्रराक्षससैन्यानां परस्परं संफेटोऽभूत्। तदानीम् भूभृतांशिखराणीव क्वापि स्यन्दनानि पेतुः। वातोध्धूता अंबुदा इव क्वापि गजाः पलायन्त। क्वचिद्राहुशंकाप्रदा भटानां मूर्धानः पेतुः। क्वापि सन्दानिता इव कृत्तैकपादाश्चेलुः। इन्द्रसैन्येनामर्षान्मालिसैन्यमभज्यत। यतो वलवानपि करी केसरिणा प्राप्तः किंकुर्यात्॥ अथ रक्षःपतिर्माली सुमालिप्रमुखैर्वृतः सयूथो वन्येभ इव ससंरंभोऽभ्यधावत्। वीर्यदविणेश्वरः सः वारिदः करकैरिव गदामुद्गर नाराचैः इन्द्रचमू मुपदुद्राव। सलोकपालः सानीकः सानीकपति रुच्चैरिन्द्रोऽपि ऐरावणारूढा रणकर्मणे

---

१ सप्त सैन्यानि, २ सप्तशेन।पतीन्, ३ पत्तिसैन्यस्य, ४ दक्षिणस्याम्, ५ मदोन्मत्तो हस्ती अन्यगजमिव
६ भुजवलशालिनाम्

रजा नाम नृपोऽभवत् ।

इतश्च वैताढ्यगिरौ रथनूपुरे नगरे अशनिवेगांगजन्मनः सहस्रारनरेन्द्रस्य चित्रसुंदर्याभार्यायाः गर्भे कश्चित्सुरः प्रच्युत्य सुस्वप्नमंगलेद्रष्टे सति सद्योऽवातरत् ॥ कतिचित्कालेगते तस्याः शक्रसंभोगलक्षणः दुष्पूरोदुर्वचा देहदौर्बल्यकारणश्च दोहदः अभूत् । सा निर्बन्धेन पृष्टा सती लज्जावनमदानना कथंचिदपि तं दोहदं पत्ये कथयामास । तदा सहस्रारो विद्यया सहस्राक्षरूपं निर्माय तया शक्र इति ज्ञातः सन्. दोहदं पूरयामास । तत इन्द्रसंभोगदोहदात्. समयेसति इन्द्र इत्युक्तनामानं अनूनभुजविक्रमं सूनुमसूत । तत सहस्रारः संप्राप्तयौवनाय विद्यादोर्वीर्यशालिने अस्मै सूनवे राज्यं दत्वा स्वयंधर्मरतोऽभवत् । इन्द्रदोहदजन्मतः इन्द्रंमन्यः सः समभूत् सर्वान्विद्याधरनरेश्वरान् साधयामास च ॥ चतुरो दिग्पालान्, [1]सप्तानीकानि, [2]सप्तानीकपान्, तिस्रः परिषदः, वज्रमस्त्रम्, ऐरावणं द्वीपम्, रंभादिका वारवधूः बृहस्पतिनामानं मंत्रिणं [3]पत्त्यनीकस्य नायकम् नैगमेषिसमाख्यं चेति सुत्रामसदृशश्चक्रे ॥ एवमिन्द्रपरिवाराभिधाधरै विंधाधरै रहमिन्द्र इति धियाऽखंडं राज्यमन्वशात् । आदित्यकीर्तिकुक्षिसमुद्भवः माकरध्वजिः सोमादिग्पालः ज्योतिः पुरेश्वरः प्राच्यां दिग्पालोऽभूत् । वरुणामेघरथयोः पुत्रः मेघपुरेश्वरः वरुणोनाम विद्याधरः पश्चिमदिग्पतिर्बभूव । सूरकनकावल्योस्तनयः काञ्चनपुरेश्वरः कुबेर इति विख्यातः उत्तरदिग्पतिरभूत् । कालाग्निश्रीप्रभासूनुः किष्किन्धनगराधिपः अभिधानतो यम इति. अपाच्यांदिशि दिग्पालोऽभूत् । अहमिन्द्र इतिमानिनं तं विद्या-

यतुः ॥ ततः अत्यमर्पणो वीरः अशनिवेगः परान्. तृणवद्गणयन् सर्वाभिसारेण योध्धुं प्रवृत्ते ॥ ततः महाभुजो रोपान्धोऽशनिवेगः आजिमुखे. विजयसिंहेभसिंहस्य. अन्धकस्य शिरः अच्छिदत् ॥ ततः सुदैत्यानि वानरसैन्यानि पवनास्फालितांभोदपटलानीव दिशोदिशम् दुद्रुवुः ॥ ततोऽपसर्पणमपि क्वाप्युपायः इतिमत्वा सान्तःपुरपरीवारौ लंकाकिष्किन्धिनायकौ पाताललंकां ययतुः ॥ अथ रथनूपुरपार्थिवः द्वीप आराधरमिव. सुतहंतारन्निहत्य प्रशान्तकोपः समभूत् ॥ राजस्थापनाचार्यः सः वैरिनिर्घातान्मुदितः निर्घातं नामखेचरं लंकाराज्येन्यवेशयत् ॥ ततः अमरेन्द्रः अमरावत्यामिव अशनिर्नृपः ततोनिवृत्य वैताढये रथनूपुरे स्वपुरे. अगात् ॥ अन्येद्यु र्जातसंवेगः अशनिर्नृपः सहस्रारे सुते राज्यंन्यस्य स्वयं दीक्षामुपाददे ॥ पाताळ लंकायां पुर्यां सुकेशस्यापि इन्द्राण्यां भार्यायां माली, सुमाली, माल्यवानिति त्रयः सूनवः अभवन् किष्किन्धेः श्रीमालायां भार्यायां नाम्ना आदित्यरजाः रक्षारजाश्चेति महाभुजौ द्वावात्मजौ वभूवतुः । अपरेद्युश्च किष्किन्धिः सुमेरौ शाश्वतार्हताम् यात्रांकृत्वानिवृत्तः सन् मधुपर्वतमपश्यत् । पराक्रमी सः [1]तस्योपरि किष्किन्धपुरं निधाय कैलासे यक्षराडिव सपरीवारोन्यवासीत् । सुकेशस्य वीर्यशालिनस्त्रयोऽपिपुत्रा राज्यमरिभिर्हृतं श्रुत्वा अग्नय इव क्रुधाजज्वलुः ततस्ते त्रयोऽपि पुत्राः लंकायां समागत्य निर्घातं खेचरं रणे न्यगृण्हन् हि चिरादपि वीरैः कृतंवैरं मृत्यवे भवति । ततश्च लंकायां पुर्यां राजा माली अभवत् किष्किन्धायां तु आदित्य-

---

१ मधुपर्वतस्य.

विद्याधरपुंगवान् श्रीमालाद्रष्टच्यापस्पर्श। सा क्रमेण सर्वानन्यविद्याधरानतिक्रम्य जान्हवी पयोनिधाविव किष्किन्धौगत्वाऽवतस्थे। श्रीमाला तस्यकंठे अनघं भविष्यद्दोर्लता[^1]श्लेपसन्यंकारमिव वरमालिकां निचिक्षेप। अथ सिंहवत् मियसाहसो विजयसिंहो भ्रुकुटीभीपणमुखः सन्नुच्चैः सरोपमिदमभ्यधात्। सदादुर्नयकारिण एते दस्यवः पुरापि सुराज्यादिव वैताढ्यराज्यधानीतो निर्वासिताः। तद्कुलपांसनाः दुर्नीताः अमी केनेहानीताः, तदद्यापुनरावृत्यैएतान् पशूनिव निहन्मि। यमोपमो महावीर्यः सः आयुधमुत्क्षिपन्नुत्थाय किष्किधिनृपवधाय चचाल। किष्किधितः सुकेशाद्या विजयसिंहतः अन्ये पौरुषदुर्धराः विद्याधराः रणायोत्तस्थिरे। तदानीम् दंतादंति भक्तेभैरुत्फुर्किगीकृताभ्वरः कुंताकुंति मिलत्सादीः शराशरि मिलद्रथी खड्गखड्गापतत्पत्तिरसृक्थं किलभूतलः कल्पान्त इव दारुणो रणः प्रवृत्ते। अथनचिरंयुद्ध्वा किष्किन्ध्यवरजोऽन्धकः तरोःफलवत् विजयसिंहस्य शिरो बाणेनापातयत्। विजयसिंहगृह्या विद्याधरेभ्वराल्लेमुः यतोनिर्नाथानां शौर्यं कुतः स्यात्, अनायकं सैन्यंहतं भवति हि॥ ततः सपरिच्छदः स किष्किन्धः अंगिनीं जयश्रियमिव, श्रीमालां गृहीत्वा किष्किन्धामुत्पत्य ययौ॥ अथाकांडाशनिपातवत् पुत्रवधोदन्तं श्रुत्वा अशनिवेगो वेगेनाधिकिष्किधा पर्वतमगात्॥ [^1]द्वीपवतीपूरः अंबुभिः महाद्वीपस्थलीमिव स अशनिवेगः अनेकशः सैन्यैः किष्किधां नगरी मवेष्टयत्॥ गुहायाः पंचास्याविव. सहान्धकौ योध्धुकामौ सुकेशकिष्किन्धिनामकौवीरौ किष्किन्धाया निरी-

---

[^1]: नदीपुर.

विंशेषतोवन्दनीयः। अथ स तत्र तडित्केशभटैर्हन्यमानान् प्लवंगमानैक्षिष्ट कोपेन च सद्योऽज्वलच्च। तदाऽस अनेकशः प्लवंगमरूपाणि विकृत्यतरुशीलाजालै र्वर्षन् राक्षसानुपदुद्राव। तडित्केश स्तं दिव्यप्रयोगंज्ञात्वा उच्चकैरानर्च। त्वंकोऽसि किमर्थमुपद्रवसीति उवाच च। तत सः अब्धिकुमारोऽपि तदर्चया शान्तकोपः सन् स्ववधं नमस्कारप्रभावं च तम् शशंस। लंकेशस्तेन देवेनसहैव तं मुनिमुपेत्य हे प्रभो! ममकपिना सहको वैरहेतुरित्यपृच्छत्। मुनिरप्येवमाचख्यौ त्वं पुरा श्रावस्त्यां दत्तोनाम मंत्रिनंदनोऽभूः। एष काश्यां लुब्धकोऽभूत्। अन्येद्युस्त्वं उपात्तपरिव्रज्यो वाराणसीमगाः। अनेनद्रष्टः अपशकुनमितिमत्वाऽऽहत्यनिपातितः। ततस्त्वं माहेन्द्रकल्पेदेवोऽभूः ततश्चुत्वा इहाभवः एषोऽपिनरक भ्रान्त्वा कपिरभूत् तद्वैरकारणम्। असामान्योपकारिणं तं महासाधुं वंदित्वा तं लंकेशश्चानुज्ञाप्य स देवोऽथतिरोदधे॥ तडित्केशस्तदाकर्ण्य सुकेशे तनये निजंराज्यंन्यस्य प्रवव्राज परंपदश्चवव्राज। धनोदधिरथोपि किष्किन्धिनाम्नि पुत्रे किष्किन्धाराज्यमाधाय दीक्षां चादाय निर्वृतिमियाय। इतश्चवैताढयगिरौ रथनूपुरे नगरे तदानीम् अशनिवेगो नाम विद्याधरेश्वरोऽभूत्। अपरौ तद्दोर्दण्डाविव विजयसिंह इतिजयीसूनुः द्वितीयो विद्युद्वेगोनामा च सूनुरभवत्। तत्रैवगिरौ आदित्यपुरे नगरे मन्दिरमालीनामाविद्याधरनृपोऽभूत्। तस्यश्रीमालेतिकन्यका चाऽभूत्। तस्याः स्वयंवरे तेनआहूता विद्याधराः अधिविमानंज्योतिंषीवाधिमंचमुपाविशन्। [1]कुल्या अंभसावृक्षानिव प्रतिहार्याकथ्यमानान् तान्

---

[1] क्षुद्र नदी.

तेनान्येऽपि तान् सच्चक्रुर्यथाराजा तथा प्रजाः। तदा प्रभृति कौतुकात्ते विद्याधरास्तान्वानरान् ध्वजच्छत्रादि चिन्हेषु चित्रे लेप्ये च चक्रुः। तत्स्था विद्याधरा अपि वानरद्वीपराज्येन वानरै र्लक्ष्मभिश्च वानरा इतिकीर्त्यन्ते। श्रीकंठस्य नामतो वज्रकंठः सुतो जज्ञे स सुतो रणलीलासु सोत्कंठः सर्वत्राकुंठविक्रमश्चाभवत्, अथनिजंसभास्थानमास्थितः श्रीकंठः शाश्वतार्हतां यात्रार्थं गच्छतोऽमरानद्राक्षीत्। अथभक्तिसंयुतः सः श्रीकंठः मार्गयायिनां वाजिनां ग्रामपङ्क्तस्थो वाजीव तेषां दिविषदामन्वचालीत्। गच्छ तस्तस्यविमानं मार्गवर्तिनि पर्वते तरंगिणीवेग इव मानुषोत्तरे स्खलितम्। तदा स श्रीकंठः प्राग्जन्मनि मयाल्पं तपस्तेपे तेन नंदीश्वरार्हद्यात्रायांमे मनोरथो नापूर्यत। इतिनिर्वेदमापन्नः सद्यः प्राव्राजीत् तीव्रतरं तपस्तप्त्वा सिद्धिक्षेत्रमियाय च। श्रीकंठत आरभ्य वज्रकंठादिष्वनेकशोऽतीतेषु राजसु मुनिसुव्रततीर्थे धनोद्‌धिरथो नाम नृपोऽभूत्॥ तदालंकापुर्यामपि नाम्नातडित्केश इतिराक्षसेश्वरः समभवत् तयोर्नृपयोः स्नेहो जज्ञे अपरेद्युस्तडित्केशः सान्तःपुरवधूजनः नंदननाम्नि वरोद्याने क्रीडितुं ययौ। तत्रतडित्केशे क्रीडासक्तेसति कोपि कपिर्द्रुमादुत्तीर्य नखैस्तडित्केशमहिष्याः श्रीचन्द्राया स्तनौ विलिलेख। रोपोच्छ्वसितकेशस्तडित्केशः एकेनबाणेन तं प्लवंगमं जघान हि स्त्रीपराभवोऽसह्यः। बाणप्रहारविधुरः प्लवंगमः किञ्चिद्गत्वा एकस्य प्रतिमास्थस्य साधोरग्रेपपात। स साधुः परलोकाध्वशंबलम् नमस्कारं तस्मै अदात् सः प्लवंगमोऽपि मृत्वा तत्प्रभावेण अब्धिकुमारोऽवधिना प्राग्जन्मज्ञात्वाऽभ्येत्यतंमुनि मवंदिष्ट यतः सतां साधुर्वन्दनीयः उपकारीपुन

पुष्पोत्तरोऽपिसन्नद्धान्वधावत् । श्रीकंठोऽपि द्रुतं कीर्तिं धवलं शरणंययौ अखिलं पद्माहरणवृत्तान्तं च कथयामास॥ पुष्पोत्तरोऽपि युगान्तेअब्धिराशाः प्रच्छादयन्सागर इव निरंतरैः सैन्यै राशाः प्रच्छादयंस्तत्रप्राप । तदाकीर्ति धवलः तेनपुष्पोत्तरमभाषत यदविमृश्य क्रियमाणो वः साम्परायिकः प्रयासो मुधा। हि कन्या कस्मैच-नाप्यवश्यं दातव्या, यदि तयास्वयंवृतः स्यादयं श्रीकंठस्तदासौ नापराध्यति ॥ तद् स्वदुहितुर्मनोबुध्वा योध्धुं नयुज्यते । वधूवरोद्वाहकृत्यमेवकर्तुं साम्प्रतम् । पद्मापि दूतीमुखेन तदेवेति व्यजिज्ञपदयंमयास्वयंवृतः अमुनापुनरहं न हृता । पुष्पोत्तर इतिश्रुत्वाक्षणाच्छान्तकोपोऽभवत् । विचारचतुराणांहि कोपः प्रायः सुप्रशमः खलु ॥ ततः पुष्पोत्तरः महीयसा उत्सवेन तत्रैव श्रीकंठपद्मयोर्विवाहंकृत्वा निजंपुरंययौ ॥ कीर्ति-धवलः श्रीकंठमब्रवीत् यदत्रैवतिष्ठेति । यतो वैताढयशैलेऽधुना युष्माकं भूयांसो विद्विषः सन्ति ॥ तथास्यैव राक्षसद्वीपस्यादूरेण मरुद्दिशि योजनत्रिशतीमितो वानरद्वीपोविद्यते । तथैव हे सखे ! बर्बलकूलसिंहलप्रमुखा अन्येऽपिमदीया द्वीपा भ्रष्टस्वःखंडसंनिभाः सन्ति ॥ तेषामेकत्रकुत्रापि राजधानीं विधायाविदूरत्वान्मया-सहाविमुक्तः सुखमास्स्व ॥ यद्यपि ते द्विषद्भयो मनागपि भयंनास्ति तथाप्यस्मद्विप्रयोगभयाद् गन्तुंनार्हसि इति तेन सस्नेहमुक्तः श्रीकंठ स्तद्वियोगातिकातरः वानरद्वीपनिवासं प्रत्यपद्यत ॥ कीर्तिधवलोऽधित्रानरद्वीपं विष्कि-न्धाद्रौ विष्किन्धां नाम महापुरीं कृत्वा तंश्रीकंठं तद्राज्ये न्यधात् । श्रीकंठः पृथिवीपति स्तत्र महादेहान् फला-शिनो भ्राम्यतो रम्यान् भूयसोवानरानद्राक्षीत् । ततः सश्रीकंठोऽमारिमाघोष्य तेषामन्नपानाद्यदापयत्

## ॥ अथत्रिषष्टि शलाकाचरित्रे सप्तमपर्वणि ॥

अथ श्री हरिवंशे चन्द्रसमानस्याञ्जनसमानकान्तेः श्रीसुव्रतस्वामिनस्तीर्थे सञ्जातजन्मनो वसुदेवस्य पद्मस्य नारायणस्य विष्णो स्तथा प्रतिविष्णो रावणस्य चरितं कीर्त्यते । अत्र भरते रक्षोद्वीपे अजितेजिने विहरति सति रक्षोवंशकंदः घनवाहनो लंकायामासीत् । सुधीः सः घनवाहनः स्वसूनवे महारक्षसे राज्यं दत्वा अजितस्वामिपादान्ते परिव्रज्य शिवंययौ । स महारक्षा अपि चिरं राज्यं भुक्त्वा स्वनंदने देवरक्षसि तद्राज्यं संस्थाप्य प्रव्रज्य शिवं ययौ । एवमसंख्येषु रक्षोद्वीपाधिपेषु शिवंगतेषु श्रेयांसस्वामिनस्तीर्थे कीर्तिधवलोनाम राक्षसेश्वरोऽभूत् । तदावैताढ्यगिरौ मेघपुराभिधेनगरे विश्रुतोऽतीन्द्रोनाम विद्याधरनरेन्द्रोऽभूत् । तस्य श्रीमत्यांकान्तायां श्रीकंठोनामनंदनः, रूपतः देवीव देवीतिनाम्ना दुहिता चाभूत् । रत्नपुराधिपः पुष्पोत्तरोनाम विद्याधरेन्द्रः स्वसूनोः पद्मोत्तरस्यार्थे चारुलोचनां तामतीन्द्रदुहितरं ययाचे । अतीन्द्रस्तु श्रीमतेगुणिनेऽप्यस्मै तांनददौ, किन्तुदैवनियोगतः कीर्तिधवलाय तां ददौ । ततो मानदः पुष्पोत्तरोनृपस्तां कीर्तिधवलेनोढांश्रुत्वा अतीन्द्रेण श्रीकंठेन च समं वैरायतेस्म । एकदामेरुतोनिवृत्तेन श्रीकंठेन रूपतः पद्मेव पद्मानाम्नी पुष्पोत्तरस्य दुहिताव्युदैक्ष्यत । तदानींसद्यः श्रीकंठपद्मयोः कामविकाराब्धिसमुल्लासनदुर्दिनम्, अन्योन्यमनुरागोऽभूत् । सा कुमारीतुस्वयंवरस्रजक्षिपन्तीव स्निग्धया दृशा श्रीकंठायोन्मुखाम्बुजा तिष्ठतेस्म । स्मरातुरः श्रीकंठ स्तदभिप्रायं विज्ञाय तामादाय व्योममार्गेण द्रुतंगंतुं प्रवृत्ते। तद्दृष्ट्वाचेटिकाः कोऽपिपुष्पांहरतीति पूत्कुर्वंतिस्म तेनसबलः

## अथ किञ्चिदत्र प्रास्ताविकम्

सत्स्वेप्वनेकेषु प्राचीनाचार्यविरचितेषु प्रबन्धेषु निर्दुष्टतया सहृदयहृदयाल्हादकतया भव्यजनविबोधनक्षमतया श्रीकलिकालसर्वज्ञेतिविरुदधारिभिः श्रीहेमचन्द्राचार्यैं विंरचिताः प्रबन्धा एव सर्वातिशायित्वेनाद्यावधि सर्वैः पंडितप्रवरैः समादृता इत्यत्र न किञ्चिदप्यतिशयं वचः ।

महात्मनामेतेषामितिवृत्तं कुमारपालचरित्रादौ विस्तरेणाभिहितमस्तीति नात्रोल्लिख्यते ।

आचार्यविरचितत्रिषष्टिशलाकापूरुषचरिते सप्तमपर्वणि रामचन्द्रादिचरितानि ग्रथितानि सन्ति तेषाश्च सुश्लोकबद्धतया केवलं विदुषामेवोपयोगितया विरलप्रचारतामाकलय्य स्वल्पव्युत्पत्तिमतामपि प्रबोधायास्खलितप्रचाराय च जैनधर्ममंडननिष्कलंकचारित्र्यरत्नभिभूषित पन्यास श्री मोतीविजयमहाराजसदुपदेशतो धर्मानुरागिभिः कैश्चिच्छ्रावकश्रेष्ठिभि र्दत्तद्रव्यसाहाय्येनायं ग्रंथः प्रकाश्यते ।

गद्यरचनायामस्या-न्वय एवानुसृतोऽस्ति तेनाचार्यरचनातो न किञ्चिदपि भिद्यत अतः पठन पाठन व्याख्यानादौ चायमतीवोपयोक्ष्यत इति निःसंदिग्धं प्रत्येत्यस्मच्चेतः

मुद्रणावसरे दत्तेऽप्यवधानेऽस्मिन्याः काश्चित् त्रूटयः समुपलभ्येयु स्ता यन्त्रालयदोषत स्तासां च पुंधर्मिकतया वेति विभाव्य क्षमिष्यन्ति क्षान्त्यादिगुणवन्तः सुविद्वांस इत्याशास्ते मुनिश्रीमंगलविजयाध्यापकः

शास्त्री अनुपराम शर्मा